


तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदावधीत् ॥

वि० प० अ० १६ श्लो० १०

SHRIMAN

# MAHABHARATAM

(According To Numerous Texts Collected From All Parts of India And With All Available Commentaries)

## VIRATA PARVAN IV

Edited by

MAHADEVA GANGADHAR BHATTA BAKRE

WITH

Bhavadeepa by Neelkantha, Deepika by Arjunamishra, Chaturbhuja Misriya, Durghatarthprakashini, Virodhartha Bhanjini, Bharatarthaprakasha by Sarvajnanarayana, Vishamapada Vivarana, and Lukshabharana Commentaries.

And With Numerous Readings

Printed and Published by Manilal Itcharam Desai at
THE GUJARATI PRINTING PRESS
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY

SAMVAT 1971 A. D. 1915

Rs. 4-8-0

औत्तराहबहुकोशानुसारि

# श्रीमन्महाभारतम्

उपलब्धयावट्टीकोपेतम्

तत्रेदं

## विराट पर्व ४

नैलकण्ठीयभावदीप–अर्जुनमिश्रीयदीपिका–चतुर्भुजमिश्रीया–दुर्घटार्थप्रका-
शिनी–विरोधार्थभञ्जनी–सर्वज्ञनारायणीयभारतार्थप्रकाश–
विषमपदविवरण–लक्षाभरणेत्यष्टटीकोपेतम्

पाठभेदसमेतं च

बाक्रेइत्युपाह्वगंगाधरभट्टसुतेन महादेवशर्मणा
संस्कृतम्

तच्च

**मुंबय्या**

फोर्टाख्यविभागे नवमे सासूनभवने मणिलाल इच्छाराम देसाई इत्यनेन स्वीये
'गुजराती' मुद्रणालये संमुद्र्य तत्रैव प्रकाशितम् ।

विक्रमसंवत् १९७१ | ख्रिस्तसंवत् १९१५

रू. ४-८-०

# निवेदनम् ।



ॐनमः श्रीगोपालकृष्णाय ।

## श्री ६ गुरुचरणारविन्दाभ्यां नमः ।

अथेदानीं महाभारतमुपलब्धयावट्टीकोपेतं मुद्रयितुं प्रक्रान्तं तत्रादौ विराटपर्वेदं प्रकाश्यते ।

तत्र महाभारतं नाम कौरवपाण्डवानामितिहास इत्यतिरोहितं भरतवर्षवास्तव्यस्य जनस्य तथापि तत्र या विद्वद्विद्वत्पुरुषसाधारण्येन परिदृश्यमानाऽनितरसाधारणगौरवश्रीः सा न केवलमितिहासत्वपुरस्कारेण किंतु परमपावनभगवत्तदाश्रितजनचरितामृतवर्णनमुखेन परमाप्तेन महर्षिणा व्यासेन प्रतिपादितचतुर्विधपुरुषार्थसाधनोपायविषयकत्वेनेति तस्य कार्त्स्न्येन यथार्थज्ञानस्य महाफलतया सर्वापेक्षितत्वात्परमकारुणिकाः पूर्वे विद्वांसस्तद्यथाप्रज्ञं व्याचख्युः । तासु च व्याख्यासु कतिचन टीकान्तरेषु कचित्केनचिदंशेनानूद्यमानाः कर्तृनामग्राहं निर्दिष्टाः श्रूयन्ते यथात्रैव विरोधार्थभञ्जन्यां (अ. ३ श्लो. १८) 'इति जनार्दनटीका' इति । एवं दुर्घटार्थप्रकाशिन्यां (अ. १७ श्लो. ११) 'इति वैशंपायनव्याख्या नोचिता' इति । नतूपलभ्यन्ते । नैलकण्ठीवर्जं च याः कतिपया विरलतरमंशत उपलभ्यन्ते ता अपि प्राचीनपुस्तकानां जीर्णतया, लिखनेन तदुद्धरणे प्रवृत्तिविमुखतया च जनस्यासन्नविनाशा लक्ष्यन्ते ।

अतस्ताभिः सर्वाभिः सहैव, औत्तराहबहुकोशानुसारेण महाभारतं मुद्रयितुमनाः गुजरातीमुद्रणालयाधिपः 'इच्छाराम सूर्यरामदेसाई' श्रेष्ठिवर्यस्तन्मुद्रणं चकमे । तदनुरोधेन मूलस्य टीकानां च नानादिगन्तेभ्यः पुस्तकान्याजहार । तत्र च कानिचित्प्राचीनान्येवानीतानि । येचान्यत्र स्वपुस्तकाप्रेषणनिर्बन्धिनस्तेभ्यो लेखनवेतनं दत्त्वा तत्पुस्तकानि लिपिं कारितानि । लिपिकरणस्य प्रायोऽक्षरमात्रपरिचयवत्सु कृतप्रतिष्ठत्वात् लेखनभृतेश्चाक्षरगणनायां व्यवस्थितत्वादल्पीयसा कालेन यथाधिकाक्षरविन्यासः स्यात्तथा प्रयतमानैस्तादृशैः पुरुषैः लिखितपुस्तकपरंपरायां पतितस्य प्रायस्तृतीयस्य चतुर्थस्य वा पुस्तकस्य दुष्पठत्वं नाश्चर्यकरं तादृशात्प्राचीनपुस्तकादधुना तादृशेनैव लेखकेन कृता लिपिर्दुष्पठतरा न चेदाश्चर्यम् । यानि चास्माभिरधिगतानि द्विविधान्यपि पुस्तकानि तान्युक्तां विधां नातिवर्तन्ते ।

ये च पदतदर्थावबोधने शक्तास्तेऽपि मूलस्य टीकाग्रन्थेष्वलेखनात् लेखनेऽपि सर्वेषां पद्यानामव्याख्यानात् मूले टीकायां च पद्यसंख्याबोधकानामङ्कानामनिवेशाच्च कस्य पद्यस्येयं व्याख्येति झटिति निश्चेतुमक्षमाः पुनर्व्याख्याकृदङ्गीकृतस्य पाठस्य मूलेऽलाभात् एकस्यापि अक्षरस्य व्यत्यासेन लोपेनान्यथाभावेन सर्वेषां यथासंभवं समवायेन वा शिशुमारमहामत्स्यप्रभृतिजलचरैर्महाग्रावादिसंबाधेन च दुष्प्रवेशे महार्णव इव पतिता लिपिकरणे प्रवृत्ताः प्रतिपदं व्याकुलीभवन्ति । किंच आदर्शपुस्तके अशुद्धतया निश्चितस्य वर्णसादृश्यमुपादाय शुद्धं पाठं कल्पयन् मूलपाठात्सुदूरं गच्छति यथा बृहस्पतेरपि ततः मूलपाठो मनसि नारोहेत् । अत्रेदं निदर्शनम्—अत्रैव वैराटे पर्वणि पञ्चमेऽध्याये १९ श्लो० सर्वज्ञटीकायां (इयं टीकाधुना २३ शे श्लोके गता) 'अपतन्त्या रहितं' इत्यासीत् । तच्च व्याख्यात्वेन ज्ञातमभूत् ततः कस्य पदस्येदं व्याख्यानमिति जिज्ञासया तदन्वेषणे प्रवृत्तैरस्माभिः तस्मिन्नध्याये द्वित्रिः पर्यालोचितेऽपि उक्तपदद्वयेन व्याख्यानार्हं पदमेकस्मिन्पुस्तकेऽनुपलभ्य मूलस्यादर्शान्तरे स्यादेतद्व्याख्यानुगुणः पाठ इति प्रत्याशया पञ्चषेषु पुस्तकान्तरेषु सोऽध्यायः पुनः पुनः पठित एवं पूर्वं पुस्तकान्तरैः संवादावसरे गृहीताः पाठभेदाश्च दृष्टाः, ततोऽपि न तादृशपाठलाभः । ततोऽस्य मातृभूतं काशीतो लेखयित्वानीतं पुस्तकमवलोकितम् । तत्र अपत्यंत्यारहितमित्यविच्छेदेन लिखितः पाठो दृष्टः । तेन च अपत्यंत्यारहितमित्येतदशुद्धं मत्वा अत्रत्येन विज्ञेन लेखकेन अपत्यन्त्या इतिच्छित्त्वा तत्र अपतन्त्या इति पाठः कल्पितः । वस्तुतोऽत्र प्राचीनलेखको जकारस्य वामपार्श्वपरिवर्तिनमवयवमतितनुं लिखितमवीक्ष्य तं तकारत्वेनावधार्य अपत्यमिति शब्दं चार्थवन्तं मत्वा नाशङ्कत इति मया तर्कितम् । एवं च अपत्यमित्यत्र तकारे जकारत्वेन निर्णीते त्यारहितमित्यत्रापि तकारो जकारस्थानीय इति सुज्ञानम् । इयता प्रयासेन अपज्यं ज्यारहितमिति शुद्धः पाठोऽवगतः । एवमेकादशस्य सप्तमपद्यविरोधार्थभञ्जन्यां सप्तमश्लोके 'हालु हारा' इतिस्थितम् । तदपि अर्थतो न ज्ञातं किमिदमिति तत्रापि पूर्ववत् बहुतरः क्लेशोऽन्वभावि । अन्ते च मूलपुस्तकान्तरे परिहातुकामः परिहारकामश्चेति पाठावुपलभ्य एतत्पाठद्वयमनेन तद्गतविशेषमात्रप्रदर्शनद्वारा दर्शितमिति निश्चितम् । कचिच्च सन्तीदृशान्यक्षराणि तत्र केषां वास्तवत्वमभ्युपगम्य केषां प्रामादिकत्वं

वक्तव्यमित्येतन्निर्णय एव दुष्करः यथा—अन्तिमपत्रे टिप्पण्यां दक्षिणेभागे 'यत्र प्रविश्य नगरं छद्मना न्यवसंस्तु ते' इत्यस्य द्वितीयचरणे 'छनभिनीवसंतति' इत्यत्र। एवं ७२ अध्यायस्य ३८ श्लोकस्य चतुर्भुजकृतटीकायां 'भगवत्तस्या वंद्या द्विजानामनन्ता दृष्टिर्भवित्री ममापि तेन वित्तेन अहीनना भाविनी' इत्यस्ति। तत्र 'भगवत्तस्या वंद्या' इति, दृष्टिरिति अहीननेति च तिस्रोऽशुद्धयः। तत्र वित्तदानेन दृष्टिभवनस्यासंभवात्तुष्टिर्भवित्रीति युक्तं, अहीननेत्यत्र अन्तिमनावर्णस्याविकृतत्वाङ्गीकारे तत्पूर्वस्य नस्याधिक्यं वाच्यं तथा च अहीना भाविनीति तत्र युक्तं मन्तव्यम्। एवं भगवत्तस्या वन्द्या इत्यत्रापि वर्णसाम्यात् भगवतोऽस्य वंद्यानामिति युक्तं भाति। एवं च भगवतोऽस्य वन्द्यानां द्विजानामनन्ता तुष्टिर्भविष्यति तेनवित्तेन ममाप्यहीना भाविनीतिवाक्यं पदतः शुद्धं जातं तथापि नार्थतः शुद्धम्, पूर्ववाक्ये तुष्टिहेतोरनुपादानादुत्तरस्मिन् 'तेन वित्तेन ममापि अहीना तुष्टिर्भाविनी' इत्येतन्न युज्यते वित्तस्य दानात्। किंच अत्र तेनेत्यनेन द्विजतुष्टिभवनस्यैव ग्रहणं युक्तं, तेन, वित्तेनेति पदमत्रानन्वितमेव। अथ अन्ते अहीननेत्यत्र अंत्यस्य ना इत्यस्य विकृतत्वाङ्गीकारे तत्स्थानित्वेन तकारकल्पने तेन वित्तेन अहीनता भाविनीत्यर्थः स्यात् तदानुगुण्येन प्रथमं 'भगवत्तस्यावन्द्या' इत्यत्र वत्तइत्यस्य मध्ये दकारलोपकल्पनया भगवद्दत्तस्येति जातं ततो वंद्याइत्यस्य अलग्नत्वात् औचित्यादक्षय्यत्वादिति तत्स्थानित्वेन कल्पयितुं युक्तं तथापि तस्य वंद्याइत्यक्षरसादृश्याभावात् न तस्य तत्स्थानित्वेन निश्चयः तथापि योग्यतया तत्कल्पनम्।

पूर्वं हि लेखनाधीनं ग्रन्थप्रसरणमासीत्तदा लेखनशोधनयोः सहभावासंभवाद्बहुषु पुस्तकेषु अशुद्धिसमवस्थानमवर्जनीयमासीत्। अधुना तु मुद्रणकलाविर्भावेनोर्ध्वमक्षरयोजनादर्वाक् चरममुद्रणाच्छोधनस्य शक्यत्वादशुद्धिनिरसनं सुकरतामुपगतम्। किंचात्र मुद्रणारम्भात्प्रागपि बहूनां पुस्तकानां साहाय्येन एकस्य शोधनं न दुःशकं यतस्तदुद्दिश्य व्ययीकृतस्य द्रव्यस्य सवृद्धेर्मुद्रणोत्तरं लाभनिश्चयात्। किंतु तत्र सर्वारम्भा हि दोषेणेति न्यायेन कतिचिद्दोषा अपि अनुवर्तन्ते तेहि—शोधकापराधोपनता अशुद्धयः प्रायः दृढमूला भवन्ति। उत्तरोत्तरमुद्रकाणां प्रायः पूर्वमुद्रितपुस्तकं प्रमाणीकृत्य तन्मुद्रणे प्रवृत्तेः। तत्र चानपेक्ष्य विषयकाठिन्यं संपुटगणनया देयाया अपि शोधनभृतेर्मुद्रितपूर्वत्वमात्रेणात्यन्ततुच्छतयाऽऽयतेषु पत्रेषु सूक्ष्मतराक्षरैर्मुद्रणाच्च भृत्यनुरूपं कर्माचरतोऽवाच्यत्वात् न सम्यक् शोधनं भवति। ये च ग्रन्था मुद्रितास्तान्न कश्चित् पुरातनलिखितग्रन्थात् पुनरुद्धरति। नापि लिखितान्ग्रंथांस्ते परमादरेण रक्षन्ति। प्रत्युत मुद्रितोऽयं ग्रन्थ इति बुद्ध्वा लिखितपुस्तकान्यवधीरयन्ति। जानंति हि ते मुद्रितानि पुस्तकानि शुद्धतराणि भवन्ति इति। अशुद्धेष्वपि लिखितपुस्तकेषु प्रायो द्वित्रेषु वीक्षितेषु प्राज्ञः शोधकः शुद्धं पाठं परिश्रमेणापि शक्नोत्यवबोद्धुम्। मुद्रितेषु तु सर्वेषु प्रायस्तुल्येषु न शक्या शुद्धपाठावगतिः। ततश्चार्थानवगतिः। अतो मुद्रकैस्तत्तद्विषयाभिज्ञैरेव शोधनं कार्यं तेषां भृतिश्च श्रममनुसृत्य दातव्या। एवं शोधकैरपि अनलसीभूय यावद्बुद्धिविभवं शोधने यत्नो विधेयः।

बहून्यादर्शपुस्तकान्यवलम्ब्य शोधने प्रवृत्तस्यानेकविधपाठभेददर्शनेनाशङ्का जायते यद्ग्रन्थकारेण एकविध एव ग्रन्थः कृतो लिखितश्च। तस्मादेव पुस्तकात् साक्षात्परंपरया वा पुस्तकान्तराणि लिखितानि। तत् कुतः पाठान्तराणामवकाशः इति। यदि च लेखनकाले पुनः पुनः पुस्तकालोकनप्रसंगक्लेशहानाय लेखकः श्लोकं श्लोकार्धं वा सकृद्दृष्ट्वा मनसार्थमवधार्य लिखितुं प्रवर्तते तदा क्वचित् पर्यायशब्दविन्यासः शक्यः संभावयितुम्। एवं पाठसमयेऽपि कदाचिदल्पाक्षरपरिवर्तनादिना चारुतरार्थलाभं मन्येत अथवाऽशुद्धं दृष्ट्वा पुस्तकान्तरदर्शनासुकरत्वात्स्वबुद्ध्यैवान्वययोग्यार्थकं पाठं कल्पयेद्वाचकः तत्र पदादिरूपः पाठभेदः शक्यः संभावयितुं तथापि यत्र समासेनोपवर्णितस्य विस्तरेण वर्णनरूपः प्रकारान्तरेण वर्णनरूपोऽधिकवर्णनरूपो वा पाठ उपलभ्यते तत्र कोपपत्तिः केनचित्पद्यघटनाकुशलेन पुंसा ग्रन्थकृत्कृतवर्णनेऽपरितुष्यता स एव प्रसंगो यथाभिलषितमुपवर्ण्य मध्ये प्रक्षिप्त इति विहाय कल्पनाम्। तादृशानामुपवर्णनानां समावेशे पौनरुक्त्यादयो दोषाः संभवन्ति। अस्य कतिचिदुदाहरणानि प्रदर्श्यन्ते—

कुंभघोणम. भा. वि० प० पृ. १०० अ. ५७ श्लो. ६५ 'स कर्णं कर्णिनाऽविध्यत् पीतेन निशितेन च। वासविर्द्विषतां मध्ये विव्याध परमेषुणा॥' उत्तरार्धं पुनरुक्तार्थकम्। पृ. ९८–९९ अ. ५७ श्लोको दशम एकविंशश्च एक एव। तत्र दशमोऽस्थाने। एवं ७१–७२ तमयोरध्याययोः क्रमेणैकत्रिंशाष्टषष्टितमाभ्यां श्लोकाभ्यामुक्तं वस्त्रदानमपि बोध्यम्। एवं अ. ७२ श्लो. २१–२२ 'ताडितोऽयं मया पुत्र दुरात्मा शत्रुपक्षकृत। ताडितोऽयं यतिः कङ्क इत्युक्तं तद्वचोत्तरः॥ इत्यादि बोध्यम्। वचोत्तर इत्यत्र च्युतसंस्कृतिदोषश्च।

औत्तराहकोशेषु ५२ शेऽध्याये 'अत्र या मामिका बुद्धिः' ( १६– ) इत्यादयः श्लोका भीष्मोक्तिरूपास्ते कुम्भघोणपुस्तके द्रोणोक्तित्वेन निवेशिताः। तदनुरोधेन च 'तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना। तथाहि कृत-

वान् राजा कौरवाणामनन्तरम् ' इत्यस्मिन्पद्ये भीष्मेणेत्येतत् द्रोणेनेति विपरिणमितम् । तदनन्तरं च ' भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् । सेनामुख्यान्व्यवस्थाप्य व्यूहितुं संप्रचक्रमे ॥ ' इत्येतदौत्तराहकोशवदेवास्ति पद्यम् । तत् तेषामयुक्तम् ' यतो द्रोणवाक्यं राजा कृतवांस्तत्कथं भीष्मः प्रस्थाप्य राजानमिति । किंचोक्तपद्योत्तरं कुंभघोण-पुस्तके ' द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ' इत्यर्धमस्त्यधिकं तदप्यसंगतम् । तद्धि द्रोणवाक्योत्तरमुचितं नतु ' भीष्मो व्यूहितुं संप्रचक्रमे ' इत्यस्योत्तरम् ।

कुं. अ. ७२ पृ. १२९

ववन्दे च पितुः पादौ कङ्कं चाप्युपतिष्ठत । पश्यन्युधिष्ठिरं दृष्ट्वा वक्रया चरणौ पितुः ॥ १२ ॥
अभिवाद्य ततो दृष्ट्वा कङ्कस्य रुधिरप्लुतम् । हृदयेऽदह्यत तदा मृत्युग्रस्त इवोत्तरः ॥ १३ ॥
ततो रुधिरसिक्ताङ्गमनेकाग्रमनागसम् । भूमावेकान्त आसीनं सैरन्ध्र्या समुपस्थितम् ॥ १४ ॥
ततः पप्रच्छ राजानं त्वरमाण इवोत्तरः ॥

अत्र द्वादशस्योत्तरार्धमारभ्यात्रयोदशान्तमौत्तराहकोशेषु नास्ति । तद्धि १२ स्य पूर्वार्धसहितस्य १४ स्य स्थाने उचितम् । तस्य तन्मध्ये समावेशेन ' ववन्दे च पितुः पादौ—चरणौ पितुः अभिवाद्य ' इति पौनरुक्त्यं, तथा ' कङ्कं चाप्युपतिष्ठत पश्यन्युधिष्ठिरं दृष्ट्वा वक्रया ' इति, ' उत्तरो हृदयेऽदह्यत—ततो रुधिरसिक्ताङ्गम् ' इति चासंगतम् । किंचात्र १४ शे श्लोके नास्ति क्रियापदं द्वितीयान्तेषु विशेष्यसमर्पकपदं चेति साकाङ्क्षत्वात्तस्यापर्यवसितार्थक-त्वम् । नच तस्य ' कङ्कं चाप्युपतिष्ठतेत्यनेनान्वयः; वाक्यान्तरव्यवधानात् । नाप्युत्तरश्लोकस्थेन राजानं पप्रच्छेत्यनेन । तत्र राजपदस्य विराटपरत्वेन रुधिरसिक्ताङ्गमित्यादिविशेषणाग्राहकत्वात् ।

कुं. अ. ४५ श्लो. ३–५ पृ. ८४

मनसा चिन्तयामास प्रसादं पावकस्य च । स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यचोदयत् ॥ ३ ॥
रथे वानरमुच्छ्रित्य गाण्डीवं व्याक्षिपद्धनुः । सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ॥ ४ ॥
खात्पपात रथे तूर्णं दिव्यरूपं मनोहरम् ॥ ५ ॥

अत्र ' रथे वानरमुच्छ्रित्य गाण्डीवं व्याक्षिपद्धनु. ' इत्यस्य मध्ये पाठोऽसंगतः ।

कुं. अ. ६८ श्लो. ५–६– पृ. १२२

अनाथान्दुःखितान्दीनान्कृशान्विद्धान् पराजितान् । ध्वस्तशस्त्रान्निराशांश्च नाहं हन्मि कृताञ्जलीन् ॥
भवन्तो यान्तु विस्रब्धा निर्भया अमृता यथा । मम पादरजोलक्ष्म्या जीवन्तु सुचिरं भुवि ॥ ६ ॥

वाचा दास्यमुपगतान्कुरुसैनिकान्प्रति पार्थस्योक्तिरियम् । अत्र विस्तरेण तेषां दुर्गतत्वोपपादनं तथा ' मम पादरजोलक्ष्म्या भवन्तो जीवन्तु ' इति तेषु स्वदर्पाविष्करणं च महानुभावस्य क्षुद्रत्वं गमयति । दुर्योधनादीन्प्रति तादृशोक्तिस्तु वक्तुर्वीर्यवत्तरत्वं गमयेदिति मन्यामहे । औत्तराहकोशेषु त्वत्र–पृ. १८६ अ. ६७ स्वस्ति व्रजत वो भद्रं न भेतव्यं कदाचन नाहमार्ताञ्जिघांसामि भृशमाश्वासयामि वः ॥ ५॥ इत्येतावदेवास्ति ।

एवं कु. म. वि. अ. १४ पृ. २७ श्लो. ५२ सुदेष्णां प्रति सैरन्ध्रीवचने–' गुरवो मम धर्मश्च वायुः शक्रस्तथाश्विनौ ' इति । तथा तत्रैव श्लो. ७२' यस्यापि हि शतं पूर्णं बान्धवानां भवेदपि । दुष्टचित्तश्च मां ब्रूयान्न स जीवेत्तवाग्रतः ' इति । एवं तत्रैव पृ. ९४ अ. ५५ श्लो. ४ ' यमाय प्रेषयिष्यामि सहायः स्याद्यदीश्वरः ' इत्याद्यपि न युक्तम् ।

कुम्भघोणप्रकाशितमहाभारतविराटपर्वे ४ पृ. १०३ अ. ५८ अर्जुनवाक्यं श्लो. ४९–५० ।

' इदानीमेव तावत्त्वमपयातो रणान्मम । कस्माज्जीवसि राधेय निहतस्त्वनुजस्तव ॥
यो भ्रातरं पातयित्वा कस्त्यक्त्वा च रणाजिरम् । त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः ॥ ' इति ।

अत्र यदुद्दिश्य पार्थः कर्णं प्रति ' त्वदन्यः क एवं ब्रूयात् ' इत्युक्तवांस्तदस्मात्परमेवास्ति कर्णवचस्तत्र ' ब्रवीषि वाचा यत्पार्थ ' इत्यादि—अत्र पश्यामि ते बलमित्यन्तैः ५१–५६ पर्यन्तैः पद्यैः वर्णितम् । किंचात्र ' अपयातो रणान्मम ' इत्य-पीदानीं न युक्तं, कर्णापयानस्य तत्रैतदुत्तरकालिकत्वेन वर्णनात् । न चाऽयं कर्मकरस्य पुरुषस्यानवधानप्रयुक्तो दोषः यत्क-र्णवचनोत्तरं निवेशयितुमुचितमपि भ्रमात्प्राङ्निवेशितवानिति वक्तुं युक्तम्, यतस्तत्र ' इति कर्णो ब्रुवन्नेव बीभत्सुमपराजि-तम्, अभ्ययाद्विसृजन्बाणान् ' इत्यादिना कर्णेन स्ववचनान्ते युद्धस्यैवोपक्रान्तत्ववर्णनेन तदुत्तरमर्जुनवचसोऽनवकाशात् ।

औत्तराहकोशेषु तु षष्टितमेऽध्याये इत्थमेतौ श्लोकौ १५–१६ ।

'इदानीमेव तावत्त्वमपयातो रणान्मम । तेन जीवसि राधेय निहतस्त्वनुजस्तव ।

भ्रातरं घातयित्वा कस्त्यक्त्वा रणशिरश्च कः । त्वदन्यः कः पुमान्सत्सु ब्रूयादेवं व्यवस्थितः ॥' इति ।

अत्र कर्णवचनोत्तरमेवानयोर्निवेशात्, अतः प्रागेव च ५४ अध्याये कर्णापयानस्योक्तत्वात्, एतदनन्तरं च 'इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः, अभ्ययाद्विसृजन् बाणान्' इत्यादिनाऽर्जुनेनैव स्ववाक्यान्ते युद्धोपक्रमस्योक्तत्वान्नासंगतिलेशोऽपि ।

एवं कुंभ. म. पु. विराटपर्व. प. १२८ अ. ७१ तत्र १३ शं श्लोकमारभ्य उत्तरस्य विराटप्रहितसेनया पौरैश्च मार्गे समागमो वर्णितः—

विराटनगराच्चैव गजाश्वरथसंकुलाः । योधैः क्षत्रियदायादैर्बलवद्भिरधिष्ठिताः ॥ १२ ॥
विराटप्रहिता सेना नगराच्छीघ्रयायिनी । उत्तरं सह सूतेन प्रत्ययात्तमरिन्दमम् ॥ १३ ॥
तस्मिंस्तूर्यशताकीर्णे हस्त्यश्वरथसंकुले । प्रहर्षः स्त्रीकुमाराणां तुमुलः समपद्यत ॥ १४ ॥
अर्जुनस्तु ततो दृष्ट्वा सैन्यरेणुं समुत्थितम् । सैन्यध्वजं निशम्याथ वैराटिं समभाषत ॥ १५ ॥
नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः । किंनु खल्वपयातास्ते कुरवो नगरं गताः ॥ १६ ॥
ते चैव निर्जिताऽस्माभिर्महेष्वासाः सुतेजसः । आमुञ्च कवचं वीर चोदयस्व च वाजिनः ।
जवेनाभिप्रपद्यस्व विराटनगरं प्रति ॥ १७ ॥
न तावत्तलनिर्घोषं गाण्डीवस्य च निस्वनम् । ध्वजं वा दर्शयिष्यामि अथवा स्वजनो भवेत् ॥१८॥

**उत्तर उवाच—**

सेनाग्रमेतन्मात्स्यानां गणिकाश्च स्वलंकृताः । कन्या रथेषु दृश्यन्ते योधा विविधवाससः ॥ १९ ॥
उत्तरामत्र पश्यामि सखीभिः परिवारिताम् । अनीकिन्यः प्रदृश्यन्ते हस्तिनोऽश्वाश्च वर्मिताः ॥ २० ॥
रथिनश्च पदाताश्च बहवो न च शस्त्रिणः । विराटवचनात्सर्वे संहृष्टाः प्रतिभान्ति मे ।
न च मेऽत्र प्रतीघातश्चित्तस्य स्वजने यथा ॥ २१ ॥

**वैशम्पायन उवाच—**

ततः शीघ्रं समासाद्य उत्तरं स्वजनो बहु । परस्परममित्रघ्नं सस्वजे तं समागतम् ॥ २२ ॥

**जना ऊचुः[1]—**

प्रीतिमान्पुरुषव्याघ्रो हर्षयुक्तः पुनःपुनः । दिष्ट्या जयसि भद्रं ते दिष्ट्या सूतो बृहन्नला ।
दिष्ट्या संग्राममागम्य भयं तव न किंचन ॥ २३ ॥

**उत्तर उवाच—**

अजैषीदेष ताञ्जिष्णुः कुरूनेकरथो रणे । एतस्य बाहुवीर्यं तद्येन गावो जिता मया ।
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ॥ २४ ॥
अकार्षीदेष तत्कर्म देवपुत्रोपमो युवा । एष तत्पुरुषव्याघ्रो विक्षोभ्य कुरुमण्डलम् ।
गावः प्रसह्य विजिता रणे मां चाभ्यपालयत् ॥ २५ ॥

**वैशम्पायन उवाच—**

उत्तरस्य वचः श्रुत्वा शंसमानस्य चार्जुनम् । चोदिता राजपुत्रेण जयं मङ्गलवादिनः ॥ २६ ॥
ततो गन्धैश्च माल्यैश्च धूपैश्च वसुसंभृतैः । कन्याः पार्थममित्रघ्नं किरन्त्यः समपूजयन् ॥ २७ ॥
आपूर्यमाणो माल्यैश्च गन्धैश्च विविधैः शुभैः । संपूज्यमानो लोकेन नगरद्वारमागमत् ॥ २८ ॥

---

१ एतदर्धं 'जनाऊचुः' इत्यस्मात्प्रागभवितुमर्हति ।

भेर्यश्च तूर्याणि च वेणवश्च विचित्रवेषाः प्रमदाजनाश्च ।
पुरो विराटस्य महाबलस्य निष्क्रम्य भूमिंजयमभ्यनन्दन् ॥ २९ ॥
प्रशस्यमानस्तु जयेन तत्र पुत्रो विराटस्य न हृष्यति स्म ।
संभाष्यमाणस्तु जयेन तत्र सोऽन्तर्मना: पाण्डवमीक्षमाण: ॥ ३० ॥
पुत्र्यै विराटस्य ततो वराणि वस्त्राण्यदात्पाण्डुसुतः सखीभ्यः ।
सभाजयंश्चापि समागतास्ता दृष्ट्वा जयं तच्च बलं कुमार्यै: ॥ ३१ ॥ इति ।

अत्र ( १५-१८ ) श्लोकेषु पार्थस्य आकाशे रेणुं सैन्यध्वजं च पश्यतः कुरुसेनाभ्रान्तिरुक्ता तत्र च 'आमुञ्च कवचं वीर चोदयस्व च वाजिनः' इत्यनेनोत्तरस्य सारथ्ये चोदनं 'न तावत्तलनिर्घोषं गाण्डीवस्य च निस्वनम् । ध्वजं वा दर्शयिष्यामि' इत्यनेन स्वस्यायोद्धृत्वं च ध्वनितं तदयुक्तम् । नहि कुत्रापि तादृशे समये तादृशस्य वीरस्योक्तविधां भ्रान्तिं कविरुपवर्णयति न वोद्भ्रान्तत्वद्योतिकां चेष्टाम् । एवमुत्तरवाक्येपि 'सेनाग्र्यमेतत्' ( १९-२१ ) इत्यादिषु श्लोकेषु पूर्वं पार्थस्य भ्रमं निरसितुं तद्भ्रान्तिविषये समुदाये 'उत्तरामत्र पश्यामि' इत्यादिना विशिष्य स्वजनस्य प्रत्यक्षमुक्त्वा ततः 'न च मेऽत्र प्रतीघातश्चित्तस्य स्वजने यथा' इत्यनेन स्वपुरोवर्तिनोऽर्जुनस्य स्वप्रत्यक्षार्हे वस्तुन्यप्रत्यक्षं स्वप्रत्यक्षत्वोक्तावनाश्वासं च संभाव्य तत्प्रत्यक्षायोग्यस्वचित्तवृत्तिविशेषाभावरूपहेतूपन्यासेन पुरोवर्तिधर्मिणि भ्रान्तिनिरासप्रयतनं कस्य नोपहासास्पदम् । अथ 'अथवा स्वजनो भवेत्' इत्यर्जुनेन संभावितं स्वजनत्वमेवोत्तरो द्रढयति 'सेनाग्रमेतत्' इत्यादिनेत्युक्तावपि संभावनायाः संशयरूपतया कुरुसेनात्वबुद्धेरनिवृत्तत्वात्तन्निरासार्थत्वेऽपि दर्शितदोषतादवस्थ्यात् । एवं पौरैपूत्तरं स्तुवत्सूत्तरेण यत् 'अजैषीदेव ताञ्जिष्णुः' ( २४-२५ ) इति श्लोकाभ्यां बृहन्नलां जिष्णुपदेनाभिधाय तस्याः कौरवजेतृत्वकथनं कन्याभिस्तदर्चनं चोक्तं, तदपि नानौचित्यं जहाति; राज्ञः सकाशाद्गोपनीयत्वेन योऽर्थः पार्थाय प्रतिश्रुतस्तमेव पार्थस्य पश्यतः पौरजनसमाजे स्वयं कथयत उत्तरस्य, तमनिवारयतः प्रत्युत तच्छ्रवणेन प्रहृष्टात्तस्मात्पूजामङ्गीकुर्वतः पार्थस्य च मूर्खतापातात् । एवं ३० श्लोके 'जयेन प्रशस्यमानः अन्तर्मनाः पाण्डवमीक्षमाणः न हृष्यतिस्मेति तदपि अकारणकमिव भाति । स्वयमेव बृहन्नलायाः कौरवजेतृताया उक्तत्वात् । एवमेकत्रिंशे 'पुत्र्यै विराटस्य ततो वराणि वस्त्राण्यदात्पाण्डुसुतः' इति मार्गे वस्त्रदानमुक्तं तदप्यग्रिमाध्यायस्य ६८ तमेन श्लोकेन 'इत्युक्त्वा सहसा पार्थः प्रविश्यान्तः पुरं शुभं ददौ वस्त्राणि रत्नानि विराटदुहितुः स्वयम्' इत्यनेन विरुद्धम् । नहि तानि पूर्वं दत्त्वा पुनर्दातुं शक्यानि । औत्तराहकोशेषु तु नास्त्येतन्मार्गे पौरसमागमादिवर्णनम् ।

एवं ७५ तमाध्यायान्ते-३३-३६ पर्यन्तैः श्लोकैः विराटकृतं पाण्डवानां प्रसादनमुक्तम् । ततः ७६ ध्याये 'विराटस्य वचः श्रुत्वा पार्थिवस्य महात्मनः । उत्तरः प्रत्युवाचेदमभिपन्नो युधिष्ठिरे' इत्यादिभिर्दशभिः श्लोकैरुत्तरकर्तृकपाण्डवप्रसादनावश्यकताकथनं वर्णितम् । तत्र प्रथमश्लोके यद्विराटस्य वचः श्रुत्वा उत्तरः प्रत्युवाचेत्युक्तं, तेन विराटस्य वचसा उत्तरोद्देशेन प्रयुक्तेन भवितव्यम्, प्रत्युपसृष्टवक्तेः तद्गतबोधोद्देशेन प्रयुक्तवाक्यश्रवणोत्तरकालिकतत्कर्तृकवचने एव प्रयोगात् । नत्विह तथास्ति 'दिष्टया भवन्तः संप्राप्ताः' इत्यादेः पाण्डववृत्तिबोधमुद्दिश्य प्रयुक्तत्वात् । तथा 'अभिपन्नो युधिष्ठिरे' इत्यपि उत्तरविशेषणं नोपपद्यते, अक्षताडनेन विराटस्यैव तथात्वात । एवं द्वितीयश्लोके 'प्रसादनं प्राप्तकालं पाण्डवस्याभिरोचये' इत्येवं विराटं श्राविते पाण्डवप्रसादनरूपे स्वाभिप्रेतार्थे सप्तमश्लोकस्थेन 'प्राप्तकालं च मे मतम्' इत्यनेनोत्तरेण स्वेनैवानुमतिप्रकाशनमपि न युक्तम् । एवं 'राजंस्त्वमसि संग्रामे गृहीतस्तेन मोक्षितः' इत्यादीन्हेतूनुपन्यस्य विराटस्योत्तरेण पाण्डवप्रसादने प्रवर्तनमपि नातिरमणीयम् । औत्तराहकोशेषु ७१ अध्याये—

तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् । उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ २२ ॥
प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये । उत्तरां च प्रयच्छामि पार्थाय यदि मन्यसे ॥ २३ ॥

इत्यादिना युधिष्ठिरेऽक्षताडनेन कृतापराधतया तत्प्रसादनं कामयानो विराटस्तत्र पुत्रानुमतिमापृच्छ्य, त्रिगर्तगृहीतस्यात्मनो भीमेन मोचनं च विचिन्त्य, युधिष्ठिराय सकोशबलदण्डं राज्यं निवेदितवानित्युक्त्वा ततः—

समुपाघ्राय मूर्द्धानं संश्लिष्य च पुनः पुनः । युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ ॥

इति पाण्डवेषु पुत्रवद्वात्सल्येन व्यवहार उक्तो वृद्धस्य विराटस्य । कुम्भघोणप्रकाशितेतु अ. ७६-श्लो० १२

ततो विराटः सामात्यः सहपुत्रः सबान्धवः । उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ॥

भूमौ निपतितस्तूर्णं पाण्डवस्य समीपतः । प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ॥
प्रच्छन्नरूपवेषत्वात् नाभिर्दिष्टस्तृणैर्वृतः । शिरसाभिप्रपन्नोऽस्मि सपुत्रपरिचारकः ॥

इत्यादिना वृद्धस्य तस्य युधिष्ठिरे, सामंतस्य सार्वभौमे उचितो व्यवहारो दर्शितः । अत्र किमप्युचितं भवतु परमेकतरस्य कल्पितत्वमविवादम् । दिगियं यावदादर्शगतविशेषगर्भीकरणव्यसनितादोषाणाम् ।

अस्तु नामैतत् । सकलटीकामुद्रणप्रयोजनेषु प्रथमं तावत् प्राचीनानां कृतीनां रक्षणम्, द्वितीयं तु एकेन अव्याकृतेपि पद्येऽपरकृतव्याख्यानसत्त्वादर्थबोधे सौकर्यम् । भिन्नपाठेषु व्याख्यालाभसंभवश्च । नचात्र काव्यादीनामिव प्रतिश्लोकं प्रतिपदं चास्ति एकमपि व्याख्यानं येन एकेनैव सकलप्रयोजननिर्वाहे इतरेषामप्रयोजनकत्वम् । किंतु कश्चिदेकं पद्यं व्याचष्टेऽपरोपरम् । एवमेकस्मिन्पद्येपि एक एकं पदं व्याचष्टेऽपरोऽपरं यद्व्याख्येयं मन्यते । इत्यतोऽस्ति सर्वेषां व्याख्यानानां मुद्रणमुचितम् । एषु व्याख्यानेषु नीलकण्ठचतुर्धरकृतं व्याख्यानं सर्वेषु पर्वसूपलब्धत्वादिदानीन्तनैर्भारतवाचकैः परिचितत्वाच्च प्रथममेव निवेशितम् ।

अर्जुनमिश्रकृतव्याख्या तु कतिपयेष्वेव पर्वसूपलब्धा न सर्वेषु । सापि वङ्गदेशात्प्राचीनवङ्गाक्षरलिखितपुस्तकात् समुद्धृत्य समानीता कतिपयेषु च पर्वसु दक्षिणदेशात् । एवं कल्याणनगरादर्जुनमिश्रकृतटीकोपेतत्वबुद्ध्या एकं महाभारतपुस्तकमानीतं तत्र कतिपयेषु पर्वसु अर्जुनमिश्राणां टीकोपलब्धा कतिपयेषु चतुर्भुजमिश्राणां कतिपयेषु च सर्वज्ञनारायणस्य । एवं काशीतोऽपि समानीतेषु पुस्तकेषु दृश्यते व्यामिश्रभावः । अस्मिन्नेव पर्वणि या सर्वज्ञनारायणनाम्नाऽङ्किता टीका तस्यामपि नास्य पर्वणो व्याख्यारम्भेऽन्ते वा कर्तृनामनिर्देशोऽस्ति किंतु सा सभापर्वारम्भ्यैवास्ति तत्र च प्रारम्भे कर्तृत्वेन सर्वज्ञोपाभिधनारायणस्य निर्देशोऽस्ति इति लेखकेन सा सर्वापि सर्वज्ञनारायणकृतत्वेन निर्दिष्टा । तत्प्रत्ययेन चास्माभिरपि सा तथैव गृहीता । अत्रैव उद्योगपर्वणोऽपि अस्ति टीका अनिर्दिष्टकर्तृका सा कल्याणनगरादानीतपुस्तके वर्तमानया आदावन्ते च सर्वज्ञनारायणकृतत्वेन निर्दिष्टया टीकया सह संवादयितुमारब्धा न संवादमाप्नोत् । तेन भवति संदेहः सा सर्वज्ञनारायणस्योत अन्यस्येति । तेन विराटपर्वस्थटीकायामपि स एव संशयः पदमादधाति । किं चैषा प्रायः सर्वापि नीलकण्ठकृतटीकायामन्तर्भवति । ततोऽपि संशयः नैलकंठीत एवोद्धृत्य संक्षेपेणेयं केनचिल्लिखिता सिद्धान्तकौमुदीत इव लघुकौमुदी उत इमामेव नीलकण्ठः पल्लवयांचकारेति । ततः सभापर्वस्था टीका संशयापनोदाय नीलकण्ठ्या सह समालोकिता यस्या आदौ सर्वज्ञनारायणस्य कर्तृतां बोधयन् श्लोको दृश्यते । सा हि विराटपर्वटीकेव नीलकण्ठकृतटीकायां प्रायेण सर्वापि अन्तर्भवति । अतो न निर्णयमधिगच्छामः । विरोधार्थभञ्जनी तु संक्षिप्ततरा प्रायः प्रत्यध्यायं वर्तते । अनेन च टीकाकृता पाठभेदा अपि दर्शिताः ते च प्रायः टीकाकृद्भिरंगीकृता एव टीकाकृन्नामाद्याक्षरेण संकेतकरणात् । तेच अ. च. दे. इत्यादयः अर्जुनमिश्राः चतुर्भुजमिश्रा देवबोधा इत्यादीनाम् । अत्र शे इति शेषार्थकम् । क्वचित् २ इति अङ्को दृश्यते स पुस्तकान्तरस्थपाठस्य सूचक इति भाति । क्वचित् ( स्त्र ) इति दृश्यते तत्संकेतविषयं नाधिगच्छामः । एवं विमलबोधकृतविषमश्लोकी दुर्घटार्थप्रकाशिका वा टीका केषुचिद्विषमश्लोकेष्वस्ति । इयं च सहस्रत्रितयश्लोकपरिमिता । विषमपदविवरणं च विराटपर्वण्येवोपलभ्यते । अत्र च पृ. १०५ श्लो. ७ चुम्वां पातयन्' इतिप्रयोगदर्शनादस्याः कर्ता गुर्जरदेशस्थ इति अनुमीयते । एवं लक्षाभरणाख्या टीका दक्षिणदेशात् लिपिंकृत्वा आनीता सा च न औत्तराहकोशपाठानुकूला । नापि कार्त्स्न्येन दाक्षिणात्यकोशपाठानुकूला । अत्र च दाक्षिणात्यकोशस्थपाठानां संग्रहो न शक्य इति औत्तराहकोशगतानां यावतां पद्यानां टीका तत्रोपलब्धा तावतां संगृहीता ।

---

१ बेंगालऑसिआटिक सोसायटीमण्डलस्य लिखितपुस्तकसूचीपत्रे—

प्रागुपायस्य संशुद्धिर्मयाकारि यथामति । मोक्षधर्मार्थविवृतौ कः संबन्धोस्ति संप्रति ॥ १ ॥
पितुः सदुपदेशेन विद्वद्भ्रात्रनुरोधतः । प्राङ्निबन्धस्य संशुद्धौ कृतो यत्नोऽधुना मया ॥ २ ॥
अल्पाधीतिलिपिग्रन्थशुद्धाक्षरसमुच्चयः । विदुषां हेलया प्राच्यग्रन्थो नाशमुपेयिवान् ॥ ३ ॥
बुधैर्विमत्सरैरत्र क्षन्तव्यं मम चापलम् । मूलग्रन्थोऽपि सोपायो लिपिभूषणवाग्मितः ॥ ४ ॥
गौडेश्वरमहामन्त्रिश्रीमद्विश्वेशरायतः । लब्धानुज्ञेन लिखिता मोक्षधर्मार्थदीपिका ॥ ५ ॥
श्रीलश्रीमन्तमित्रेण लिखितमिदं शकाब्दः १४५६ ॥

इति दृश्यते । तेन वत्सराणां चतुःशत्याः प्रागपि भारतस्यार्जुनमिश्रकृतटीकायाः शुद्धपुस्तकस्य दुर्लभत्वं प्रतीयते ।

एवमष्टाभिष्टीकाभिः सनाथीकृतस्यास्य विराटपर्वणः संशोधने प्रवृत्तस्य मे नीलकण्ठ्या लिखिते द्वे, चतुर्भुजमिश्रकृतायास्त्रीणि, दुर्घटार्थप्रकाशिन्या द्वे, इतरासामेकैकं पुस्तकमवलम्बनमभूत्। तत्र चतुर्भुजमिश्रकृतटीकायास्त्रीण्यपि पुस्तकानि प्रतिपत्रं तुल्यश्लोकानि तुल्यटीकानि चासन्। नैलकण्ठीयभावप्रकाशवर्जं सर्वासां टीकानां लेखकप्रमादेन पाठतश्च्युतत्वादादर्शपुस्तकानां चाबहुत्वात्केवलं मननमाश्रित्य शोधनाद्यत्र महता प्रयासेनापि न शुद्धपाठावगमस्तत्र यथादर्शमेव रक्षितं तत्सुधियः शोधयन्तु। प्रीणीताच्चानेन कर्मणा सर्वान्तर्यामि श्रीकृष्णाख्यं परं ज्योतिरित्याशास्ते—

वाके इत्युपाह्वो गङ्गाधरभट्टसूनुः महादेवशर्मा।

---

## एतन्मुद्रणाय संपादितानां मूलस्यादर्शपुस्तकानां स्थानादि.

१ ( अ ) जगदीश्वरमुद्रणालये मुद्रितम्।

२ ( क ) कुम्भघोणनगरे मध्वविलासे प्रकाशितं दाक्षिणात्यकोशानुसारि मुद्रितम्।

३ ( ख ) पूणानगरं डेक्कनकॉलेज्. लिखितम्।

४ ( ग ) डेक्कनकॉलेज् लिखनसंवत् १४९३.

५ ( घ ) " " " " १५९६.

६ ( ङ ) " " देशमुखरघोजीपंतानाम्। लिखनसमयः शकः १६०६.

७ ( च ) " " चतुर्भुजकृतटीकासहितम्।

८ ( छ ) काश्मीरनगरादानीतं नीलकण्ठकृतटीकासहितम्। नीलकण्ठेन व्याख्याता अपि मुद्रितेषु लिखितेषु च पुस्तकान्तरेष्वनुपलभ्यमानाः पाठा अत्रोपलब्धाः।

९ ( ज ) कल्याणनगरादानीतम्। सर सुभेदाराणाम्। जीर्णं, लिखनसमयो न लिखितः।

१० ( ण ) डेक्कनकॉलेज् लायब्ररी. लिखनसमयः शकः १६१६.

११ ( डं ) " " " मूलस्थानं डंबालसंस्थानम्। चतुर्भुजटीकासहितम्। लिखनकालः सं. १६७७ अत्रान्ते 'शांडिल्यलक्ष्मणकृतो विराटार्थप्रकाशः' इति लिखितम्।

१२ ( दे ) श्री० बडोदरामहाराजानां देवागारस्थम्। लिखितम्। नीलकण्ठीसहितम्।

१३ ( बि ) बिकानेरनगरादानीतम्। लिखनकालः सं. १५९६.

१४ ( म ) मनःसुखराम सूर्यराम त्रिपाठिनाम्। नडियादलायब्ररीस्थम्। लिखनसंवत् १८६५.

१५ ( व ) गुर्जरदेशादानीतम्। अस्यान्ते—'स्वस्ति संवत् १४७८ वर्षे श्रावणवदि चतुर्दश्यां रविदिनेऽद्येह श्रीप्रह्लादपुरे सकलविद्वज्जनोपकृतये गोवर्धनो विराटपर्वपुस्तकमलिखत्' इति लिखितम्॥ अत्र पार्श्वतो विषमपदविवरणं पाठभेदाश्च संगृहीताः।

१६ ( वि ) विश्रामबाग ( पूणा ) डेक्कनकॉलेज् लिखनसमयः शकः १६१६.

---

# विज्ञापनम् ।

भो महाशयाः ! विदितमेवैतद्भवद्भिर्यदस्माभिर्महाभारतमुपलब्धयावट्टीकोपेतं मुद्रयितुं प्रक्रान्तमिति । तदर्थं च वयं यद्यपि यां कांचिद्यत्र कुत्रापि स्थितां महाभारतटीकां शृणुमस्ततस्ततस्तस्याः संपादनाय महान्तं यत्नमातिष्ठामहे, तथापि दुर्घटार्थप्रकाशिकां नैलकण्ठीयभावप्रकाशं च वर्जयित्वाऽखिलभारतव्याख्यानानां विलुप्तप्रायत्वान्न तेष्वेकतरस्यापि कार्त्स्न्येनोपलब्धिः । किंचोपलब्धानामप्यशुद्धिप्रचुरतया त्रुटिततया च तत्परिशोधने महान्तं क्लेशमनुभवामः । त्रुटितस्थले चान्तरेण पुस्तकान्तरदर्शनं नास्ति कश्चिदभ्युपायो विलुप्ताक्षरपरिज्ञाने इत्यधिगतानामप्यस्त्यादर्शान्तरापेक्षा । एकदेशेनोपलब्धानां तु सुतरामेकदेशान्तरे सा । संभावयामश्चाद्यत्वेऽपि पूर्वेषां पण्डितानां धनिनां च निवेशनेषु तद्वंश्यैः कालानुसारेण व्यवसायान्तरव्यापृतैरुपेक्षितानां बहूनां पुरातनलिखितपुस्तकानां सद्भावम् । तद्यदि भवन्तः स्वपरभवनस्थे प्राचीनलिखितपुस्तकसंभारे दृष्टं भारतव्याख्यानैकदेशमप्यस्माञ्ज्ञापयेयुस्तदा न केवलमस्माकं किं तु निखिलस्य जगतोऽपि महदुपकृतं स्यात् । एवं ग्रन्थकृतामपि ग्रन्थविनाशेन विनश्यद्यशः परिरक्षितं स्यादिति विज्ञापयति—

गुजरातीमुद्रणालयाधिपतिः ।

# श्रीमन्महाभारतम् ।

## विराटपर्व ४

### ( पाण्डवप्रवेशपर्व १ )

#### प्रथमोऽध्यायः १

पाण्डवानामज्ञातवासप्रकारविषयके जनमेजयप्रश्ने वैशम्पायनस्योत्तरम् ॥ १ ॥ युधिष्ठिरार्जुनयोः संवदतोर्विराटगृहवासनिश्चयः ॥ २ ॥ विराटगृहे स्वकर्तव्यकथनपूर्वकं युधिष्ठिरस्य भीमं प्रति प्रश्नः ॥ ३ ॥

श्रीगणेशाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥

नीलकण्ठी टीका—

श्रीमद्गोपालमानम्य प्राचीनाचार्यवर्त्मना ।
विराटपर्वप्रद्योती भावदीपो वितन्यते ॥

तत्र पूर्वस्मिन्पर्वणि 'दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता । द्वे पूर्वे मध्यमे द्वे च द्वे चान्त्ये साम्परायिके' इति " शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति " इति श्रुतिप्रसिद्धेष्वात्मदर्शनसाधनेषु शमादिषु रक्तः, षडूर्मिलक्षणां षट्पदीं जातमात्रस्याशनापिपासे प्ररूढस्य शोकमोहौ वृद्धस्य जरामृत्यू इति लोके " योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति " इति वेदे च प्रसिद्धां जयतीत्युक्तं तां जितवता त्वव्यक्तलिङ्गेन स्थेयमात्यन्तिक्यां कृतकृत्यतायां तु व्यक्तलिङ्गेनापि भाव्यमित्येतत्पाण्डवाचरणप्रदर्शनेन दर्शयितुं विराटपर्वारभते । तत्र 'वर्षं त्रयोदशमिदं मत्प्रसादात्कुरूद्वहाः । विराटनगरे गूढा अविज्ञाताश्चरिष्यथ' इति प्राक्कथितधर्मवाक्यार्थमनुवदन् जनमेजय उवाच—कथमिति । पूर्वः पिता परीक्षित् तस्य पितामहाः अज्ञातवासं यथा स्यात्तथा कथमुषिताः वासं कृतवन्तः । समूलघातं न्यवधीदितिवत्कषादित्वाद्वसतेरनुप्रयोगः । वासमिति णमुलन्तम् ॥ २ ॥

अर्जुनमिश्रकृता दीपिकाख्या टीका—

पाराशर्यवचःपारावारकन्दोलकेलयः ।
जीवयन्तु भवज्वालानलदग्धमिदं जगत् ॥

जनमेजय उवाच—

कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ २ ॥

वेदव्यासवचोवीचिविचारविषये विशत् ।
वक्रमीति(?)न वा कस्य कस्यापि कलुषं मनः ॥
वचनं मुनिवर्यस्य व(र?)चनं क्षीरनीरधेः ।
अञ्जनं सज्जनदृशां व्यञ्जनं ब्रह्मसंविदः ॥
वीचयो भववाहिन्यास्तावत्स्फुरदवीचयः ।
यावद्विचार्य नो वेद वेदव्यासवचोऽर्थवत् ॥
वेदव्यासमुखाम्भोजगलितं वाङ्मयामृतम् ।
संभोजयन्तं भुवनं देवबोधं भजामहे ॥
अज्ञानतिमिराम्भोदमुक्तये व्यासभानवे ।
नमो नवरसस्निग्धवाणीकिरणमालिने ॥
श्रीदेवबोधपादादितातोपदेशसेविना ।
क्रियतेऽर्जुनमिश्रेण विराटपर्वदीपिका ॥

कथं विराटनगरे इत्यादि सभां विराटस्य ततोऽभिजग्मुरित्यन्तस्य विराटपर्वणः चतुर्वर्गसाधनीभूतं सत्यं द्यूतच्छलेन प्रयुक्तायामपि अज्ञातवासकर्तव्यताप्रतिज्ञायां न हातव्यमित्यर्थः । तथा विराटनगरे इत्यादेः सर्वे वेतनादि(?)त्यन्तस्य—अज्ञातवासनिर्वाहायाज्ञातचर्यापरिग्रहः, तत्र च यां कामवस्थामुपगतस्योपजीविनः प्रभुप्रीणनं श्रेयःसाधनमिति विराटप्रीतये युधिष्ठिरादीनां सभास्तारा [दिभवनम्] इति तात्पर्यार्थः । ननु जनमेजयस्य पाण्डवाः कथं पितामहा इत्युच्यते ममपूर्वः पिता परीक्षित्तस्य पितामहास्ते भवन्ति । ममेत्यव्ययमलुक्समासो वा । अज्ञातवासमुषिताः अज्ञातवासं कुर्वन्तः ॥ २ ॥

---

१ दे. क. वि. ख. घ. च. सरस्वतीं व्यासं ततो । व. प्रथमश्लोकादुत्तरं—यत्राश्रिता बहुगुणा विषयः क्रियाणां यश्चेतसां च वचसां च परा प्रतिष्ठा । तं लोककारणमधीश्वरमीश्वराणां नारायणं सुतपसामयनं प्रपद्ये ॥ इत्यधिकः । २ ख. अलक्ष्यमाणमुषिताः; घ. व. अज्ञातवासमवसन् ।

पतिव्रता महाभागा सततं ब्रह्मवादिनी ।
द्रौपदी च कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत् ॥ ३ ॥

**वैशम्पायन उवाच—**

यथा विराटनगरे तव पूर्वपितामहाः ।
अज्ञातवासमुषितास्तच्छृणुष्व नराधिप ॥ ४ ॥
तथा स तु वराँल्लब्ध्वा धर्मो धर्मभृतां वरः ।
गत्वाऽऽश्रमं ब्राह्मणेभ्य आचख्यौ सर्वमेव तत् ॥ ५ ॥
कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।
अरणीसहितं तस्मै ब्राह्मणाय न्यवेदयत् ॥ ६ ॥
ततो युधिष्ठिरो राजा धर्मपुत्रो महामनाः ।
संनिवर्त्यानुजान्सर्वानिति होवाच भारत ॥ ७ ॥
द्वादशेमानि वर्षाणि राज्यविप्रोषिता वयम् ।
त्रयोदशोऽयं संप्राप्तः कृच्छ्रात्परमदुर्वसः ॥ ८ ॥
स साधु कौन्तेय इतो वासमर्जुन रोचय ।
संवत्सरमिमं यत्र वसेमाविदिताः परैः ॥ ९ ॥

**चतुर्भुजमिश्रकृता टीका—**

अपगुणोऽपि रजः समुपाश्रितः
सृजति योऽवति सत्त्वमयोऽखिलम् ।
तम उपेत्य नयत्यपि संक्षयं
तमहमद्वयमीश्वरमाश्रये ॥
विराटपर्वतात्पर्यप्रकाशनपटीयसी ।
श्रीचतुर्भुजमिश्राणामियं जयति भारती ॥

इदानीं क्रमप्राप्तमज्ञातवासवृत्तान्तावच्छिन्नं चतुर्थं पर्वोपक्रमते—कथमिति ॥ २ ॥

**सर्वज्ञनारायणकृता भारतार्थप्रकाशटीका—**

पूर्वपितामहाः परीक्षितस्य पितामहाः । उषिताः वासं कृतवन्तः ॥ २ ॥

**विरोधार्थभञ्जनी टीका—**

भगवन्तं नमस्कृत्य भक्तकामप्रदं हरिम् ।
विराटपर्वव्याख्यानं रामकृष्णेन तन्यते ॥

अथ धर्मादेव विपत्तित्त्राणमिति परमविपत्तावपि धर्मो न त्याज्य इति च बोधयितुं युधिष्ठिरप्रतिज्ञाप्रतिपालनरूपैककार्यत्वसंगत्या भगवान् श्रीकृष्णद्वैपायनस्तुरीयं पर्वारभते—जनमेजय इत्यादि । पूर्वस्य पितुः पितामहाः पितामहात्पूर्वे इति केचित् । अज्ञातवासं यथा स्यात् । तद् ब्रूहि इति शेषः ॥२॥

**विषमपदविवरणम्—**

मम पूर्वस्य परीक्षितस्य पितामहाः ॥ २ ॥

[ नील० ] ब्रह्मवादिनी श्रीकृष्णकीर्तनशीला ॥ ३ ॥ अरणीसहितं अरण्योर्मिथुनम् । अरणीसहितं मन्थमिति पाठे मन्थोऽग्निनिर्मथनदण्डस्तमरणीभ्यां सहितं ब्राह्मणाय न्यवेदयदित्यर्थः ॥ ६ ॥ संनिवर्त्य एकत्र आनीय । अत्र वर्तिर्गत्यर्थः 'न च पुनरावर्तते' इत्यादिप्रयोगदर्शनात् । संनिकृष्येति पाठेऽपि स एवार्थः ॥ ७ ॥ अयं संवत्सरः, संवत्सरमिममिति वाक्यशेषात् ॥ ८ ॥ वत्स्याम इति पाठे अविदिता इतिच्छेदः ॥ ९ ॥

[ अर्जु० ] अरणीसहितं अरणीयुग्मं तस्मै ब्राह्मणाय । यस्यारणीसहितं मृगरूपी धर्मो जहार तस्मै इति योज्यम् । अरणीसहितं मन्थमिति पाठे अग्न्युत्पत्तिस्थानमरणी व्यावर्तनदण्डो मन्थ इति भेदः । पूर्वमुक्तमारण्यके च अरणीसहितं मन्थं ब्राह्मणस्याग्निहोत्रिण इति ॥६॥ संनिवर्त्य क्रोधादिति शेषः । संनिवेश्य इति पाठे यथास्थानं वेशयित्वा । संनिकर्ष्य इति पाठः प्रायशः । समीपमानीयेत्यर्थः । संनिपूर्वः कृषधातुः समीपवचनः । इतिहोवाचेति । इतिहाव्ययं वक्ष्यमाणार्थप्रकरणं प्रकाशयति । अव्ययानामनेकार्थत्वात् ॥ ७ ॥ यत्रेमा वसतीः सर्वे वसामोऽविदिता इति पाठः । इमा षष्ट्यधिकशतत्रयावच्छिन्ना वसती रात्रीः यत्र यस्मिन् देशे वसामो वत्स्यामः संप्रत्येव 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । 'वसती रात्रिवेश्मनोः' इत्यमरः । संवत्सरमिमं यत्रेति पाठे स्पष्टार्थः ॥९॥

[ चतु० ] तथा आरणेयोक्तप्रकारेण ॥ ५ ॥ अरणीसहितमरणीयुगुलं तस्मै अरणीस्वामिने ॥ ६ ॥ संनिवर्त्य अर्थान्तराद्व्यावृत्य संनिकर्षमानीयेति वा । इति वक्ष्यमाणम् ॥ ७ ॥ विप्रोषिता अपसृताः ॥ ८ ॥ इतः अरण्यवासादनन्तरम् । इमाः अज्ञातवाससंबन्धिनीः वसतीः रात्रीः । संवत्सरमिमं यत्रेति वा पाठः ॥ ९ ॥

[ सर्व० ] धर्मात् यक्षरूपिणः ॥ ५ ॥ अरणीसहितं मथनदण्डम् ॥ ६ ॥ संनिवर्त्य एकत्रानीय ॥ ७ ॥ कृच्छ्रः कष्टरूपः ॥ ८ ॥

[ विरो० ] अरणीसहितं हितं (?) तत्कथयित्वा अरणी अरण्यौ न्यवेदयत् । अरणीयुगुलमिति पाठः अरणीसहितं मन्थम् ॥ ६ ॥ संनिवर्त्याकृष्य ॥ ७ ॥ दुर्वसः खल्प्रत्ययः ॥ ८ ॥ इतोऽस्मिन्वर्षे । संवत्सरमिमं यत्र वत्स्यामो, यत्रेमा वसतीः सर्वे वसामः ॥ ९ ॥

[ विष० ] अरणीयुग्मम् उत्तरारण्यधरारण्यौ ॥ ६ ॥ संघटय्य एकान्ते आनीय ॥ ७ ॥

३ क. सततं सुखभागिनी । क. तृतीयादुत्तरं—ते च ब्राह्मणमुख्याश्च सूतपौरोगवैः सह । अज्ञातवासमुषिताः कथं च परिचारकाः ॥ इत्यधिकः । ४ दे. विराटभवने तत्र । क. मुषितास्तावद्वक्ष्यामि तच्छृणु । ५ दे. ज. छ. धर्माद्धर्मभृतां वरः । ६ ख. स्रहितं सर्वं ब्राह्मणाय । ७ ख. भ्रातॄन्कृष्णां च संप्रेक्ष्य; ज. संनिकृष्यानुजान्सर्वान् । ८ ङ. वर्षाणि स्वराष्ट्रात्प्रोषिता वयम्; वि. क. ख. घ. राष्ट्राद्विप्रोषिता वयम् । व. त्रयोदशमिमं प्राप्तं छन्नं तदब्रूहि चार्जुन । ज. ङ. च. संप्राप्तः कृच्छ्रः परमदारुणः । ङ. परमदुर्घटः । ९ ङ. ज. यत्रेमा वसतीः सर्वा वत्स्यामोऽवि० । व. सर्वा निहरामो निरामयम् ।

अर्जुन उवाच—

तस्यैव वरदानेन धर्मस्य मनुजाधिप ।
अज्ञाता विचरिष्यामो नराणां नात्र संशयः ॥ १० ॥
तत्र वासाय राष्ट्राणि कीर्तयिष्यामि कानिचित् ।
रमणीयानि गुप्तानि तेषां किंचित्स्म रोचय ॥ ११ ॥
सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् ।
पञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः ॥ १२ ॥
दशार्णा नवराष्ट्राश्च मल्लाः शाल्वा युगंधराः ।
कुन्तिराष्ट्रं च विपुलं सुराष्ट्रावन्तयस्तथा ॥ १३ ॥
एतेषां कतमो राजन्निवासस्तव रोचते ।
यत्र वत्स्यामहे राजन्संवत्सरमिमं वयम् ॥ १४ ॥

युधिष्ठिर उवाच—

श्रुतमेतन्महाबाहो यथा स भगवान्प्रभुः ।
अब्रवीत्सर्वभूतेशस्तत्तथा न तदन्यथा ॥ १५ ॥
अवश्यं त्वेव वासार्थं रमणीयं शिवं सुखम् ।
संमन्त्र्य सहितैः सर्वैर्वस्तव्यमकुतोभयैः ॥ १६ ॥
मत्स्यो विराटो बलवानभिरक्तोऽथ पाण्डवान् ।
धर्मशीलो वदान्यश्च वृद्धश्च सततं प्रियः ॥ १७ ॥
विराटनगरे तात संवत्सरमिमं वयम् ।
कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत ॥ १८ ॥
यानि यानि च कर्माणि तस्य वक्ष्यामहे वयम् ।
आसाद्य मत्स्यं तत्कर्म प्रब्रूत कुरुनन्दनाः ॥ १९ ॥

अर्जुन उवाच—

नरदेव कथं तस्य राष्ट्रे कर्म करिष्यसि ।
विराटनगरे साधो रंस्यसे केन कर्मणा ॥ २० ॥

[ नील० ] नराणामज्ञाता इति संबन्धः ॥ १० ॥ प्रभुर्धर्मः । ' यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् । न वो विज्ञायते कश्चिन्त्रिषु लोकेषु कश्चन ' इत्यब्रवीत् ॥१५॥ यद्यप्येवं तथापि कचित्प्रच्छन्नतया वस्तव्यमेवेत्याह—अवश्यं त्वेवेति ॥ १६ ॥ वक्ष्यामहे निर्वोढुं शक्ष्यामहे इति वहेरिदं रूपम् । प्रब्रूत प्रत्येकमिति शेषः ॥ १९ ॥

[ अर्जु० ] अज्ञाता नराणामित्यन्वयः ॥ १० ॥ रोचय रुचिमिमां कुरु ॥ ११ ॥ परितः कुरून् परिशब्दयोगाद्द्वितीया ' समन्ततस्तु परितः ' इत्यमरः ॥ १२ ॥ अवन्तिरुज्जयिनी ॥१३॥ रमणीयं रुचिरहेतुत्वात्, शिवं कल्याणत्वात्, सुखं पुण्यहेतुत्वात् ॥ अकुतोभयैः नास्ति कुतोऽपि भयं येषां तैरस्माभिः ॥१६॥ वदान्यो दानशीलः ॥ १७॥ यानि यानि च कर्माणीत्यादि । अत्र कुरुनन्दना इति संबोधनदर्शनाद्युष्मच्छब्दो लभ्यते, स इति दर्शनाद् य इति च । तदयमर्थः—हे कुरुनन्दनाः युष्माकं मध्ये यत्कर्म कर्तुं यो योग्यो भाजनं स तद्ब्रवीतु ब्रूयात् । समये वेति शेषः । न केवलं तत् कर्म ब्रवीतु अपितु तस्य विराटसंबन्धितायां यानि यानि कर्माणि वक्ष्यामहे कथयिष्यामः । यो यत् कर्तुं योग्यः स तानि ब्रवीतु इति । यानीति संबन्धात् तानीति पदं लभ्यते ॥ १९ ॥

[ चतु० ] सः धर्मः ॥ १५ ॥ वदान्यो दाता दक्षिणश्च ॥१७॥

[ सर्व० ] भगवान् व्यासः । अब्रवीत् विराटनगरे वस्तव्यमिति ॥ १५ ॥ वक्ष्यामहे निर्वोढुं शक्ष्यामहे ॥ १९ ॥

[ विरो० ] नराणामज्ञाताः ॥ १० ॥ प्रभुर्धर्मः ॥ १५ ॥ सुखं शुभम् ॥ १६ ॥ यानि यानि अर्थात्तानि वक्ष्यामहे । वह प्रापणे । किंतु यः यत्कर्तुं योग्यः स ब्रवीतु । किमुचितम् (?) ॥ १९ ॥

[ विष० ] कुरून् देशान् परितः वर्जयित्वेत्यर्थः । इह परिर्वर्जने ॥ १२ ॥ पुण्यहेतुत्वात्सुखम् । कल्याणहेतुत्वात् शिवम् ॥ १६ ॥ धर्मशीलत्वाद्द्रौपद्याः सुखवासः । वृद्धत्वाद्युधिष्ठिरस्य । वदान्यत्वाद्भीमार्जुनयमानामिति ॥ १७ ॥

*वादिराजकृतं लक्षाभरणम्—

यानि यानीह कर्माणि तस्मै चक्रमहे वयमित्यत्र तस्मै

१० ख. अलक्ष्या विचरिष्यामो । ङ. वि. ख. घ. च. नराणां भरतर्षभ । ११ ङ. व. किंतु वासाय । १३ च. कुन्तिराष्ट्रं सुविस्तीर्णं । १५ ङ. वि. ख. घ. च. वि. एवमेतन्महाबाहो; दे. ङ. विधास्यामि महाबाहो । १६ व. किंतु धर्म्यं सुबह्वन्नं रमणीयं शिवं शुभम् । घ. सुसमिद्धं शिवं सुखम् । व. षोडशादुत्तरं—देशः पुण्यः समुद्दिष्टः सर्वबाधाविवर्जितः । इत्यधिकम् । १७ ङ. च. वयस्यस्य वचो हीदं समहर्षत पाण्डवान् । ङ. वि. ज. व. अभिरक्षेत्स पाण्डवान् । ज. वृद्धश्च सुमहाधनः ; व. सुमहाबलः । १९ च. कर्माणि तस्य वक्ष्यामहे वयम् ; व. तस्य शिष्यामहे वयम्; ग. घ. तस्य शिक्ष्यामहे वयम् । ख. ग. घ. च. कर्तुं यो यत्स तत्कर्म ब्रवीतु; व. कर्तुं यो यस्य यत्कर्म ब्रवीतु; ज. योग्यः स तत्कर्म ब्रवीतु कुरुनन्दन । २० व. तस्य गेहे कर्म; ज. तस्य राष्ट्रे त्वं विचरिष्यसि; ङ. ख. च. गेहे त्वं विचरिष्यसि । ज. ङ. वि. च. विराटनृपतेः साधो वत्स्यसे केन ।

१० मादुत्तरम्—ख. अधिकम् ।
स्थिते ममाग्रजे भीमे नाहं वक्तुं ममाग्रतः ।
तस्माद्वक्तुं न शक्ष्यामि धर्मलोपाद्बिभेम्यहम् ।
भीमाज्ञां च पुरस्कृत्य यत्प्रवक्ष्यामि तच्छृणु ॥ इति ।

२० शादुत्तरम्—ख. अधिकम् ।
अक्लिष्टवेषधारी च धार्मिकोऽत्यन्तसूयकः ।
न तवाभ्यधिकं कर्म नृशंसं नापि कैतवम् ॥ १ ॥
सत्यवागपि याज्ञिको लोभक्रोधादिवर्जितः ॥ इति ॥

*यद्यपीयं लक्षाभरणाख्या टीका प्रायो दाक्षिणात्यकोशपाठाननुवर्तते तथापि तादृशानेव पाठानुपादाय कुम्भघोणस्थमध्वविलासाध्यक्षेण मुद्रिते महाभारतेऽपि न लक्षाभरणकृता धृताः पाठा यथाश्रुतं साकल्येन दृश्यन्ते । औत्तरकोशेषु तु कियतांशेन सरूपा अपि विरलतरा उपलभ्यन्ते । अतो मूलमन्तरेण टीकाया निवेशनमनौपयिकमिति विचार्य, अत्र वर्तमानस्य कियतांशेन तत्सरूपतयात्रगतस्य च यस्य पद्यस्य टीका तत्रोपलब्धा तन्मात्रस्य सोद्धृत्य गृहीता ।

मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यविक्रमः ।
राजंस्त्वमापदाऽऽकृष्टः किं करिष्यसि पाण्डव ॥२१॥
न दुःखमुचितं किंचिद्राजा वेद यथा जनः ।
स इमामापदं प्राप्य कथं घोरां तरिष्यसि ॥ २२ ॥

**युधिष्ठिर उवाच—**

शृणुध्वं यत्करिष्यामि कर्म वै कुरुनन्दनाः ।
विराटमनुसंप्राप्य राजानं पुरुषर्षभाः ॥ २३ ॥
सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।
कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ॥२४॥
वैदूर्यान्काञ्चनान्दान्तान्फलैर्ज्योतीरसैः सह ।
कृष्णाक्षाँल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान् ॥२५॥

विराटाय चक्रमहे। 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन फण्यते' इति वचनाल्लिट्प्रयोगः ॥ १९ ॥

[ नील० ] सभास्तारः सभ्यः 'सभासदः सभास्ताराः' इत्यमरः। कङ्को नामतः । 'कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः' इति विश्वकोशात् । स्वस्य कृतान्तसूनुत्वेन "आत्मा वै पुत्रनामासि" इति श्रुतेः तदनन्यत्वात् तन्नाम्नो धारणे मिथ्यावादित्वं न भविष्यतीति भावः । मताक्षः वृहदश्वाज्ज्ञाताक्षतत्त्वः प्रियदेवनः क्रीडाप्रियः ॥ २४ ॥ दान्तान् गजदन्तमयान् । दन्तः पर्वतसानु तत्सदृशान् वा शारीन् निर्वर्त्स्यामि चालयिष्यामि । 'दन्तः सानुनि कथ्यते' इति विश्वः। तानेव चतुर्वर्णानाह वैदूर्यान् हरितमणिमयान् नीलान्, काञ्चनान् सौवर्णान् पीतान्, ज्योतींषि च रसाश्च ज्योतीरसास्तैः सह। ज्योतिःशब्देनात्र लोहितं लक्ष्यते "यदग्ने रोहितं रूपं तेजसस्तद्रूपम्" इति श्रुतेः । ज्योतीरूपाः लोहिताः । रसः पारदः तद्रूपाः श्वेताः । तैरुभयैः सह चतुर्वर्णसंपत्तिः । तथा फलैः शारीस्थापनार्थानि कोष्ठयुक्तानि काष्ठादिमयानि फलकानि तैः सह । तेषां निर्वर्तने करणमाह कृष्णाक्षान् कृष्णाः अक्षाः पाशाः येषां चालनार्थमिति कृष्णाक्षास्तान् शारीनेव तथा लोहिताक्षानित्यपि ॥ २५ ॥

[अर्जु०]मृदुरकर्कशः।अकठिनकाय इत्यर्थः। परपीडाजनितदुःखस्वभावो वा। वदान्यो बहुप्रद एव। 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः। ह्रीमान् अकर्तव्यान्निवृत्तः। सत्यसंगरः सत्यं संगिरति सत्यप्रतिज्ञः।'प्रतिज्ञाजिसंविदापत्सु संगरः' इत्याभिधानिकाः। एवंभूतस्य तव कथं परसेवानिर्वाह इति युधिष्ठिरं प्रति अर्जुनस्याभिप्रायः ॥ २१ ॥ सभास्तारः सभाध्यक्षः तत्राधिकृत इति यावत् । कङ्को नाम द्विजो भूत्वेति । 'कङ्कः स्यात् कपटद्विजे' नाम प्रकाश्ये। द्विजः क्षत्रियत्वात् । मताक्षः ज्ञातपाशकः । प्रियो देवनः द्यूतकारो यस्य ॥ २४ ॥ वैदूर्यान् वैदूर्यमणिप्रभवान्, काञ्चनान् काञ्चनभवान् प्रयोगदृढान् वा। फलैः शारीपट्टकैः ज्योतीरसैः पाशपातनपट्टकैर्वा फलैः ज्योतीरसैः सह । तथाच, 'फलं जातीफले सस्ये हेतूत्थे व्युष्टिलाभयोः । अग्नौ दिवाकरे ज्योतिः पुमान् दृष्टौ नपुंसकम्' इति कोषः । रसोऽनुरागः । कृष्णाक्षान् लोहिताक्षांश्च कृष्णलोहितवर्णभिन्नान् शारीन् निर्वर्त्स्यामीति यथास्थानं निवेशयिष्यामि । विधास्यामीति वा पाठः ॥२५॥

[चतु०] वदान्यः महात्मा सत्यसंगरः दृढप्रतिज्ञः॥२१॥ उचितमनुभूतम् । स राजा त्वम् ॥ २२ ॥ सभास्तारः सभासु मुख्यः । 'अविप्रो विप्ररूपेण कङ्क इत्यभिधीयते' नाम प्रसिद्धौ। मताक्षो ज्ञाताक्षहृदयः । प्रियदेवनो द्यूतप्रियः ॥२४॥ वैडूर्यान् वैडूर्यमणिभवान् । काञ्चनान् कनकोपस्कृतान् इत्युभयोर्विशेषणम् । कृष्णाक्षान् कृष्णलोहितवर्णभेदचिह्नानि यथासंख्यम् । फलैः शारिपट्टिकाभिः। ज्योतीरसैः मणिविशेषमयैः । रसनरागैर्वा (?) । निर्वर्त्स्यामि यथाकोष्ठं निवेशयिष्यामि ॥ २५ ॥

[सर्व०] सभास्तारः सभ्यः । कङ्कशब्दः छद्मद्विजवाचकः । मताक्षः ज्ञाताक्षतत्त्वः । प्रियदेवनः क्रीडाप्रियः ॥ २४ ॥ ज्योतीरसैः ज्योतिषां तेजसां रसैर्वर्णैः । लोहितैः शारिभिः फलैः शारीस्थापनार्थानि कोष्ठयुक्तानि काष्ठादिमयानि फलकानि तैश्च सह । वैडूर्यान् हरितान्, काञ्चनान् पीतान्, दान्तान् श्वेतानिति चतुर्वर्णान् कृष्णाः लोहिताश्च अक्षाः पाशाः येषां तान् शारीन् निर्व-

२१ ज. ङ. ङे. वि. ण. ख. ग. घ. च. धार्मिकः सत्यसङ्गरः। वि. ग. घ. च. ज. आपदा क्लिष्टः किं। ख. एकविंशादुत्तरं—सेवकैर्बहुभिः सेव्यस्त्वं सदा भरतर्षभ। किं करिष्यसि कर्म त्वं तस्य राज्ञो महात्मनः ॥ इत्यधिकः । २२ ख. किंचिद्राजन्पापं मुनेर्यथा । म. इमां त्वमापदं प्राप्य । ख. द्वाविंशादुत्तरं— वैशम्पायन उवाच । अर्जुनेनैवमुक्तस्तु प्रत्युवाच युधिष्ठिरः । इत्यधिकम् । २३ ख. राजानं मत्स्यनन्दनम्; ग. पुरुषर्षभम् । २४ ख. भविष्यामि विराटस्येति मे मतिः । २५ ख. दान्तान्स्फाटिकान्राजतानपि । च. ज. विधास्यामि मनोरमान्; व. निर्वर्प्स्यामि मनोरमान् ।

२५ शादुत्तरम्—ख. घ. व. अधिकम् ।

अदृष्टा राजगोष्ठीषु दर्शनीया मनोरमाः ।
( अरिष्टा राजगोलिङ्गान्दर्शनीयान्सुवर्चसः )
लोहिताक्षाश्मगर्भाश्च सन्ति मे बहवः शुभाः ॥ १ ॥
दर्शनीयाः सुखस्पर्शाः कुशलैः समधिष्ठिताः ।
यद्यते पाणिना स्पृष्टाः संहृष्यन्ति च मानवाः ॥ २ ॥
ते विकीर्णाः शुचौ देशे रमणीये विपांसुले ।
देविष्येऽहं यथाकामं स विहारो भविष्यति ॥ ३ ॥
कङ्को नाम द्विजो भूत्वा विराटस्य सभासदः ।
ज्योतिषे शकुनज्ञाने निमित्ते चाक्षकौशले ॥ ४ ॥
शास्त्रपारंगतो वेदे वेदाङ्गेषु च सर्वशः ।
धर्मकामार्थमोक्षेषु नीतिशास्त्रेषु पारगः ॥ ५ ॥
पृष्टोऽहं कथयिष्यामि राज्ञे प्रियहितं वचः ॥ इति ।

विराटराजं रमयन्सामात्यं सहबान्धवम् ।
न च मां वेत्स्यते कश्चित्तोषयिष्ये च तं नृपम् ॥२६॥
आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा ।
इति वक्ष्यामि राजानं यदि मां सोऽनुयोक्ष्यते ॥२७॥
इत्येतद्वो मयाख्यातं विहरिष्याम्यहं यथा ।
वृकोदर विराटे त्वं रंस्यसे केन हेतुना ॥ २८ ॥

इति श्रीमहाभारते विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

त्स्यामि चालयिष्यामीत्यर्थः । युधिष्ठिराख्यस्य शरीरस्येति हृदयम् ॥ २५ ॥

दुर्घटार्थप्रकाशिनी टीका—

'कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः । वैडूर्यान्काञ्चनान्दान्तान्फलैर्ज्योतीरसैः सह' इति युधिष्ठिरवाक्यम् । विधास्यामीति संबन्धः । वैडूर्यान्कृष्णाङ्गान्काञ्चनाँल्लोहिताङ्गान्दान्तान्दन्तविकृतीन् । यद्वा प्रयोगदृढान् । फलैर्ज्योतीरसैः सह लाभदृष्ट्यनुरागैः सह । तथाच 'फलं ज्योतीरसस्येह हेतूत्थदृष्टिलाभयोः (?) । अग्नौ दिवाकरे ज्योतिः पुमान्दृष्टौ नपुंसकम्' इति कोशः ॥ २५ ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ विरो० ] 'अविप्रो विप्ररूपी तु कङ्क इत्यभिधीयते ।' नामद्विजो भूत्वा क्षत्रियत्वात् । देवनः देविता ॥ २४ ॥ वैडूर्यान् वैडूर्यमणिरचितान् । दान्तान् गजदन्तनिर्मितान् । ज्योतीरसैः प्रकाशमानैः कृष्णादिद्रवैः । कृष्णाक्षान् कृष्णवर्णान् सारीन् । फलन्तीति फलाः पाशकास्तैः सह निर्वर्त्स्यामि निर्मास्यामि ॥ २५ ॥

[ विष० ] सभास्तारः सभाध्यक्षः । सर्वेष्वपि न्यायस्थानेषु अधिकृत इत्यर्थः । नामेत्यलीके । कङ्कश्छद्मद्विजेऽपि च ॥ २४ ॥ निर्वर्त्स्यामि यथास्थानं पातयिष्यामि । षट्पञ्चकान्करिष्यामि । फलैः पातनपट्टके हि पृथग् भवन्ति । ज्योतीरसानि रत्नानि । सारीनिति शेषः । कृष्णाश्च रक्ताश्च सारयो भवन्ति ॥ २५ ॥

[लक्षा०] सभास्तारो भविष्यामीत्यत्र 'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते' इत्यभिधानात् सभास्तारः सभ्यः । सभायां पूज्य इति यावत् ॥ २४ ॥ वैडूर्यकाञ्चनानित्यत्र वैडूर्यकाञ्चनान् वैडूर्यकाञ्चनखचितान् । अक्षानक्षक्रीडासाधनान् कृष्णाक्षान् कृष्णवर्णानक्षक्रीडासाधनान् । लोहिताक्षान् लोहितवर्णानक्षक्रीडासाधनान् । सुवेष्टितान् चैलान्तःस्थापितान् । धारयिष्ये विराटं धारयिष्ये । तस्मै दास्यामीत्यर्थः ॥ २५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ नील० ] युधिष्ठिराख्यस्य शरीरस्य यथा प्राण उत्थापकस्तद्वच्चिदात्माऽपीति प्राणसाम्येन युधिष्ठिरात्मैव विवक्षित इति भावः । अनुयोक्ष्यते प्रश्नं करिष्यति ॥ २७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. प्रथमोऽध्यायः ॥ १ ॥

[ अर्जु० ] विराटराजः विराटनामा राजा । मध्यपदलोपी समासः टः समासान्तः । वेत्स्यते वेदिष्यति ॥ २६ ॥ अनुयोक्ष्यति प्रक्ष्यति । न च ब्राह्मणोऽहमित्यन्यथाभिधानेऽसत्यप्रसङ्गः । प्राणात्यये सर्वधनापहारे चासत्यदोषाभावात् ॥२७॥ विराटे विराटसमीपे । युधिष्ठिरवाक्यम् ॥ २८ ॥

इति श्रीमदर्जुनमिश्रकृतायां महाभारतार्थदीपिकायां विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ चतु० ] अनुयोक्ष्यते पृच्छति प्रतिमंस्यत इति पाठे अवभोत्स्यत इत्यर्थः ॥ २७ ॥

इति श्रीमहाभारतटीकायां चतुर्भुजमिश्रकृतायां वि. प. प्रथमोऽध्यायः ॥ १ ॥

---

२६ व. सामात्यं सपुरोहितम् । २७ ख. मां सोऽनुवक्ष्यति; व. यदि प्रक्ष्यति मां स्वयम् । २८ च. ज. ख. ङ. व. वसिष्ये केन कर्मणा; ग. रंस्यसे केन कर्मणा । घ. व. अष्टाविंशस्योत्तरं—श्रुत्वा च भीमो नरदेवकर्म प्रपूज्य वाक्यं तमुवाच धीमान् । स्वकर्मयुक्तं च हितं च काले विमृश्य वाग्मी प्रविहाय चिन्ताम् ॥ इत्यधिकः । इति प्रथमोऽध्यायः ॥ १ ॥

---

२८ शस्योत्तरार्धस्थाने—ख. एते सार्धदशश्लोका दृश्यन्ते ।

वैशम्पायन उवाच—

एवं निर्दिश्य चात्मानं निःश्वसन्नुष्णमार्तिजम् ।
विसृजन्नश्रु नेत्राभ्यां भीमसेनमवैक्षत ॥ १ ॥
भीमसेन कथं कर्म राष्ट्रे तस्य करिष्यसि ।
हत्वा क्रोधवशात्तात पर्वते गन्धमादने ॥ २ ॥
यक्षान्क्रोधाभिताम्राक्षान् राक्षसांश्चातिपौरुषान् ।
प्रादाः पाञ्चालकन्यायै पद्मानि सुबहून्यपि ॥ ३ ॥
बकं राक्षसराजानं भीषणं पुरुषादकम् ।
जघ्निवानसि कौन्तेय ब्राह्मणार्थमरिंदम ॥ ४ ॥
क्षमा च भयसंवीता एकचक्रा त्वया कृता ।
हिडिम्बं च महावीर्यं किर्मीरं चैव राक्षसम् ॥ ५ ॥
त्वया हत्वा महाबाहो वनं निष्कण्टकं कृतम् ।
आपदं चापि संप्राप्ता द्रौपदी चारुहासिनी ॥ ६ ॥
जटासुरवधं कृत्वा वयं च परिमोक्षिताः ।
हत्वा कलिङ्गसैन्यानि दुर्योधनममोचयः ॥ ७ ॥
पुनरेव च गन्धर्वैर्ह्रियमाणं सहानुजम् ।
एवमुत्तरतेजस्वी त्वमेवोर्जितविक्रमः ॥ ८ ॥
सोऽयं वृकोदरस्तात वीर्यपूर्णोऽत्यमर्षणः ।
मत्स्यराजान्तिके भीम तेजोराशिर्दुरासदः ॥ ९ ॥
समीपे नगरे तस्य रंस्यसे केन कर्मणा ।
अतीव दुष्करं कर्तुं वचनं दुर्बलीयसः ॥ १० ॥
मन्ये निवासं भीमस्य समीपे तस्य भूपतेः ॥ इति ।

## द्वितीयोऽध्यायः २

भीमेन विराटनगरे स्वस्य सूदवेषेण निवासे कथिते धर्मस्यार्जुनं प्रति प्रश्नः ॥ १ ॥ पण्डवेषेण बृहन्नलेति स्वनाम प्रख्याप्यान्तःपुरस्त्रियो गीतनृत्यवादित्रादि शिक्षयंस्तत्र विहरिष्यामीत्यर्जुनस्योत्तरम् ॥ २ ॥

भीमसेन उवाच—

पौरोगवो ब्रुवाणोऽहं बल्लवो नाम भारत ।
उपस्थास्यामि राजानं विराटमिति मे मतिः ॥ १ ॥
सूपानस्य करिष्यामि कुशलोऽस्मि महानसे ।
कृतपूर्वाणि यान्यस्य व्यञ्जनानि सुशिक्षितैः ॥ २ ॥
तान्यप्यभिभविष्यामि प्रीतिं संजनयन्नहम् ।
आहरिष्यामि दारूणां निचयान्महतोऽपि च ॥ ३ ॥
यत्प्रेक्ष्य विपुलं कर्म राजा संयोक्ष्यते स माम् ।
अमानुषाणि कुर्वाणस्तानि कर्माणि भारत ॥ ४ ॥
राज्ञस्तस्य परे प्रेष्या मंस्यन्ते मां यथा नृपम् ।
भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः ॥ ५ ॥
द्विपा वा बलिनो राजन्वृषभा वा महाबलाः ।
विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ॥ ६ ॥
ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः ।
तानहं हि नियोत्स्यामि रतिं तस्य विवर्धयन् ॥ ७ ॥

[ सर्व० ] अनुयोक्ष्यते प्रश्नं करिष्यति ॥ २७ ॥

इति सर्वज्ञनारायणकृतौ भारतार्थप्रकाशे वि.प. प्रथमोऽध्यायः ॥ १ ॥

[ विरो० ] स्वस्य सखा हितकारी स्वयं भवत्येव । अनुयोक्ष्यते अभिमंस्यते पृच्छति । ज्ञातुमिच्छतीत्यर्थः ॥ २७ ॥ विराटे तत्समीपे ॥ २८ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ विष० ] 'पञ्चानृतान्याहुरपातकानि' इति वचनात् न असत्यभाषणदोषप्रसङ्गः । यद्वा 'अन्तरं न प्रपश्यामि स्वसखा(?)निजदेहयोः' इति वा ॥ २७ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ नील० ] पौरोगवः पुरः पुरस्तात् गावो रश्मयो यस्य स पुरोगुर्वायुः । पिण्डोत्पत्तौ हि प्रथमं रजोरेतसोः कल्के वायुरश्मिभूतः प्राण आविर्भवति पश्चादिन्द्रियान्तराणीति शास्त्रप्रसिद्धम् । तस्य पुत्रः पौरोगवः । लोके तु पौरोगवो महानसाध्यक्षः बल्लवः सूपकारः एतदेव ममान्वर्थं नाम ॥ १ ॥ ईश्वरः यथेष्टं विनियोगकर्ताऽत एव नृपो यथा तथा प्रियोऽहं लोकानां भविष्यामीत्युक्तम् ॥ ५ ॥ नियोत्स्यामि निहीनं यथा स्यात्तथा मारणवर्जं योत्स्यामि ॥ ७ ॥

[ अर्जु० ] पौरोगवः सूदाध्यक्षो नाम प्रसिद्धौ नामतः संज्ञया इति ब्रुवाणो वदन् उपस्थास्यामि ॥१॥ सूपान् व्यञ्जनादीन् ॥२॥ निचयान् राशीन् ॥३॥ विपुलं महत् ॥४॥ मंस्यन्ते ज्ञास्यन्ति भृशं यथा स्यात् ॥ ५ ॥ नियोत्स्यन्ति बाहुना योत्स्यन्ति नियोधकाः बाहुयोधिनो मल्ला इत्यर्थः ॥ ७ ॥

[ चतु० ] पौरोगवः सूदाध्यक्षः ॥ १ ॥ सूपानि व्यञ्जनानि । महानसे पाककर्मणि ॥ २ ॥ अमानुषाणि मानुषेष्वसंभाव्यानि ॥ ४ ॥ परि सर्वतः सर्व इत्यर्थः भक्ष्यं मोदकादि ॥ ५ ॥ नियोधकाः बाहुयोधिनः ॥ ७ ॥

[ सर्व० ] पौरोगवः महानसाध्यक्षः । बल्लवः सूपकारः ॥ १ ॥ ईश्वरः यथेष्टं विनियोगकर्ता ॥ ५ ॥

[ दुर्घ० ] युधिष्ठिरेण कथं त्वया उपस्थातव्य इति पृष्टो भीमसेनस्तमुवाच ॥ १ ॥ *रसोऽनुरागः ॥ ७ ॥

[ विरो० ] परि सर्वे । नृपं; भृशम् ॥ ५ ॥ निहनिष्यामि निग्रहीष्यामि ॥ ७ ॥

[ विष० ] पौरोगव इति 'पौरोगवस्तु विज्ञेयो सूदाध्यक्षो मनीषिभिः' नाम संबोधनेऽव्ययम् । नामतः नाम्नाऽभिधानेन । सार्वविभक्तिकस्तस् ॥ १ ॥ विपुलमति कर्म ॥ ४ ॥ प्रेष्या भृत्याः । मंस्यन्ते भक्ष्यादीनां दानात् ॥ ५ ॥ नियोधका मल्लाः ॥ ७ ॥

[ लक्षा० ] पौरोगवो ब्रुवाण इत्यत्र 'पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः' इत्यभिधानात् पौरोगवः सूपकाराणामध्यक्षः ॥ १ ॥

१ व. ज. ग. घ. च. वि. नाम नामतः । २ च. वैरस्ये व्यञ्जनानि सुशिक्षितैः । ३ दे. तान्यस्य । ४ वि. ज. राजा प्रीतो भविष्यति । ५ ज. परिप्रेष्याः; व. परे भृत्याः । ६ घ. राजन्महिषाः । ७ दे. वि. ण. च. व. ज. छ. तानहं निहनिष्यामि ।

२ यस्य स्थाने—ख.
रसान्नानाविधांश्चैव मधुरांश्चैव दाडिमान् ।
पूर्वमप्राशितं तेन कर्ताऽस्मि च गुणान्वितम् ॥
खाद्यं व्यञ्जनमास्वाद्य मत्स्यः प्रीतो भविष्यति
कृतकृत्या हि ये त्वस्य भविष्यन्ति सुशिक्षिताः ॥ इति

न त्वेतान्युध्यमानान्वै हानिष्यामि कथंचन ।
तथैतान्पातयिष्यामि यथा यास्यन्ति न क्षयम् ॥ ८ ॥
आरालिको गोविकर्ता सूपकर्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ॥ ९ ॥
आत्मानमात्मना रक्षंश्चरिष्यामि विशांपते ।
इत्येतत्प्रतिजानामि विहरिष्याम्यहं यथा ॥ १० ॥

[ नील० ] तदेवाह—नत्विति ॥ ८ ॥ 'आरालिको गोविकर्ता सूपकर्ता नियोधकः' इति । अरालाः मत्तगजास्तैः सह क्रीडति तान् जयति वा आरालिकः । 'अरालः कुटिले सर्जरसे वै मत्तदन्तिनि' इति विश्वः । गोविकर्ता गवां महतां बलीवर्दानामपि विकर्ता दमनेन विकृतिजनकः । वृषभान्वा महाबलान्निग्रहीष्यामीत्युपक्रमात् । सूपकर्ता मुद्गादिविकारकर्ता । पक्षे सुतरामुपकर्ता । नियोधकः मारणवर्जं मल्लयुद्धकर्ता । पक्षे नितरां योधकः । विषमश्लोकीकृतस्तु आरालिकः प्रकृतीनां गुणदोषसूचको हस्तिदमको वा । तथा च विक्रमादित्यः 'आरालिकः सूचनको हस्तिनां दमकस्तथा' इति । गोविकर्ता गवां वाचां विकर्ता गद्यपद्यादिभेदानां प्रयोक्तेति । केचित्तु 'आरालिकोऽन्नपाकी स्यात्सूपकर्ता तु शाककृत् । तैलान्नं पचते यस्तु गोविकर्ता स उच्यते' इत्यप्युदाहरन्ति तत्र मूलं द्रष्टव्यम् ॥ ९ ॥

[ अर्जु० ] आरालिको गोविकर्ता सूपकर्ता नियोधकः । आसं युधिष्ठिरस्याहं पृष्टो वक्ष्यामि राजनि ॥ आरालिको भक्तसूदः । अथवा राज्ञां प्रमाणघोषनियुक्तः यद्वालानां पानरूपं संस्करोतीति ठक् आरालिकः 'अरालः कुट्टिमे सर्जरसे च मत्तहस्तिनि' इति विश्वः । हस्तिनां दमको वा । तथाच विक्रमादित्यः, 'आरालिकः सूचनको हस्तिनां दमकस्तथा' इति ॥ गोविकर्ता गवां मत्तवृषाणां युद्धे विकर्ता निवारकः अथवा गोर्भूमेर्ग्रामनगरपुरपत्तनखेटखर्वोदेर्विभागकर्ता । यद्वा गवां गद्यपद्यसंस्कृतप्राकृतापभ्रंशपैशाचिकललितदुष्करसाहित्यदुष्करतर्कवैदिकदैशिकानां वाचां विशेषेणार्थतो ग्रन्थतश्च कर्ता प्रयोगनिपुणः परप्रयोगवाग्विशेषविच्च । उक्तं च पण्डितानां परं प्राहुर्भीमसेनमरिन्दमम् । गवां जलानां विशेषज्ञो वा । सूदकर्ता व्यञ्जनं सूदः सूदशास्त्रज्ञो वा । नियोधको विशेषेण बाहुशस्त्रप्रहारवित् परप्रयुक्तप्रहारविघट्टनविच्च । उक्तं च । भीमसेनसमो नास्ति पक्षयोरुभयोरपि । शास्त्रे प्रहरणे ज्ञाने औरसे द्रविणे तथेति ॥ का ते राजनि वृत्तिः कश्च त्वमिति पृष्टो वक्ष्यामि । राजनीति कर्मणि सप्तमी ॥ ९ ॥ रक्षन् गुप्तं कुर्वन् ॥ १० ॥ दावं वनम् ॥ ११ ॥

[चतु०] आरालिकः अन्नसंस्कर्ता अथवा दमको द्विपानाम् ।

युधिष्ठिर उवाच—

यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां वरम् ।
दिधक्षुः खाण्डवं दावं दाशार्हसहितं पुरा ॥ ११ ॥
महाबलं महाबाहुमजितं कुरुनन्दनम् ।
सोऽयं किं कर्म कौन्तेयः करिष्यति धनंजयः ॥ १२ ॥

गवां वृषाणां विकर्ता विग्रहीता । गद्यपद्यापभ्रंशादीनामर्थतो ग्रन्थतश्च विकर्ता प्रयोगे निपुणः । यदाह—'पण्डितानां परं प्राहुर्भीमसेनमरिन्दमम्' इति ॥ ९ ॥

[ सर्व० ] आरालिकः अरालाः मत्तगजास्तान् जयति सः गोविकर्ता गवां बलीवर्दानां दमनेन विकृतिजनकः । सूपकर्ता मुद्गादिविकारकर्ता नियोधकः मल्लयुद्धकर्ता ॥ ९ ॥

[ दुर्घ० ] आसं युधिष्ठिरस्याहं पृष्टो वक्ष्यामि राजनि । अरालमपि नरं संस्करोति । 'आरालिकोऽन्नपाकी स्यात्सूपकारः सुशाककृत् । तैलान्नं पचते यस्तु गोविकर्ता स उच्यते' तथा 'अरालः कुटिले सर्जरसे च मददन्तिनि' इति विश्वः ॥ 'आरालिको गोविकर्ता सूपकर्ता नियोधकः' इत्यादि । आरालिकः प्रकृतीनां गुणदोषसूचकः हस्तिदमको वा । तथाच विक्रमादित्यः 'आरालिकः सूचनको हस्तिनां दमकस्तथा' गोविकर्ता गवा वाणीनां गद्यपद्यसंस्कृतापभ्रंशपैशाचिकललितदुष्करसाहित्यतर्कवैदिकदैशिकानां विशेषेण गद्यपद्यादीनां वाचां ग्रन्थतोऽर्थतश्च विकर्ता प्रयोगनिपुणः परवाग्विशेषविच्च । उक्तं च 'पण्डितानां परं प्राहुर्भीमसेनमरिन्दमम्' इति । नियोधको निःशेषेण बहुशस्त्रप्रहारवित्, बाहुयुद्धकुशलो वा । परेरितप्रहारविघट्टनसज्ज्ञश्च । उक्तं च 'भीमसेनसमो नास्ति पक्षयोरुभयोरपि । शास्त्रे प्रहरणे ज्ञाने औरसे द्रविणे तथा' ॥ ९ ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ विरा० ] 'अरालो मत्तदन्तिनि' इति मेदिनी । तेन दीव्यतीति आरालिकः । गोविकर्ता बाणाक्षेप्ता । यद्वा परवाक्यदूषयिता ॥ ९ ॥

[ विष० ] आरालिको दधिमन्थकर्ता । गौर्जलं तस्य विकर्ता पानविकर्ता । गवां वृषभाणां युद्धे निवारको वा । गोरसपाककर्ता वा । सूपकर्ता व्यञ्जनसूदः नियोधको मल्लयुद्धकर्ता । भक्तमुद्गसूदः सूपकर्ता ॥ ९ ॥

[ लक्षा० ] आरालिको गोविकर्तेत्यत्र 'आरालिका आन्धसिकाः सूदा औदनिका गुणाः' इत्यभिधानादारालिकः अन्नकर्ता । गोविकर्ता गवां विशेषेण क्षीरादिकर्ता । सूपकर्ता सूपादित (?) साधनकर्ता ॥ ९ ॥

८ दे. ण. न त्वेतान्युद्ध्यमानान्; व. न त्वेवायुध्यमानान् । व. तथैतान्घातयिष्यामि यथा यास्यन्ति च क्षयम् ।

योऽयमासाद्य तं दावं तर्पयामास पावकम् ।
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ १३ ॥
वासुकेः सर्पराजस्य स्वसारं हृतवांश्च यः ।
श्रेष्ठो यः प्रतियोधानां सोऽर्जुनः किं करिष्यति ॥१४॥
सूर्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः ।
आशीविषश्च सर्पाणामग्निस्तेजस्विनां वरः ॥ १५ ॥
आयुधानां वरं वज्रं ककुद्मी च गवां वरः ।
ह्रदानामुदधिः श्रेष्ठः पर्जन्यो वर्षतां वरः ॥ १६ ॥
धृतराष्ट्रश्च नागानां हस्तिष्वैरावणो वरः ।
पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ॥१७॥
यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ॥ १८ ॥
सोऽयमिन्द्रादनवरो वासुदेवान्महाद्युतिः ।
गाण्डीवधन्वा बीभत्सुः श्वेताश्वः किं करिष्यति ॥१९॥
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
अस्त्रयोगं समासाद्य स्ववीर्यान्मानुषाद्भुतम् ।
दिव्यान्यस्त्राणि चाप्तानि देवरूपेण भास्वता ॥२०॥
यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये ग्रहाणां दशमं तथा ॥ २१ ॥
यस्य बाहू समौ दीर्घौ ज्याघातकठिनत्वचौ ।
दक्षिणे चैव सव्ये च गवामिव वहः कृतः ॥२२॥

[ नील० ] वासुकेः स्वसारमुलूपीं हृतवान् सौन्दर्येणेति शेषः ॥ १४ ॥ सर्पाणां सरीसृपाणा आशीविषो दंष्ट्राविषः ॥ १५ ॥ मानुषेषु अद्भुतं मानुषाद्भुतम् ॥ २० ॥ गवां वृषभाणां स्कन्धे इव वहः युगघर्षणजः किणः कृतः । एतस्यैव गोपनं कठिनमिति भावः ॥ २२ ॥

[ अर्जु० ] श्रेष्ठः प्रतियुधां नाम प्रतियुधां श्रेष्ठो नामेत्यन्वयः । नाम प्रसिद्धः ॥ १४ ॥ आशीविषश्च सर्पाणाम् आशी दंष्ट्रा तस्यां विषं यस्य । सर्पाः सामान्यजातयः ॥१५॥ गुडाकेशः गुडा स्नुही तद्वत्केशा यस्य स तथा । गुडाका निद्रा तस्या ईशः जितनिद्र इत्यर्थः । अथवा गुडाकाया धनुर्विद्याया ईशः गुडाका धनुर्विद्येति । अत एव सर्वधनुर्धराणां श्रेष्ठः ॥ १८ ॥ सोऽयमिन्द्रादनवमो वासुदेवाच्चेत्यादि अनवमः अन्यूनः । अनवर इति पाठे सदृश एवार्थः । अवरजः इति पाठे जनेर्डः अवरे जातः इन्द्रादिन्द्रः वासुदेवादपि वासुदेवः नरनारायणयोरैक्यात् । विशेषणोऽयमुत्कर्षातिशयार्थः ॥ १९ ॥ अस्त्रयोगं मन्त्राभ्यासशस्त्रोपायम् । मानुषाद्भुतं मानुषलोकेऽप्रचारात् ॥ २० ॥ गवामिव वहः कृतः वहो युगघर्षणजः किणः कटा इति यस्य प्रसिद्धिः । 'स्कन्धप्रदेशस्तु वहः' इत्यभिधानं च ॥ २२ ॥

[ चतु० ] वासुकेः स्वसारमुलूपीं हृतवान् । प्रतियुधानामशेषयोधानाम् [ नाम एकम्? ] ॥ १४ ॥ आशीविषोऽनन्तः । सर्पाणां काद्रवेयाणाम् ॥ १५ ॥ ककुद्मी वृष्यः ॥ १६ ॥ नागानां सौरसेयानाम् ॥ १७ ॥ अनवरोऽहीनः ॥ १९ ॥ वहो ज्याघर्षणप्रभवः किणः ॥ २२ ॥

[ सर्व० ] स्वसारमुलूपीं हृतवान्सौन्दर्येण ॥ १४ ॥ आशीविषः दंष्ट्राविषः ॥ १५ ॥ ककुत् वृषस्कन्धः ॥ १६ ॥ गवां वृषभाणां स्कन्धे इव वहः किणः ॥ २२ ॥

[ विरो० ] वसुरग्निस्तस्मात् कं सुखं यस्य स वसुकः । कौरव्यनागः तस्य पुत्रो वासुकिस्तस्य स्वसारमुलूपीम् । यद्वा वसुमग्निं कायति स्तौतीति वसुकः कश्यपः तत्पुत्रो वासुकिः तक्षकस्तस्य दारमासीत्यन्वयः ( ? ) । हृतवान् स्वीकृतवान् ॥ १४ ॥ आशीविषो वासुकिः ॥ १५ ॥ ककुद्मान् शंकरवृषः ॥ १६ ॥ अनवरः अनवमः ॥ १८ ॥ अस्त्रयोगं मन्त्रम् ॥ २० ॥ द्वादशमिवेत्युत्प्रेक्षा न तु रूपकमप्रसिद्धेः ॥ २१ ॥ वहः स्कन्धप्रदेशस्तु वहः ॥ २२ ॥

१३ घ. योऽयमिद्धमपाकृत्य; व. योऽयमिन्द्रमपाकृत्य । दे. वि. ण. म. विजित्यैकरथेनैव यो हि । १४ ज. श्रेष्ठः प्रतियुधानानाम् । १५ व. श्रेष्ठो यक्षाणां धनदस्तथा । १६ ज. ककुद्मान् । १८ व. विशिष्टानि पाण्डवेषु धनंजयः । एवं हि सर्ववीराणां । ग. घ. स्वस्यां जात्याम् । १९ ग. च. वि. वासुदेवाच्च भारत । व.ण. श्वेताश्वः कृष्णसारथिः । २० व. वर्षाणि सहस्राक्षे पुरन्दरे; ग. घ. सहस्राक्षनिवेशने । ग. घ. व. द्वितीयार्धस्थाने–ब्रह्मचर्यव्रते युक्तः सर्वास्त्रेषूद्यतोऽभवत् । व. च. ज. अस्त्रयोगं समाज्ञाय ।

१३ श्लोकोत्तरार्धादारभ्य विंशान्तानां स्थाने–ख. पुस्तकेऽधोदर्शिताः सार्धदश श्लोका दृश्यन्ते ।

प्रतिशुश्राव धर्मात्मा यस्तं धर्मं चकार च ।
तस्मै ब्राह्मणरूपाय हुताशाय महायशाः ॥ १ ॥
यस्तु देवान्मनुष्यांश्च सर्वांश्चैकरथोऽजयत् ।
स भीमधन्वा श्वेताश्वः पाण्डवः किं करिष्यति ॥ २ ॥
आशीविष इवाहीनां नागानामिव वासुकिः ।
उच्चैःश्रवास्तुरङ्गाणामग्निस्तेजस्विनामिव ॥ ३ ॥
समुद्र इव सिन्धूनां शैलानां हिमवानिव ।
महेन्द्र इव देवानां दैत्यानां च बलिर्यथा ॥ ४ ॥
ऐरावतो गजेन्द्राणां युग्यानां तुरगो यथा ।
कुबेर इव यक्षाणां मृगाणां केसरी यथा ॥ ५ ॥
राक्षसानां दशग्रीवो दैत्यानामिव शम्बरः ।
रुद्राणामिव कापालिरादित्यानां रविर्यथा ॥ ६ ॥
रोपामर्षसमायुक्तस्तक्षको भुजगेष्विव ।
तपतामिव चादित्यः प्रजानां ब्राह्मणो यथा ॥ ७ ॥
ह्रदानामिव पातालं पर्जन्यो ददतामिव ।
वेगे वायुरिवासह्यो गरुडः पततामिव ॥ ८ ॥
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
ब्रह्मचर्यव्रते युक्तः सर्वशस्त्रभृतां वरः ॥ ९ ॥
अवाप्य चास्त्रमस्त्रज्ञः सर्वं सर्वार्थकोविदः ।
क्षिप्रं चाशु च दूरं च ध्रुवं च विद्युधाधिपात् ॥ १० ॥
अनुज्ञातः सुरेन्द्रेण पुनः प्रत्यागमन्महीम् । इति ।

हिमवानिव शैलानां समुद्रः सरितामिव ।
त्रिदशानां यथा शक्रो वसूनामिव हव्यवाट् ॥२३॥
मृगाणामिव शार्दूलो गरुडः पततामिव ।
वरः सन्नह्यमानानां सोऽर्जुनः किं करिष्यति ॥२४॥

**अर्जुन उवाच—**

प्रतिज्ञां षण्ढकोऽस्मीति करिष्यामि महीपते ।
ज्याघातौ हि महान्तौ मे संवर्तुं नृप दुष्करौ ॥२५॥
वलयैश्छादयिष्यामि बाहू किणकृताविमौ ।
कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनप्रभे ॥ २६ ॥
पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः ।
वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नला ॥ २७ ॥
पठन्नाख्यायिकाश्चैव स्त्रीभावेन पुनः पुनः ।
रमयिष्ये महीपालमन्यांश्चान्तःपुरे जनान् ॥ २८ ॥
गीतं नृत्यं विचित्रं च वादित्रं विविधं तथा ।
शिक्षयिष्याम्यहं राजन् विराटस्य पुरस्त्रियः ॥२९॥
प्रजानां समुदाचारं बहुकर्म कृतं वदन् ।
छादयिष्यामि कौन्तेय माययात्मानमात्मना ॥ ३० ॥

[ विष० ] आशीविष इति 'आशीर्दृष्ट्यां तथाऽऽशिषि' ॥ १५ ॥ इरावति समुद्रे जात ऐरावतः 'इरा वारिसुराभूम्यः' ॥ १७ ॥ गुडा वक्राः केशा यस्याऽसौ गुडाकेशः । यद्वा 'गुडाका योगनिद्रा स्यात्तस्या ईशो यतो भवान् । तेन प्रोक्तो गुडाकेशो वासुदेवोऽर्जुनोऽपि च'॥१८॥ ज्याघातः ज्याघर्षणजः किणः ॥ २२ ॥

[ लक्षा० ] दक्षिणे चैव सव्ये च गवामिव हविष्कृतावित्यत्र दक्षिणे सव्ये च गवां शराणां हवींषि शराख्यहवींषीत्यर्थः । कृतौ कुर्वाणाविव तिष्ठतः ॥ २२ ॥

[ नील० ] पततां पक्षिणाम् ॥ २४ ॥ षण्ढकोऽस्मीति पण्ढो गोपतिः श्रीगोपालस्तस्य प्रतिकृतिरवतारान्तरं षण्ढकः कृष्णसखोऽस्मीत्यर्थः । पक्षे क्लीवः । 'षण्ढो वर्षवरे क्लीवे गोपतौ वन्ध्यपूरुषे' इति विश्वः । संवर्तुं पिधातुम् ॥ २५ ॥ पिनद्धाः कम्बवः शङ्खवलयानि येन स पिनद्धकम्बुः तृतीयां प्रकृतिं स्त्रीपुंसापेक्षया क्लीवत्वं तृतीयं गतः प्राप्तः नर इति रलयोर्डलयोश्चाभेदान्नरः बृहंश्चासौ नरश्चेति नारायणसख आद्यो नर इत्यर्थः । स्त्रीत्वं स्वरूपगोपनार्थम् ॥ २७ ॥ आख्यायिकाः पूर्वराजचरितानि ॥ २८ ॥ समुदाचारं समीचीनमुत्कृष्टतरं महावदान्यत्वादिरूपं ताभिः कृतं बहुकर्म च वदन् मायया कपटक्लीववेषेण आत्मानं शरीरमात्मना बुद्ध्या ॥ ३० ॥

[ अर्जु० ] हिमवानिव रत्नभाक् । धनुषा समुद्र इव अगाधत्वात् । शक्र इव शक्त्या । वसूनाम् अग्नीनां हव्यवाट् यज्ञियोऽग्निरिव पवित्रेण तेजसा ॥ २३ ॥ शार्दूल इव विक्रमे । गरुड इव वेगेन ॥२४॥ षण्ढकः षण्ढ इत्यर्थः ॥२५॥ प्रतिमुच्य बद्ध्वा ॥ २६ ॥ पिनद्धकम्बुः बद्धवलयः 'कम्बुर्ना वलये शङ्खे' इत्यमरः । तृतीयां प्रकृतिं नपुंसकमूर्तिम् । उर्वश्याः शापमनुगृह्णाति धर्मवराच्च तदा ॥२७॥ समुदाचारं सम्यगुद्भवम् ॥३०॥

[ चतु० ] पततां पक्षिणाम् ॥ २४ ॥ प्रकृत्या स्वभावेन ज्याघातकिणवन्तौ ज्याघर्षणकिणशालिनौ । ज्याघातौ हि महान्ताविति पाठः । संवर्तुं छादयितुम् ॥ २५ ॥ प्रतिमुच्य व्यपि(न)ह्य ॥ २६ ॥ तृतीयां प्रकृतिं नपुंसकत्वम् ॥ २७ ॥ आख्यायिकाः गद्यनिबद्धाः प्रबन्धकल्पनाः ॥ २८ ॥ समुदाचारं व्यवहारम् । मायया छद्मना ॥ ३० ॥

[ सर्व० ] पततां पक्षिणाम् ॥ २४ ॥ षण्ढकः क्लीवः । कम्बुभिः शङ्खवलयैः ॥ २५ ॥ तृतीयां प्रकृतिं क्लीवत्वम् । नड इति रलयोर्डलयोश्चाभेदान्नरः ॥२७॥ समुदाचारं समीचीनमुत्कृष्टतरमाचारम् ॥ ३० ॥

[ विरो० ] ज्याघातौ हि महान्तौ; ज्याघातकिणवन्तौ ॥२५॥ तृतीयां प्रकृतिं नपुंसकत्वम् । [ नटो नद्यां मेदिनी । ] बृहन्नला बृहन्नलतुल्या पुंस्वाभावेन साराभावात् ॥ २७ ॥ प्रबन्धकल्पना गद्यनिबद्धाख्यायिकोच्यते ॥ २८ ॥ समुदाचारं सुखादि । कर्मकृतं प्राक्तनाधीनम् ॥ ३० ॥

[ विष० ] हिमवानिव सर्वरत्नभाजनत्वात् । समुद्रः सरितामिवेति अगाधगुणत्वात् । यथा शक्र इति उत्कृष्टशक्तित्वात् ॥ २३ ॥ मृगाणामिव शार्दूल इति विक्रमैकशीलत्वात् । गरुडः पततामिवेति रथस्य वेगित्वात् ॥ २४ ॥ पठन्नाख्यायिकामिति । चित्रकथां नायकप्रधानाम् । पुनःपुनर्भाषणं स्त्रीणामज्ञानत्वाद्युक्तम् ॥ २८ ॥ विचित्रमद्भुतम् । नृत्तं चतुर्विधं—वैतालं ताण्डवं लास्यमुत्कटम् । वादित्रमपि चतुर्विधं—ततं घनं कांस्यं सुषिरम् । गीतं चतुर्विधं—पदमानदि-

२३ ग. दिगीशानां यथा । २५ बि. इव दुष्करौ । २८ व. प्रथमार्धस्थाने—पठन्नाख्यायिकां विद्यानृत्ये गीते विशारदः । २९ ग. उत्तरार्धस्थाने—विराटान्तःपुरे राजन्नमयिष्याम्यहं स्त्रियः; च. ज. विराटभवने स्त्रियः; व. विराटनगरे स्त्रियः; त्रि. बि. गृहे स्त्रियः । ३० व. उत्तरार्धस्थाने—छादयिष्यामि राजेन्द्र स्वयमात्मानमात्मना ।

२५—२७ स्थाने व. पुस्तके—
ज्याघातकठिनौ ह्येतौ गूहितुं नैव चोत्सहे ।
उभौ कम्बू परामृश्य हस्ताभ्यां ग्रहितुं पुनः ॥ १ ॥
वलये प्र(ति)विमुच्याहं कुण्डले ज्वलनोपमे ।
वेणीकृतशिरा रम्भा भविष्यामि बृहन्नला ॥ २ ॥ इति ।

१ 'छादयिष्यामि कम्बुभिः ।' इति पाठान्तरम् ।

युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ।
उषिताऽस्मीति वक्ष्यामि पृष्टो राज्ञा च पाण्डव ॥३१॥

एतेन विधिना छन्नः कृतकेन यथाऽनलः ।
विहरिष्यामि राजेन्द्र विराटभवने सुखम् ॥ ३२ ॥

इति श्रीमहाभारते विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ३

धर्मेण पृष्टो नकुलो ग्रन्थिक इति नाम धृत्वाऽश्वबन्धो भूत्वा मत्स्यस्याश्वशिक्षादिकर्माणि कुर्वंस्तन्नगरे विहरिष्यामीत्यवोचत् ॥ १ ॥ एवं तन्तिपालनाम्ना गोसंख्याता भूत्वाहं विचरिष्यामीति सहदेवः ॥ २ ॥ द्रौपदी च सैरन्ध्रीवेषेण सुदेष्णामुपस्थास्य इति ॥ ३ ॥

**वैशंपायन उवाच—**

इत्येवमुक्त्वा पुरुषप्रवीरस्तथाऽर्जुनो धर्मभृतां वरिष्ठः ।
वाक्यं तथाऽसौ विरराम भूयो नृपोऽपरं भ्रातरमाबभाषे ॥

**युधिष्ठिर उवाच—**

किं त्वं नकुल कुर्वाणस्तत्र तात चरिष्यसि ।
कर्म तत्त्वं समाचक्ष्व राज्ये तस्य महीपतेः ।
सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः ॥ २ ॥

**नकुल उवाच—**

अश्वबन्धो भविष्यामि विराटनृपतेरहम् ।
सर्वथा ज्ञानसंपन्नः कुशलः परिरक्षणे ॥ ३ ॥
ग्रन्थिको नाम नाम्नाऽहं कर्मैतत्सुप्रियं मम ।
कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ।
प्रियाश्च सततं मेऽश्वाः कुरुराज तथा तव ॥ ४ ॥

---

क्रुष्टमधुराख्यम् । 'पण्डिताः पदमिच्छन्ति मानामिच्छन्ति गायनाः । स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः' ॥२९॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ लक्षा० ] संवर्तुं नृपदुष्करावित्यत्र संवरणमाच्छादनं कर्तुम् ॥ २५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ नील० ] परितश्चारयितुं शीलं यस्याः सा परिचारिणी सैव परिचारिका, द्रौपद्याः भर्तेति गूढोऽभिसन्धिः । पक्षे परिचारिका सेवाकर्त्री ॥ ३१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अर्जु० ] कृतकेन यथानलः कृतकं भस्म तेनाच्छादितोऽग्निरिव ॥ ३२ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ चतु० ] कृतकेन भस्मना ॥ ३२ ॥

इति श्रीमहाभारतटीकायां चतु. वि. प. द्वितीयोऽध्यायः ॥ २ ॥

[ सर्व० ] कृतकं कपटम् ॥ ३२ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ विरो० ] 'परिरालिङ्गने' मेदिनी । आलिङ्गनार्थं चरतीति परिचारिका तेन न मिथ्या ॥३१॥ कृतकेन भस्मना ॥३२॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ नील० ] इत्येवमिति ॥ १ ॥ परिरक्षणे अश्वानामिति शेषः ॥ ३ ॥ ग्रन्थान् आयुर्वेदम् आध्वर्यवं च वेत्तीति ग्रन्थिकोऽश्विनोः सुतत्वात् । "अश्विनौ वै देवानां भिषजावश्विनावध्वर्यू" इति श्रुतेः ॥ ४ ॥

[ अर्जु० ] अश्वबन्धः अश्वानेकार्थनियामकः ॥ ३ ॥

[ चतु० ] अश्वबन्धः अश्वेष्वधिकृतः ॥ ३ ॥

[ सर्व० ] अश्वपरीक्षाग्रन्थान्वेत्तीति ग्रन्थिकः ॥ ४ ॥

[ विरो० ] बन्धः बन्धा ( दे ) ॥ ३ ॥ ग्रन्थेन दीव्यति ग्रन्थिकः । अश्वशास्त्रज्ञानात् ॥ ४ ॥

[ विष० ] ज्ञानसंपन्नः अश्वलक्षणज्ञानसंपन्नः ॥ ३ ॥ ग्रन्थिको नाम नाम्नाहमिति । ग्रथ्नाति शत्रुविजयाय कुटिलभावं करोतीति ग्रन्थिकः । ग्रथि वकि कौटिल्ये । यद्वा ग्रन्थिको नाम दाम्नाऽहमिति पाठे दाम्ना सह ग्रन्थिको नाम दामग्रन्थिक इति । अश्वरज्जूं ग्रन्थितुं जाने ॥ ४ ॥

---

३१ ग. घ. व. राज्ञा च भारत । इति द्वितीयोऽध्यायः ॥ २ ॥
१ ग. घ. व. प्रथमश्लोको द्वितीयाध्यायान्ते; वि. प्रथमश्लोको नास्ति ।

२ उत्तरार्धस्थाने घ. विराटनगरे राजन्रंस्यसे केन कर्मणा; ण. ईदृशीमापदं प्राप्य कथं तत्र निवत्स्यसि । ३ बि. परिमार्गणे ।

---

३२ शादुत्तरं क. अधिकम्—

युधिष्ठिर उवाच—

वासुदेवसमो लोके यशसा विक्रमेण च ।
सोऽयं राज्ये विराटस्य भवने भरतर्षभः ॥ १ ॥
मेरुः प्रच्छादित इव वसन्वभ्रेण सुष्टिना ।
आख्याता षण्डकोऽस्मीति प्रतिज्ञातं हि पातकम् ॥२॥ इति ।

२ यस्य स्थाने क. पुस्तके—

किंकर्मा किंसमाचारो नकुलोऽयं भविष्यति ।
अदुःखार्हश्च बालश्च लालितश्चापि नित्यशः ॥
सोऽयमार्तश्च शान्तश्च किन्तु रोचयतात्विह । इति ।

४ र्थादुत्तरं ज. अधिकम्—

पुरा युधिष्ठिरस्याहं हयज्ञो भरतर्षभ ।
न दुष्टाश्च भविष्यन्ति किशोरा वडवास्वपि ॥
सुपृष्ठाश्च भविष्यन्ति पृष्ठेषु च रथेषु च । इति ।

तत्रैव ण. पुस्तके—

न दुष्टाश्च भविष्यन्ति किशोरा वडवास्तथा ।
अदुष्टाश्च भविष्यन्ति पृष्ठेषु रथवर्त्मसु ॥ इति ।

ये मामामन्त्रयिष्यन्ति विराटनगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ॥ ५ ॥
पाण्डवेन पुरा तात अश्वेष्वधिकृतः पुरा ।
विराटनगरे छन्नश्चरिष्यामि महीपते ॥ ६ ॥

**युधिष्ठिर उवाच—**

सहदेव कथं तस्य समीपे विहरिष्यसि ।
किं वा त्वं कर्म कुर्वाणः प्रच्छन्नो विहरिष्यसि ॥७॥

**सहदेव उवाच—**

गोसंख्याता भविष्यामि विराटस्य महीपतेः ।
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् । ८॥
तन्तिपाल इतिख्यातो नाम्नाऽहं विदितस्तथा ।
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥९॥
अहं हि सततं गोषु भवता प्रहितः पुरा ।
तत्र मे कौशलं सर्वमवबुद्धं विशांपते ॥ १० ॥
लक्षणं चरितं चापि गवां यच्चापि मङ्गलम् ।
तत्सर्वं मे सुविदितमन्यच्चापि महीपते ॥ ११ ॥
वृषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ १२ ॥

---

[ नील० ] अश्वेषु नास्ति श्वो येषां ते शूराः, समरे तृणीकृतप्राणास्तेषु अधिकृतो मुख्य इति गूढाशयः । पक्षे स्पष्टोऽर्थः ॥ ६ ॥ संख्याने परीक्षायाम् ॥ ८ ॥ तन्तिपालः तन्तिर्बलीवर्दा यस्यां दीर्घस्थूलरज्ज्वां वणिग्भिरल्पैर्दामभिर्बध्यन्ते सा प्रकृतोपयोगिनी । गूढाभिसंधौ तु तन्तिर्वाक् " तस्य वाक्तन्तिर्नामानि दामानि " इति श्रुतेर्वाक्पालः युष्मद्वचनार्थानुष्ठातेत्यर्थः ॥ ९ ॥

[ अर्जु० ] प्रतिषेद्धा रक्षकः ॥ ८ ॥ प्रहितः अधिकृतः ॥ १० ॥ अन्यत् अमङ्गलम् ॥ ११ ॥ ऋषभानपीत्यादि औषधे शक्तेर्मूत्रमुपाघ्राय ऋषभान् जानामि येषां योगे वन्ध्यापि प्रसूयते । योग इत्यध्याहार्यं, मूत्रं मूत्रगन्धं मधुराभिषाक्षीरादिकं तद्वेद्य बीजस्य धात्रा क्रियते (?)॥ १२ ॥

[ चतु० ] आमन्त्रयिष्यन्ति प्रक्ष्यन्ति ॥ ५ ॥ प्रतिषेद्धा नियामकः ॥८॥ प्रकृतो नियुक्तः । अनुबन्धं संपन्नम् ॥१०॥ पूजितलक्षणं गौर्महिषी च (?) ॥ ११ ॥

[ सर्व० ] संख्याने परीक्षायाम् ॥ ८॥ तन्तिः बलीवर्दाः यस्यां दीर्घस्थूलरज्ज्वां वणिग्भिरल्पैर्दामभिर्बध्यन्ते सा ॥ ९ ॥

[ विरा० ] प्रतिषेद्धा अयोग्यगोदोहनिषेद्धा । संख्याने सम्यग्ज्ञाने ॥ ८ ॥ तन्ती गोशास्त्रसिद्धान्तज्ञानी सन् पालयति तन्तिपालः ॥ ९ ॥ प्रकृतः अधिकृतः ॥१०॥ अन्यदमङ्गलम् ॥ ११ ॥ ऋषभानित्यादि । ऋषभान् मूत्रमुपाघ्राय जानामि वन्ध्या अपत्योत्पत्तिप्रतिबन्धकदुरदृष्टवती । अत्रापि मूत्रमुपाघ्रायेत्यन्वयः । प्रसूयते दुरदृष्टनाशद्वारेति ॥ १२ ॥

[ विष० ] एवं प्रवक्ष्यामि एवं पूर्वोक्तं यदहं युधिष्ठिरस्य ग्रन्थिकनामा अश्वाध्यक्ष आसमित्यर्थः ॥ ५ ॥ गवां संख्याता अध्यक्षः ॥ ८ ॥ तनोति समयविस्तारं पालयतीति तन्तिपालः । यद्वा तन्त्रपाल इति पाठे तन्त्रं सप्ताङ्गराज्यं पालयतीति तन्त्रपालः सर्ववेदित्वात् । सङ्केतशब्देन गवां निवारकः । व्येतु गच्छतु ॥९॥ प्रकृतोऽधिकृतः ॥ १० ॥ मङ्गलं कार्तिकप्रतिपदादिपूजाकालं गोशान्तिं वा ॥ ११ ॥

[ लक्षा० ] *अश्वान् परिभविष्यन्तीत्यत्र अश्वान् वडवा वाम्यः जातु कश्चिच्च परिभविष्यन्ति तथा वडवाः शिक्षिताः करिष्यामीति भावः ॥ ५ ॥ तथा सज्वलितमित्यत्र तद्विदो जनाः नीतिशास्त्रविदो जनाः तथा तथाविधं सहदेवं किंचित्सज्वलितं ददृशुः । पूर्वोक्तप्रकारादपि नीत्यादिशास्त्रे किंचिदधिकबुद्धिप्रकाशसहितं ददृशुरिति योजना ॥ ६ ॥ सुनीतमायी शूरश्चेत्यत्र सुष्ठु नीताः नीतिमन्तः मायिनो यस्मात्स तथोक्तः ॥ ७ ॥

---

५ ज. ये च मा मन्त्रयिष्यन्ति; ण. न दुष्टाश्च भविष्यन्ति । व. विहरिष्ये यथासुखम् । ६ वि. पाण्डवेषु । उत्तरार्धस्थाने व. अब्दं विराटनगरे बहुच्छदविराजिते । षष्ठादुत्तरं. च. ज. नच मां वेत्स्यते कश्चिन्नोपयिष्ये च तं नृपमित्याधिकम् । ७ वि. विचरिष्यसि । ८ ख. प्रतिमोक्ता च दोग्धा । ९ व. तन्तिपालेति मे नाम स्वयं क्लृप्तं भविष्यति । वि. विदितमस्तु ते । १० ग. घ. प्रकृतः पुरा । च. ज. डं. कर्म ह्यनुबद्धं । ११ ज. तत्तत्सर्वं सुविदितमद्यात्रापि । १२ वि. राजेन्द्र शुभान्पूजितलक्षणान् ।

---

६ श्लोकात्परं ङ. पुस्तके—

इत्येतद्वः प्रतिज्ञातं विहरिष्याम्यहं यथा ।
वैशम्पायन उवाच—नकुलेनैवमुक्तस्तु धर्मराजोऽब्रवीद्वचः ॥

७ मात्पूर्वं ख. पुस्तके—

बृहस्पतिसमो बुद्धया नयेनोशनसा समः ।
मन्त्रैर्नानाविधैर्नीतिपथैः सुपरिनिष्ठितैः ॥ १ ॥
सुप्रणीतैः सुमार्गस्थं राजतन्त्रमवाहयत् ।
न चास्मिन्ज्वलितं किंचिद्ददृशुस्तद्विदो जनाः ॥ २ ॥
सुनीतो न्यायिशूरश्च सर्वमन्त्रविशारदः ।
अधिकश्च प्रियो मेति कुन्त्याः प्रियतरः सदा ॥ ३ ॥ इति

१२ शादुत्तरं ख. अधिकम्—

अरोगा बहुलाः पुष्टाः क्षीरवन्त्यो बहुप्रजाः ।
निष्पन्नसत्त्वाः सुभृता व्यपेतज्वरकिल्बिषाः ॥
नष्टचोरभया नित्यं व्यालव्याघ्रविवर्जिताः ।
गावः सुसुखिता राजन्निरुद्विग्ना निरामयाः ॥
भविष्यन्ति मया गुप्ता विराटपशवो नृप ।

---

* ४ र्थादुत्तरं ७ मात्पूर्वं च वर्तमानानां पाठभेदश्लोकानां सरूपमस्या मूलम् ।

सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ।
न च मां वेत्स्यते कश्चित्तोषयिष्ये च पार्थिवम् ॥१३॥
युधिष्ठिर उवाच—
इयं हि नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ॥
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ॥१४॥
केन स्म द्रौपदी कृष्णा कर्मणा विचरिष्यति ।
नहि किंचिद्विजानाति कर्म कर्तुं यथा स्त्रियः ॥१५॥
सुकुमारी च बाला च राजपुत्री यशस्विनी ।
पतिव्रता महाभागा कथं नु विचरिष्यति ॥ १६ ॥
माल्यगन्धानलंकारान्वस्त्राणि विविधानि च ।
एतान्येवाभिजानाति यतो जाता हि भामिनी ॥१७॥
द्रौपद्युवाच—
सैरन्ध्र्योऽरक्षिता लोके भुजिष्याः सन्ति भारत ।
नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ।
साऽहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ॥ १८ ॥
युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ।
उषिताऽस्मीति वक्ष्यामि पृष्टा राज्ञा च भारत॥१९॥

[ नील० ] इयं हीति । माता कुलवृत्तिः आदिभूमिः गौर्वा । 'माता गौर्यादिजननीगोब्रह्माण्यादिभूमिषु' इति मेदिनी । स्वसा अम्बिका पार्वतीवत्पूज्येत्यर्थः । "एष ते रुद्रभागः सह स्वस्राम्बिकया तं जुषस्व । शरद्वा अस्याम्बिका स्वसा " इति मन्त्रब्राह्मणदर्शनात् "जाया गार्हपत्यः पुत्रोऽन्वाहार्यपचनः" इति तस्या अपि देवतात्वेन संस्तवात् । 'माता सत्यवती भूमिर्धेनुर्ज्येष्ठा स्वसा भवेत्' इत्यप्युदाहरन्ति ॥ १४ ॥ बाला नित्यनूतना ॥ १६ ॥ यतो यस्मिन् दिने जाता तत आरभ्य माल्यादीन् भोगानेव वेत्ति न क्लेशानित्यर्थः ॥१७॥ सैरन्ध्रीति । सीरं प्रतिसीराऽन्तःपटः ध्रियतेऽनयाऽस्यै वेति सीरन्ध्रा सैव सैरन्ध्री स्वार्थे तद्धितः । अन्तःपुरपरिचारिका राजभार्या वा । 'सैरन्ध्री परवेश्मस्था शिल्पकृत्स्ववशा स्त्रियाम् । वर्णसंकरसंभूतस्त्रीमहिल्लिकयोरपि' इति विश्वः । 'मतल्लिकयोः' इति मेदिनीपाठः । आद्ये महिल्लिका राजदाराः । द्वितीये मतल्लिकाः प्रशस्तास्त्रिय इति । दासीपक्षे अरक्षिता इति च्छेदः स्ववशा इत्युक्तेः । पक्षे रक्षिता इत्येव । भुजिष्या पालनीया पालयित्री च । भुजपालनाभ्यवहारयोरित्यस्य रूपम् । नैवमन्याः स्त्रियो रूपवतीर्यान्ति प्राप्नुवन्ति पश्यन्तीतरे इत्यर्थः । दासी (सीः?) इति भावः । पक्षे नैवं प्रकाशे यान्ति संचरन्तीत्यर्थः ॥१८॥ द्रौपद्याः परिचारिकेति राहोः शिर इतिवदभेदेऽपि भेदोपचारः द्रौपदीरूपा युधिष्ठिरस्य परिचारिकेत्यर्थः ॥ १९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अर्जु० ] मातेवेति पालनविषयमासाद्य सादृश्ये ॥१४॥ सैरन्ध्र्योऽरक्षिता इत्यादि । भो भारतवंशोद्भव सैरन्ध्र्यः स्वेच्छया परवेश्मनि शिल्पकारिका अरक्षिता अन्येनेति । रक्षितस्त्रीका इति पाठे पररक्षिताः सन्ति भुजिष्याः परिचारिकाः एता आत्मनैव कृतरक्षा एकपत्नीव्रताश्च । तदेवंप्रकारा भवन्ति । तत्र स्त्रियो मनुष्यादुत्तमपुरुषानुरूपमन्यं ता न यान्ति यथेतरे जनाः क्षुद्रत्वादेवेति लोके निश्चयः । तदेव आत्मगुप्ता चरिष्यामीति।एकपतिरेव व्रतं यासां तास्तथा। सारथिसूदाध्यक्षादयः कुमारा इन्द्रादयश्च मां रक्षिष्यन्तीति गूढार्थः (?) ॥ १८ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ चतु० ] मातेव जननीव परिपाल्या असंत्याज्या स्वसा भगिनीव पूज्या अपरिहरणीया । यद्वा माता एकादशी स्वसा द्वादशी 'माता एकादशीं विद्यात्स्वसा च द्वादशीं विदुः' इत्यभिधानात् । परिपाल्या पूज्येति विशेषोक्तिः 'एकादशीमुपवसेद्द्वादश्यामर्चयेद्धरिम्' इति स्मृत्यर्थमनुरुन्धते ॥१४॥ स्त्रियः अन्याः ॥ १५ ॥ सुकुमारी मृदुस्वभावा । बाला नूतनयौवनस्था ॥ १६ ॥ सैरन्ध्र्यः परवेश्मस्थाः 'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिणी'इत्यमरः । भुजिष्याः दास्योऽपि सत्यो मान्याः अभिगम्याः नाभियान्ति नाभिगच्छन्तीति पुमांसोऽर्थ्यन्ते अतस्ता वे(र?)क्षिता एवेत्यन्वयः । रक्षिता यान्ति रक्ष्यमाणाः कालमतिवाहयन्ति । भुजिष्या दास्यो न तथा ॥ १८ ॥

[ सर्व० ] माता सत्यवती भूमिर्धेनुर्ज्येष्ठा स्वसा भवेत् ॥ १४ ॥ यतो यस्मिन्दिने जाता तत आरभ्य ॥ १७ ॥ सीरमन्तःपटः ध्रियतेऽनयेति सीरन्ध्रा सैव सैरन्ध्री परिचारिका । रक्षिता न भोग्येत्यर्थः । भुजिष्या दासी ॥ १८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

१३ ग. घ. व. वि. नच मां वेत्स्यति परस्तन्ने रोचतु पाण्डव । १५ ग. व. केन सा; वि. केनास्विद्रौपदी । १८ व. रक्षिता स्त्रीणाम् । ग. सन्ति भूभृत म् । च. ज. नैव मान्याः; क. एकपत्न्यः स्त्रियो; वि. सामान्याश्च स्त्रियो । उत्तरार्धं त्वरं क. प्रमदाहारिका लोके पुरुषाणां प्रवासिनाम् । इत्यधिकम् ।

१३ शादुत्तरं ख. अधिकम्—
इत्येतद्वः प्रतिज्ञातं विहरिष्याम्यहं यथा ।
विराटनगरे गूढो रंस्येऽहं तेन कर्मणा ॥
तोषयिष्ये च राजानं मा भूच्चिन्ता तवानघ । इति ।

सार्धचतुर्दशस्य स्थाने ख. पुस्तके—
इयं चाथ महाभागा द्रौपदी योषितां वरा ।
मत्स्यराजान्तिकं प्राप्य कर्मणा केन रंस्यते ॥ इति ।

आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ॥२०॥
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा भूत्ते दुःखमीदृशम्॥२१॥
युधिष्ठिर उवाच—
कल्याणं भाषसे कृष्णे कुले जाताऽसि भामिनि ।
न पापमभिजानासि साध्वी साधुव्रते स्थिता ॥२२॥
यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।
कुर्यास्तत्त्वं हि कल्याणि लक्षयेयुर्न ते तथा ॥२३॥

इति श्रीमहाभारते विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४

स्वपरिवारेषु कैः क्व वस्तव्यमिति व्यवस्थाकरणम् ॥ १ ॥ पाण्डवान्प्रति धौम्येन राजगृहवासनीतेरुपदेशः ॥ २ ॥

युधिष्ठिर उवाच—
कर्माण्युक्तानि युष्माभिर्यानि यानि करिष्यथ ।
मम चापि यथा बुद्धिरुचिता विधिनिश्चयात् ॥१॥
पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूदपौरोगवैः सार्धं द्रुपदस्य निवेशने ॥ २ ॥
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ ३ ॥
इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिकाः ।
पञ्चालानेव गच्छन्तु सूदपौरोगवैः सह ॥ ४ ॥

[ विरो० ] मातेव आत्मेव । पूज्या मानार्हा । ज्येष्ठेति युधिष्ठिरपत्नीत्वेन भीमादिपरम् ॥ १४ ॥ बाला अज्ञातपरचित्ताराधनोपाया ॥ १६ ॥ अभुजिष्या अभोग्या । केनचिदरक्षिता अपि सैरन्ध्र्यो लोके सन्ति । ननु कश्चित्प्रार्थयेतेत्यत आह–मानमर्हन्ति मान्याः परपुरुषानभिलाषिणीः स्त्रियः न यान्ति केऽपीति शेषः । मान्यं परपुरुषम् (?)। निश्चय इत्यनन्तरम् 'एकपत्नीव्रताश्चैता इति लोकस्य निश्चयः' इति जनार्दनटीका ॥ १८ ॥ परि भूषणे मेदिनी । भूषणार्थं चरति परिचारिका ॥ १९ ॥

[ विष० ] अत्र गोरक्षणे ॥ १३ ॥ नोऽस्माभिरियमविकारैरिन्द्रियैर्वर्षं यावत्सेव्या इत्यर्थः। यतः स्त्रीत्वाज्जनप्रत्यक्षं हास्यकटाक्षादिना आलोकः शङ्कां कुरुते । यद्वा प्रतिविन्ध्यादीनां जननीत्वात् 'जायाया इति जायात्वमात्मा वै जायते यतः' । यद्वा 'पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते । तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरम्' । यद्वा । 'माता पूर्वजभूमिः स्यात्स्वसा गौः कपिला मता' यद्वा माता प्रसूगोषु (?) ब्रह्माण्याद्यास्तु मातरः । यद्वा दशरथवाक्यम् 'यदा तदा हि कौशल्या दासीवत्सखिवच्च ह । भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति' ॥ यद्वा पितृभार्यागता भूमिः स्वसा इत्यभिधीयते ॥ १४ ॥ बाला नित्ययौवना ॥ १६ ॥ यतो जाता जन्मप्रभृति ॥ १७ ॥ सैरन्ध्र्यो रक्षिता लोके स्वत इति शेषः । स्वैरमात्मानं धरन्ति ताः स्वैरन्ध्र्यः । अत्र वकारलोपात्सैरन्ध्र्यः । 'सैरन्ध्री परवेश्मस्था कर्मकृत्स्ववशस्त्रियाम्' । यथा एता सैरन्ध्र्यो राजभवनं यदृच्छया यान्ति तथा अन्याः प्राकृतस्त्रियो नेत्यर्थः । ता अदास्यः कस्यचिन्न स्वाधीनाः ॥ १८॥

[ चतु० ] आत्मगुप्ता स्वयं रक्षिता ॥ २० ॥ दुर्हृदः विपक्षाः । लक्षयेयुः जानीयुः ॥ २३ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ विरो० ] आत्मभूषकत्वात् मामुद्दिश्य पृच्छसि । अर्थाद्भीमादीन् ॥ २० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ विष० ] दुर्हृदः दुष्टहृदयाः कामिनः ॥ २३ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ लक्षा० ] यथा न दुर्हृदः पापा इत्यत्र त्वां दृष्ट्वा दुर्हृदः पापाः पुनः सुखिनो यथा न भवन्ति तथा कुर्याः । भवती वर्णतः क्षत्रियवर्णतः यथा वर्तते तथा कुर्या इति पूर्वेणान्वयः ॥ २३ ॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ नील० ] कर्माणीति॥१॥ अग्निहोत्राणि अग्निहोत्रपात्राण्यरणीसहितानि होमसाधनभूता धेनूर्वा ॥ २ ॥
[ चतु० ] केवलान् शून्यान् ॥ ३ ॥
[ सर्व० ] सूदाः पाचकाः पौरोगवाः पटलगृहाधिकारिणः ॥२॥ इन्द्रसेनः सूतः ॥ ३ ॥
[ विष० ] इन्द्रसेनादयः सारथयः ॥ ३ ॥

२० छ. मां प्रीत्या; ज. मां गुप्ताम् । २२ ग. घ. वि. जाता यथा वदेत्; न. यथा सती । २३ व. ज. कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते यथा । इति तृतीयोऽध्यायः ॥ ३ ॥

१ ज. यानि तानि करिष्यथ । मम चापि यथा बुद्ध्या रुचितानि विनिश्चयात् । व. मम चापि तथा बुद्धी रुचिताभिविनिश्चयात् । २ छ. ज. सूतपौरोगवैः सार्धम् ।

सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः ।
गता ह्यस्मानपाहाय सर्वे द्वैतवनादिति ॥ ५ ॥

**वैशंपायन उवाच—**

एवं तेऽन्योन्यमामन्त्र्य कर्माण्युक्त्वा पृथक् पृथक् ।
धौम्यमामन्त्रयामासुः स च तान्मन्त्रमब्रवीत् ॥ ६ ॥

**धौम्य उवाच—**

विहितं पाण्डवाः सर्वं ब्राह्मणेषु सुहृत्सु च ।
याने प्रहरणे चैव तथैवाग्निषु भारत ॥ ७ ॥
त्वया रक्षा विधातव्या कृष्णायाः फाल्गुनेन च ।
विदितं वो यथा सर्वं लोकवृत्तमिदं तव ॥ ८ ॥
विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः ।
एष धर्मश्च कामश्च अर्थश्चैव सनातनः ॥ ९ ॥
अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत ।
हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहम् ॥ १० ॥
यथा राजकुलं प्राप्य सर्वान्दोषांस्तरिष्यथ ।
दुर्वसं चैव कौरव्य जानता राजवेश्मनि ॥ ११ ॥
अमानितैर्मानितैर्वा अज्ञातैः परिवत्सरम् ।
ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखम् ॥ १२ ॥

[ नील० ] न प्राज्ञायन्तेति यथार्थमेव । रहस्येव तैर्मंत्स्यदेशे वस्तव्यमिति मन्त्रितत्वात् ॥ ५ ॥ विहितं शास्त्रोक्तं ब्राह्मणादिषु उपस्थितेषु परिचर्यादिकं पाण्डवाः सर्वं जानन्तीति शेषः । याने विजययात्रायां प्रहरणे युद्धे । यद्यप्येवं तथाऽपि किंचिद्वक्ष्यामीति भावः ॥ ७॥ तदेवाह–त्वयेति । त्वया युधिष्ठिरेण इदं लोकवृत्तं प्राकृतजनशालिमरक्ष्यमाणासु स्त्रीषु साध्वीष्वपि अन्याय्यकल्पनमतः कृष्णा रक्ष्यैवेत्यर्थः ॥ ८ ॥ विद्वांसोऽपि सुहृद्भिः प्रीत्याऽवश्यं बोधनीया एवेत्याह–विदिते चापीति । एवं सौहार्दप्रदर्शनेन धर्मादयोऽनुसृता भवन्तीति भावः ॥ ९ ॥ हन्तेत्यनुकम्पायां राजवसतिं राजकुले वासं तद्विधिमित्यर्थः ॥ १० ॥ दुर्वसं दुःखेन वस्तुं शक्यम् ॥ ११ ॥

[ अर्जु० ] 'विहितं पाण्डवाः सर्वे' इत्यादि 'सुखमूषुः सुसंवृताः' इत्यन्तस्य–पाण्डवानां सुरक्षितसेवकस्थितीनां प्रमादात्सेवास्थितिभङ्गो मा भूदिति धौम्येन विराटप्रीत्यर्थमुपदिष्टा नीतयस्तात्पर्यार्थः । [वि]हितं पाण्डवाः सर्वे इत्यादि विदितं वो यथान्यायमित्यादि च श्लोकद्वयस्यार्थः । अथ प्रथमश्लोको द्वितीयपरार्धेन योजनीयः तदयमर्थः । हे सर्वे पाण्डवाः वो युष्माभिरिदं लोकवृत्तं लोकानां चरितं यथान्यायं विदितं ज्ञातम् । किंभूतं तदाह ब्राह्मणेषु सुहृदादिषु यद्विहितं प्रतिपादितम् । तर्हि ज्ञापयितुमशक्यमित्याह–विदिते चापि वक्तव्यमिति । एवं ज्ञापनोपपत्तिं विधायाह–त्वया रक्षेति । हे भारत युधिष्ठिर त्वया कृष्णाया रक्षा विधातव्या फाल्गुनेन अर्जुनेन च विधातव्येति योज्यम् । एतदुक्तं भवति । भीमादयो विदितलोकवृत्तान्तत्वाद्विराटसमीपे व्यवहर्तुं समर्थाः अतस्तेषां रक्षा न चिन्त्यार्हा । ( रक्षां रक्षतु मे तेन शक्त्योग्यतापत्तेः भवतु न तथा सभासदां सर्वरक्षाधिकारित्वात् अर्जुनस्यापि क्लीबवेशधारित्वात् अर्जुनस्यापि

इति तात्पर्यार्थः । विदिताः सर्वे इति पाठे हे भारत युधिष्ठि[र] सर्वे भ्रातरः पाण्डवास्तव ब्राह्मणादिषु विदितावञ्चना[ः] निरवद्या इति यावत् ?) । अतस्तेषां रक्षा न चिन्तनीयेति भावः । विपूर्वदोऽवखण्डने इत्यस्य रूपम् । अपरं पूर्ववत् । न प्रपञ्च्यते ॥ याने प्रहरणे यानं रथादि, प्रहरणं शस्त्रादि । कृत्यच इति णत्वम् ॥ ७॥८ ॥ राजकुलं राजगृहम् 'कुलं गोत्रे गणे गृहे' इति कोषान्तरे ॥ ११ ॥

[ चतु० ] अपाकीर्य विहाय ॥ ५ ॥ सर्वं कृत्यजातं याने यात्रायां प्रहरणे संग्रामे । प्रवहणे इति पाठे याने रथादौ प्रवहणे शकटादौ ॥ ७ ॥ हेतुं कारणं विपरीतमित्यर्थः ( ?) अत्र राजकुलवासे । हन्तेत्यनुकम्पायाम् । राजवसतिं राजोपासनोपयुक्तां नीतिम् ॥ १० ॥ दुर्वसं कृच्छ्रेण वस्तव्यम् कौरव्य हे युधिष्ठिर जानता ज्ञानवता जानतामिति व[ा] पाठः ॥ ११ ॥ अमानितैर्मानितैर्वा वस्तव्यमिति शेषः परि समग्रम् ॥ १२ ॥

[ सर्व० ] याने विजययात्रायां प्रहरणे युद्धे एतेषू[प]स्थितेषु पाण्डवाः सर्वं जानन्ति तथापि किंचिद्वक्ष्यामि ॥ ७ ॥ दुर्वसं दुःखेन वस्तुं शक्यम् ॥ ११ ॥

[ विरो० ] प्रहरणे प्रवहने प्रकृष्टप्रापणे ॥ ७ ॥ हे[तुं] नीतिम् । राज्ञि वसतिर्यया राजवसतिम् ॥ १० ॥ दुर्वसं कृ[च्]छ्रेण वस्तव्यम् । जानता ज्ञानवता ॥ ११ ॥

[ विष० ] विहितं पाण्डवाः सर्वं सर्वमिति शिक्षादि[कं] कृतम् ॥ ७ ॥ इतिवृत्तमैहिको राजधर्मः सेवालक्षणः ॥ ८॥ राजवसतिं राजगृहसमाचारम् ॥ १० ॥ सेवाधर्मं जानता पुरुषेण राजवेश्मनि अमानितेन दुर्वसं वस्तुमशक्यम् । अज्ञातैर्भवद्भिर्विशेषतो दुर्वसमित्यर्थः ॥ ११ ॥

[ लक्षा० ] हन्तेमां राजवसतिमित्यत्र राजवसतिं राज्ञो निकटे निवसनप्रकारम् ॥ १० ॥ राजकुलं राज्ञ

५ ज. गता ह्यस्मानपाकीर्य; व. ह्यस्मानवाकीर्य । पञ्चमादुत्तरम्—तानन्वशात्स धर्मात्मा सर्वधर्मविशेषवित् । धौम्यः पुरोहितो राजन्पाण्डवान्पुरुषर्षभान् ॥ इत्यधिकः । ७ व. याने प्रवाहने चैव । ८ ग. घ. च. व. लोकवृत्तमिदं नृप । १० ग. घ. व. हेतुमात्रं निबोधत । ग. घ. व.; राजपु[त्र] ब्रवीमि वः । ११ दे. ण. दुर्वसं बत कौरव्य । व. चैव कौरव्याजानता । १[२] वि. ग. घ. च. व. अमानितैः सुमानार्हाः ।

दृष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिपतेत्परः ॥ १३ ॥
यो न यानं न पर्यङ्कं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् ॥ १४ ॥
यत्र यत्रैनमासीनं शङ्केरन् दुष्टचारिणः ।
न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥ १५ ॥

निकटम् । दुर्वसन्नेव कौरव्याऽजानता राजवेश्मनीत्यत्र राजवेश्मनि तेन राज्ञा अजानता श्वदा (?) दुर्वसन् दुःखेन वासं कुर्वन्नेष भवेत् ॥ ११ ॥

[ नील० ] दृष्टद्वारः प्रतीहारद्वारा निवेद्यैव राजानं द्रष्टुमिच्छेन्न त्वननुज्ञात इत्यर्थः । दिष्टेत्यपि पाठः । पाठान्तरे रहस्येषु मन्त्रकार्येषु न विश्वसेत् संमतोऽस्मीति बुद्ध्या तत्र न गच्छेत् । पुत्रादिष्वपि अविश्वस्ता राजानो मन्त्रविप्लवभयात्सद्यो मारयेयुरिति भावः । तदेवेति परेण सह वैरं मा भूदिति परासनं नान्विच्छेत् ॥ १३ ॥ यानं परकीयमिति शेषः ॥ १४ ॥ दुष्टचारिणो दुष्टाचारा: यत्र यत्र द्यूतमद्यवेश्यादिस्थानेषु स्वनगरस्थपरकीयचारमण्डले वा आसीनमेनं द्यूतादिप्रियोऽयं परैर्भेदितोऽयमिति शङ्केरंस्तत्र नोपविशेत् । राजगामिपैशुन्यभयादित्यर्थः ॥ १५ ॥

[ अर्जु० ] भर्ता गोप्ता चेति पुरुषः प्रधानम्, ईश्वरः स एव विग्रहः विग्रहवान् अभेदात् तद्वान् विग्रहः कायः स च भौतिकः तदत्र शङ्खलिखितौ, मुखतो ब्राह्मणं, मूर्ध्नो राजानमसृजदिति मूर्धाभिषिक्तो राजा भवति सर्वाणि भूतान्यतः त्रयी धर्माण्यधिकुरुते तं प्रजापतिस्तेजसा स्वेन प्राविशत् सोऽभ्यराजद्ब्रह्मतेजसा तस्येयं पृथ्वी सत्यं परित्यज्य स चान्यक्त उप औषधिभ्योऽवासृजत् ततो भावास्तं प्रजापतिमूचुः दण्डादि( ना ) रक्षस्वेमाः प्रजा इत्यादि । दिष्टद्वारो लभेद् द्रष्टुमिति । दिष्टमादिष्टं द्वारं यस्य मुक्तद्वार इत्यर्थः । द्रष्टुं राजानमिति शेषः । नाभिषजेत् मदर्थमिदं कल्पितमिति सङ्गं न कुर्यात् ॥ १३ ॥ नारोहेत् संमतोऽस्मीति स राजवसतिं वसेत् । वल्लभोऽहमिति न विश्वसेदित्यर्थः । राजवसतिं वसेत् राजगृहे वसेत् । प्राप्य इत्यध्याहारो वा ॥ १४ ॥ अथ यत्रैनमिति । यत्र भाण्डागारान्तःपुरादिसमीपे ॥ १५ ॥

[ चतु० ] दिष्टद्वारोऽनुमतप्रवेशः । रहस्येषु गोप्येषु न विश्वसेत् नातिशयी स्यात् । नाभिषजेत् मदीयमिदं त्वया अध्यास्यते इति न पराभवेत् ॥ १३ ॥ यानं दोलादि । पर्यङ्कं शयनादि । संमतः संमानभाक् । राजवसतिं राजकुलम् ॥ १४ ॥

[ सर्व० ] दृष्टद्वारः प्रतीहारद्वारा निवेद्यैव राजानं द्रष्टुमिच्छेत् । पाठान्तरे रहस्येषु मन्त्रकार्येषु न विश्वसेत् संमतोऽस्मीति बुद्ध्या तत्र न गच्छेदित्यर्थः ॥ १३ ॥

[ विरा० ] परिवत्सरमित्यनन्तरम्–' ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखम् ' इति जनार्दनः । राज्ञा दिष्टमाज्ञप्तं द्वारं यस्य स राजदिष्टद्वारः । न विश्वसेत् विश्वस्तोऽस्मीति न भवेत् । अभिषङ्गः पराभवः ॥ १३ ॥ यानमश्वम् । वसतिं वसतौ प्रति वा ॥ १४ ॥

[ विष० ] दिष्टद्वार उक्तद्वारः । द्रष्टुं सर्वावसरे प्रविशेत् राजस्वेषु न विश्वसेत् । ममेदं ममायत्तमिति विश्वासं न कुर्यात् । यत्र नाभिषजेत्पर इति यस्मिन्नासने परः ममेदमिति अभिषङ्गं कोपजनितं भ्रूभङ्गदर्शनमङ्गुलीतर्जनमोष्ठस्फुरणादि न कुर्यात् ॥ १३ ॥ यत्र भाण्डागारान्तःपुरसमीपे आसीनं दुष्टचारिणः शङ्केरंस्तत्राहं वल्लभ इति कृत्वा नोपविशेत् ॥ १५ ॥

[ लक्षा० ] दृष्टद्वारो लभेदित्यत्र दृष्टद्वारः द्वारे दृष्टः सन् द्रष्टुं राजानं द्रष्टुं लभेत् गच्छेत् । यत्र नाभिषजेत्पर इत्यत्र यत्र परः नाभिषजेत् अभिषङ्गं संबन्धं न प्राप्नुयात् । ममेदमासनमिति कलहं नं कुर्यादिति भावः ॥ १३ ॥ यो नयानयपर्यङ्कमित्यत्र इतस्ततः नीयते आनीयत इति नयानयः । सचासौ पर्यङ्कश्च तम् ॥ १४ ॥ शङ्केरन् दृष्टचारिण इत्यत्र दृष्टे एतद्दर्शनविषये अन्तःपुरे चारिणः शसंदारादिजनाः (?) ॥ १५ ॥

१३ ज. दिष्टद्वारो लभेद्द्वारं रहस्येषु; व. दिष्टद्वारो विशेद्राष्ट्रं राजंस्तेपु—तमेवावासमन्विच्छेद्यत्र नाभिलषेत्परः; ग. ज. नाभिषजेत्परः घ. व. नाभिलषेत्परः । १४ व. ज. न पीठं न वरासनम् ।

१२ शस्योत्तरं च. अधिकम्–

पाण्डवाग्निरयं लोके सर्वशस्त्रेन्धनो महान् ।
भर्ता गोप्ता च भूतानां राजपुरुषविग्रहः ॥ १ ॥
सर्वात्मना वर्तमानं यथा दोषो न संस्पृशेत् ।
राजानमुपतिष्ठन्तं तस्य वृत्तं निबोधत ॥ २ ॥
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ ३ ॥
एतत्प्रपञ्चपुरुषं निर्दहेदवमानितम् ।
राजा तस्माद्बुधैर्नित्यं पूजनीयः प्रयत्नतः ॥ ४ ॥
नातिवर्तेत मर्यादां पुरुषो राजसंमतः ।
व्यवहारं पुनर्लोके मर्यादां पण्डिता विदुः ॥ ६ ॥ इति ।

न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ १६ ॥
असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ १७ ॥
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कदाचन ।
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥ १८ ॥
विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ॥ १९ ॥
गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥ २० ॥
नहि पुत्रं न नप्तारं न भ्रातरमरिंदमाः ।
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ॥ २१ ॥
यत्नाच्चोपचरेदेनमग्निवद्देववच्चिह ।
अनृतेनोपचीर्णो हि हन्यादेव न संशयः ॥ २२ ॥
यद्यद्भर्तानुयुञ्जीत तत्तदेवानुवर्तयेत् ।
प्रमादमवलेपं च कोपं च परिवर्जयेत् ॥ २३ ॥

[ नील० ] नानुशिष्यात् इदमित्थं कुर्विति नाज्ञापयेत् तूष्णीं मौनेन काले पराक्रमसमये समभिपूजयेत् स्तुवीत ॥ १६ ॥ स्तुतिरप्यभूतार्था न कर्तव्येत्याह—असूयन्तीति । दूषयन्तीत्यर्थः ॥ १७ ॥ येऽन्तःपुरचराः यांश्च राजा द्वेष्टि ये च राज्ञोऽहिता द्वेष्टारस्तैः सर्वैः सह मैत्रीं न कुर्यात् ॥ १८ ॥ राज्ञि राजसन्निधौ विचरतो विचारपूर्वकं वसतो न क्षतिर्मानहान्यादिर्जायते ॥ १९ ॥ गच्छन्निति । परामुत्कृष्टां भूमिं नित्यं गच्छन् आसनार्थं प्राप्नुवन् राज्ञा अपृष्टोऽसंभाषितोऽनियोजितः स्वे स्थाने उपविशेत्यनाज्ञप्तो जात्यन्ध इव तत्स्थानमपश्यन्तमिवात्मानं मन्येत यावद्राजा न संभाषते नाप्यासनं दिशति तावत्प्रतीक्षेतैवेत्यर्थः ॥ २० ॥ अन्यथा दोषमाह—नहीति ॥ २१ ॥ यत्नादिति । अतिसान्निध्यादग्निरिव राजा दहति अवज्ञानादेव इव सर्वं हरतीत्यर्थः । अनृतेन कूटकार्षापणादिना उपचीर्ण आराधितः हन्यादेव ॥ २२ ॥ भर्ता राजा अनुयुञ्जीत आज्ञापयेत् पृच्छेद्वा । अनुवर्तयेत् कुर्यात् वदेद्वा । प्रमादमनवधानताम् । अवलेपं शौर्यादिगर्वम् ॥ २३ ॥

[ अर्जु० ] न चानुशिष्यादिति । अपृच्छन्तं राजानं नानुशिष्यादिति न संबोधयेत् । तूष्णीं मौनेन काले समये । अनृतवादिनोऽविद्यमानगुणपाठकान् । उक्तं च—मिथ्यात्वं यदायाति तदा मृषावादिनं मन्त्रिणमहंकारिणमसूयन्ति ॥ १६ ॥ १७ ॥ नैषां दारेषु कुर्वीत इत्यादि । एषां दारेषु भार्यासु मैत्रीं न कुर्वीत ये जना अन्तःपुरचारिणस्तेष्वपि, तथा यान् जनान् द्वेष्टि राजा तेष्वपि मैत्रीं न कुर्वीत इत्यन्वयः । ये पुनरहिता राज्ञः शत्रवस्तेष्वपि इति योज्यम् । तदयमभिप्रायः । राजदारेषु मित्रत्वे राज्ञामतिशङ्का एवमन्तःपुरचरादिषु । दारैरिति पाठे सहेति योज्यम् ॥१८॥ न क्षतिरिति मानधनादिहानिः ॥१९॥ यत्नाच्चोपचरेदेनमग्निवद्देववत्सदेत्यादि । एनं राजानमग्निवदुपचरेत् सेवेतेत्यर्थः । तथाचोक्तम्—'अत्यासत्तिरनर्थाय दूरासत्तिश्च निष्फला। सेव्यन्ते मध्यभावेन राजवह्निगुरुस्त्रियः ॥' देववत् परोक्षेऽपि स्तुतिभक्त्यादिभिरुपचरेत् । अनृतेनोपचीर्णः मिथ्योपचरितः मनसि वचसि कर्मण्यपि चान्यथाभावेनेत्यर्थः । *एनं मिथ्योपचारकम् ॥२२॥ यत्तु भर्तानुयुञ्जीतेत्यादि । अनुयुञ्जीत पृच्छेत् अभ्यनुवर्णयेत् कथयेत् । प्रमादमनवधानतामवलेपं गर्वम् । 'अवलेपस्तु गर्वः स्यात्' इति विश्वः । कोपं विच्छेदबुद्धिम् ॥ २३ ॥

[ चतु० ] अनुशिष्यात् शिक्षयेत् । काले अवसरे ॥१६॥ असूयन्ति गुणवतोऽपि दूषयन्ति । अनृतवादिनः अप्रस्तुतवादिनः । मृषावादिनमसत्यवादिनम् ॥ १७ ॥ एषां राज्ञाम् ॥ १८ ॥ सुलघूनि अत्यल्पानि । राज्ञो नृपतेः ॥१९॥ अग्निवत् अग्निमिव न व्यवहितो नाप्यासन्नः । देववत् परोक्षप्रियवत् । अपचीर्णो विप्रलब्धः ॥२२॥ अनुयुञ्जीत पृच्छेत् । प्रमादमनवधानम् । अवहेलामवज्ञाम् ॥ २३ ॥

[ सर्व० ] नानुशिष्यात् नाज्ञापयेत् । काले पराक्रमकाले समभिपूजयेत् स्तुवीत ॥ १६ ॥ राज्ञि राजसन्निधौ ॥ १९ ॥

[ विरो० ] असूयन्ति द्विषन्ति । अनृतमसङ्गतम् ॥ १७ ॥ दारेषु दारैस्तु ( दी ) द्वेष्टि राजा ( शे ) ये तैर्मैत्रीमिति पूर्वेणान्वयः ॥ १८ ॥ विचरतः पुरुषस्य राज्ञः सकाशात् ॥ १९ ॥ परां परकीयाम् ॥ २० ॥ अग्निवत् सांमुख्येन देववत् परोक्षेऽपि । अनृतेन अनयेन ॥२२॥ वर्त; वर्ण( दे ) अवलेपम् । अपरेषां ( दे ) च ॥ २३ ॥

[ विष० ] काले संमुखावलोकने प्रणामं कुर्यादित्यर्थः । इति पूजा ॥ १६ ॥ अनृतवादिनः अविद्यमानगुणपाठकान् ॥ १७ ॥ क्षतिर्मानधनादिहानिः ॥ १९ ॥ अग्निवद्देववदिति नातिदूरे नातिप्रत्यासन्नः । यथा 'प्रत्यासन्ना विनाशाय दूरस्था न फलप्रदाः । सेव्या मध्यमभावेन राजवह्निगुरुस्त्रियः' इत्यर्थः ॥ २२ ॥ यत्प्रश्नपूर्वकं भर्ता स्वामी ब्रूयात् तदेव ब्रूयात् । एवमेव परोक्षेऽपि स्तुतिर्मनःशुद्धिभक्त्यादिभिः मनासि वचसि कर्मणि अनन्यथाभावेन इदमित्थमेवेति देवं स्तुवीत वर्णयेत् । प्रमादमनवधानम्

१७ व. तर्कयन्ति हि राजानो जनानामनुशासनात् । १९ शस्य पूर्वार्धादुत्तरं. न चापि चरणौ प्राज्ञो धुनेच्चापि भुजौ क्वचित् । इत्यधिकम् ।

२३ च. व. ज. तदेवाभ्यनुवर्णयन् । प्रमादमवहेलां च ।

समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य प्रियादपि हितं भवेत् ॥ २४ ॥
अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च ।
अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत् ॥ २५ ॥
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः ।
अप्रमत्तश्च सततं हितं कुर्यात्प्रियं च यत् ॥ २६ ॥
नास्यानिष्टानि सेवेत नाहितैः सह संवदेत् ।
स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ॥ २७ ॥
दक्षिणं वाऽथ वामं वा पार्श्वमासीत पण्डितः ।
रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ॥ २८ ॥
नित्यं हि प्रतिषिद्धं तु पुरस्तादासनं महत् ।
न च संदर्शने किंचित्प्रवृत्तमपि संजयेत् ॥ २९ ॥
अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ।
न मृषाभिहितं राज्ञा मनुष्येषु प्रकाशयेत् ॥ ३० ॥

अवहेलां को नामायमित्यवगणनां कोपः उच्छेदबुद्धिः ॥ २३ ॥

[ लक्षा० ] न चानुशिष्येदित्यत्र अनुशिष्येत् एवं कुर्विति अनुशिक्षणं कुर्यात् ॥ १६ ॥ द्वेष्टि यानहितांश्चेत्यत्र यान् अन्तःपुरचरेषु दासीजनेषु दारेषु च मैत्रीं कुर्वतः ॥ १८ ॥ यस्य भर्तानुयुञ्जीतेत्यत्र भर्ता राजा यस्य पुरुषस्य ॥ २३ ॥

[ नील० ] समर्थनासु कार्याकार्यपरीक्षासु हितं परिणामसुखं प्रियं श्रुतिसुखं च वदेत् । उभयोः समुच्चयासंभवे प्रियादपि हितं भवेत् प्रियं त्यक्त्वाऽपि यद्धितं भवेत्तदेव वदेन्न तु हितविरोधि प्रियं वदेदित्यर्थः ॥२४॥ अस्य सर्वार्थेषु सर्वेष्वर्थसाधनेषु अनुकूलो यत्नवान् भवेत् न तु प्रातिकूल्यमालस्यं वा कुर्यादित्यर्थः ॥ २५ ॥ पण्डितः परिहासकः । ' पण्डितः सिल्हके कवौ ' इति विश्वः । 'खण्डितः' इति पाठे विच्छिद्य न सेवेत किं त्वविच्छेदेनैव सेवेतेत्यर्थः । अप्रमत्तोऽवहितः ॥ २६ ॥ स्वस्थानात् राजदत्तान्न विकम्पेत न चलेत् ॥ २७ ॥ पण्डितो विद्यावान् राजानं कथाभी रमयन् पार्श्वे तिष्ठेत् रक्षिणां राजगोप्तॄणां तु स्थानं पृष्ठतः ॥ २८ ॥ शूरेण पण्डितेन वा पुरस्तात् आसनमुपवेशनं न कर्तव्यमित्यर्थः । राज्ञां संदर्शने समक्षं प्रवृत्तमपि भक्तवेतनादिदानमहंपूर्विकयानाकारितः सन् न संजयेत् स्वीकुर्यात् ॥ २९ ॥ एतत्तु धाष्टर्यं दरिद्राणामपि व्यलीकस्थानमप्रियपदं किमुत राज्ञामिति भावः । उत्तमं परमं नेति राज्ञोदितमनृतं बहिर्न प्रकाशयेत् ॥ ३० ॥

[ अर्जु० ] समर्थनासु सर्वासु हितं चेत्यादि । समर्थनासु सर्वासु परीक्षासु सर्वासु क्रियायोग्यताध्यवसानेषु वा हितं परिणतिस्वरसं परिणामसुखदमिति यावत् न केवलं हितमेव प्रियं श्रवणमधुरं च आपातमधुरं वा वर्णयेत् । प्रकारान्तरद्योतनार्थौ तदेवशब्दौ । किंचास्य राज्ञस्तदेव वर्णयेत् यदस्य हितं श्रवणकूटस्थं परिणामसुखदं भवति । यद्वा प्रियहितयोर्मध्ये हितं ब्रूयात् ॥ २४ ॥ अनुकूलः चित्तानुवर्ती ॥ २५ ॥

अप्रमत्तः अवहितः यत्तः यत्नयुक्तः ॥ २६ ॥ अनिष्टानि उद्वेजकानि वेशादीनि । न विकम्पेत न चलेत् ॥ २७ ॥ रक्षिणां स्थानमित्यन्वयः ॥ २८ ॥ असंदर्शने परोक्षे प्रवृद्धं प्रकटतया वृद्धिं गतं अवद्यमिति पाठे अवद्यमनर्थकम् ॥ २९ ॥ व्यलीकं दुःखम् । अपिर्भिन्नक्रमः । दरिद्राणामपि व्यलीकस्थानं कूटस्थानमित्यर्थः ॥ ३० ॥

[ चतु० ] समर्थनासु विमर्शेषु । हितमायातिसुरसम् ॥ २४ ॥ अनुकूलश्चित्तानुरोधी । अहितमित्यप्रियविशेषणम् । नानुवर्णयेत् वर्जयेदेव ॥२५॥ यत्तो यत्नवान् ॥२६॥ अनिष्टानि प्रतिकूलानि संवसेत्सहवासं कुर्यात् संवदेत्कथयेदिति वा । न विकम्पेत न विचलेत् ॥ २७ ॥ आसीत अधितिष्ठेत् ॥ २८ ॥ विप्रतिषिद्धं विरुद्धं निषिद्धं वा । आसनमवस्थानम् । संदर्शने दृग्विषये प्रवृत्तं प्रस्तुतमपि न संजयेत् ॥२९॥ एतद्दरिद्राणामपीत्यर्थः । व्यलीकस्थानमप्रीतेर्विषयः । वृथा अनर्थकमसत्यं वा ॥ ३० ॥

[ सर्व० ] राज्ञः संदर्शने समक्षं प्रवर्तितं वेतनादिदानमहंपूर्विकया अनाकारितः सन्न संजयेत्स्वीकुर्यात् ॥ २९ ॥ एतद्दरिद्राणामपि व्यलीकस्थानमप्रियपदं किमु राज्ञाम् ॥३०॥

[ विरो० ] समर्थनासु मन्त्रणासु प्रियं श्रवणप्रियम् ॥ २४ ॥ अप्रियमहितमिति । तेन कदाचिदप्रियमपि हितं वदेत् ॥ २५ ॥ संवसेत् संवदेत् । स्वस्थानात् राजनियुक्तकार्यात् ॥ २७ ॥ पार्श्वं पार्श्वे ॥२८॥ संदर्शने; अस्यादर्शने (दे) । प्रवृद्धं; प्रवृत्तं (च) ॥२९॥ दरिद्राणां राजकृतसंपद्रहितानामपि ॥ ३० ॥

[ विष० ] समर्थनासु परीक्षासु । तत्तदेव हितं प्रियाविरोधि ब्रूयात् तयोः प्रियहितयोर्मध्यात् प्रियाविरोधि हितं ब्रूयात् ॥ २४ ॥ अनुकूलश्चित्तानुवर्ती ॥ २५ ॥ रक्षिणां अङ्गग्राहरिकाणाम् ॥ २८ ॥ राज्ञः परोक्षं प्रकटतमं वृद्धिंगतमपि राजकृतं लोकनिन्दितं न जल्पेदित्यर्थः ॥२९॥ एतत्पुरोवासपरोक्षजल्पनादि दरिद्राणां निर्धनानामपि व्यलीकस्थानं कष्टस्थानम् । अपराधपदमित्यर्थः ॥ ३० ॥

२४ व. वर्णयेत्तत्तदेवास्य । २६ ज. अप्रमत्तश्च यत्तश्च हितं; व. श्च दक्षश्च हितं । २७ वि. व. नास्यानिष्टानि कुर्वीत नाहितैः सह संविशेत् । २८ द. पृष्ठतस्त्वा त्तशस्त्राणामासनं त्वभिजायते । इत्युत्तरार्धम् । २९ व. नचास्यादर्शने किंचित्प्रवृद्धमपि संलपेत्; दे. किंचिदवद्धमपि संजयेत्; च. प्रवृत्तमपि चिन्तयेत् । ३० ज. न वृथाभिहितं राज्ञा ।

असूयन्ति हि राजानो नराननृतवादिनः ।
तथैव चावमन्यन्ते नरान् पण्डितमानिनः ॥ ३१ ॥
शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः ।
प्रियमेवाचरन्राज्ञः प्रियो भवति भोगवान् ॥ ३२ ॥
ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः ।
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ॥ ३३ ॥
यस्य कोपो महाबाधः प्रसादश्च महाफलः ।
कस्तस्य मनसाऽपीच्छेदनर्थं प्राज्ञसंमतः ॥ ३४ ॥
न चोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत् ।
सदा वातं च वाचं च ष्ठीवनं चाचरेच्छनैः ॥ ३५ ॥
हास्यवस्तुषु चान्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ॥ ३६ ॥
न चातिधैर्येण चरेद्गुरुतां हि व्रजेत्ततः ।
स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम् ॥ ३७ ॥
लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः ।
असंमूढश्च यो नित्यं स राजवसतिं वसेत् ॥ ३८ ॥
राजानं राजपुत्रं वा संवर्णयति यः सदा ।
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रियः ॥३९॥
प्रगृहीतश्च योऽमात्यो निगृहीतस्त्वकारणैः ।
न निर्वदति राजानं लभते संपदं पुनः ॥ ४० ॥

[ लक्षा० ] समर्थनासु सर्वास्वित्यत्र समर्थनासु यत्किंचित्कार्यसमर्थनसमयेषु ॥२४॥ नच संदर्शने किंचित्प्रवृद्ध-मित्यत्र किंचिप्रवृद्धम् अल्पबहुकालम् ॥ २९ ॥ अपि ह्येतद्दरिद्राणामित्यत्र एतत् दर्शनानन्तरमपि आभिमुख्येन बहुकालावस्थानं दरिद्राणामपि व्यलीकस्थानम् ' व्यलीकं त्वप्रियेऽनृते ' इत्यभिधानादप्रियस्थानं किमु राज्ञामिति भावः ॥ ३० ॥

[ नील० ] हि यस्मात् अनृतवादिनो नृपान् हि यतोऽन्ये राजानोऽसूयन्ति दोषवत्त्वेन कीर्तयन्ति तस्मात्स्वामिनोऽकीर्तिकरं न वदेदित्यर्थः । अवमन्यन्ते राजान इति शेषः॥३१॥ प्रियो भोगवांश्च भवतीति संबन्धः ॥ ३२ ॥ नचेति । क्रोधचापल्योः सूचकमोष्ठादीनां समाक्षेपं प्रचालनं न कुर्यादित्यर्थः । वातं मुखजमधस्तनं वा शनैरितरेणाज्ञातं यथा भवेत्तथा कुर्यादित्यर्थः॥३५॥हास्येति । अन्यस्य राजसेवकस्य हास्यवस्तुषु हास्यास्पदेषु अयथास्थितेषु उष्णीषादिषु वर्तमानेषु निमित्तेषु तदीयवैकल्येनातिगाढं न प्रहृष्येत् नापि हसेत् । तावतैव राजान एनं क्षुद्रं मन्यन्त इति भावः । न चैवंभूते निमित्ते सति धैर्येण काष्ठवत् स्थेयमित्याह—नातीति ॥३६॥ गुरुतां जडतां किमप्ययं न जानातीति वदेयुरिति भावः । अत एव स्मितं मृदुपूर्वं किंचिद्दर्शयेदेव ॥ ३७ ॥ न हर्षयेत् हृष्येत् असंमूढः सेवायामेकाग्रः ॥ ३८ ॥ राजा तदाश्रिताश्च स्तोतव्या एवेत्याह—राजानमिति । संवर्तयतीति पाठेऽनुसरति तिष्ठते प्रकाशते ॥ ३९ ॥ न निर्वदति न निन्दति दण्डितोऽप्यमात्यः पुनरभ्युदयकामो राजानं न निन्देदित्यर्थः ॥ ४० ॥

[ अर्जु० ] असूयन्ति हि राजान इत्यादि । अनृतवादी राजेतिवादिनः पण्डितमानिनः पाण्डित्येनाहंकृतानित्यर्थः ॥३१॥ प्रियमेवाचरन् राज्ञः प्रियो भवति भोगवान् । प्रियमेवेत्यवधारणं गुणान्तरक्रियान्तरव्यवच्छेदार्थं भोगवान् सुखी ॥ ३२ ॥ न चौष्ठावित्यादि । जातु कदाचित् न निर्भुंजेत् न दन्तेन निष्पीडेत् भुज कौटिल्ये धातो रूपम् । किंच राज्ञो वाचं वाक्यं न समाक्षिपेत् । अमात्यस्यापि वाक्येन समाक्षेपेण कोप इत्याशयः । वाचं कुत्सितशब्दं, वातमपानवायुं कुत्सितादिरूपं ष्ठीवनं श्लेष्मादिनिरसनं श्लेष्मादिजलनिःसारणमित्यर्थः । न चोष्ठौ न भुजौ जानू इत्यपि पाठो वृद्धपुस्तकेषु, स्पष्टार्थः । स च हेय एव॥३५॥ अतिधैर्येण अतिक्रान्तधीरभावेन । मृदुपूर्वेण मृदुभावेन । प्रमादजमनवधानजम्॥३७॥ असंमूढः प्रज्ञावान् ॥ ३८ ॥ संवर्तयति सम्यक् सेवते॥३९॥ प्रगृहीत इति । यः प्रकृष्टतया दानमानादिना प्रकृष्टेन प्रथमं स्वीकृतः पश्चात् कारणैः कैश्चिदसेवादिहेतुभिर्निगृहीतोऽपि राजानं न निर्वध्नाति दूषणैर्न संबध्नाति नाधिक्षिपति स पुनरपि आस्पदं लभते इत्यर्थः । प्रग्रहमिति पाठे प्रग्रहं पालनं लभते । न निन्दति चेति पाठे चकाराच्च स्तौति च॥४०॥

[ चतु० ] अनृतवादिनो राजानृतप्रकाशकाः(न् ?) असूयन्ति॥३१॥ दृप्तः सदर्पः । भोगवान् सुखी ॥३२॥ राजतो नृपात् ॥ ३३ ॥ अनर्थमनिष्टम् ॥३४॥ निर्भुंजेत् अवलिहेत् विह्वलयेद्वा । समाक्षिपेत् यदृच्छया अनुयुञ्जीत । वातं श्वासमधोवातं च॥३५॥ हास्यवस्तुषु हास्यास्पदेषु अतिधैर्येण औद्धत्येन न हर्षयेत् न हृष्येत् ॥३६॥ संवर्तयति साधुतया निदर्शयति संवर्णयतीति वा पाठः॥३९॥ प्रगृहीतोऽनुग्रहपूर्वम् । न निर्वध्नाति न द्वेष्टि ॥ ४० ॥

[ सर्व० ] निर्भुंजेत् प्रचालयेत् ॥ ३५ ॥ गुरुतां जडताम् ॥ ३७ ॥ संवर्तयति अनुसरति ॥ ३९ ॥

[ विरो० ] भारत; राजतः (च) ॥३३॥ न भुजौ जानू; निर्भुंजेज्जातु ( च ) । सदावातं श्वासम् ॥ ३५ ॥

३३ व. प्रयत्नेन तु राजेन्द्र प्रियं प्राप्य । च. ज. प्रियं प्राप्य च भारत। ३४ ग. ज. प्राप्य संमतः; घ. प्राज्ञसत्तमः; वि. अप्रियं प्राज्ञसंमतः; व. राजसंमतः । ३५ च.ङ. ज. व. न चोष्ठौ निर्भुंजेज्जातु; छ. न चोष्ठौ न भुजौ चोरू । वि. सदा क्षुतं च; व. सदा वातं च घातं च । ३७ च. चरेत्त्वरतादित्त्वजेत्तथा । वि. व. दर्शयेदप्रमादजम् । ३८ व. न क्रुध्येद्योऽवमानितः; ज व्यथेदवमानतः। ३९ ज. संवर्तयति यः; व. संवर्धयति यः सदा । व. तिष्ठति श्रियें; ज. श्रिया । ४० व. प्रगृहीतश्च यो नित्यं । वि.च कारणात् ।च.ङ.ज. न निर्बध्नाति राजानं वि. न निन्दयति । घ. वि. व. लभते प्रग्रहं पुनः ।

प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ।
उपजीवी भवेद्राज्ञो विषये योऽपि वा भवेत् ४१ ॥
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत यः ।
न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम् ॥ ४२ ॥
श्रेयः सदाऽऽत्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेच्च राजानं योग्यभूमिषु सर्वदा ॥ ४३ ॥
अम्लानो बलवान् शूरश्छायेवानुगतः सदा ।
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ॥ ४४ ॥
अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।
अहं किं करवाणीति स राजवसतिं वसेत् ॥ ४५ ॥
आन्तरे चैव बाह्ये च राज्ञा यश्चाथ सर्वदा ।
आदिष्टो नैव कम्पेत स राजवसतिं वसेत् ॥ ४६ ॥

नातिधैर्यं; नाधैर्येण (च) । न चातिधैर्येण चरेत् ( दे ) गुरुतां संदेहविषयताम् । मृदु मृदुता पूर्वं प्रधाना यस्य मृदुपूर्वेण मुखेन ॥ ३७ ॥ प्रग्रहमनुग्रहम् ॥ ४० ॥

[ विष० ]अनृतवादिनः अनृतोऽयं राजा इति वादिनः । पण्डित्येनाहंकृतान्॥३१॥धृष्टो दृप्तः निर्लज्जः। भोगवान् सुखी। एवग्रहणं गुणान्तरव्यवच्छेदार्थम्। सर्वथा प्रियमेवाचरेदित्यर्थः ॥ ३२ ॥ ऐश्वर्यं सर्वप्रसादपात्र(त्व)म् ॥ ३३ ॥ महाबाधः मरणान्तिकः । महाफलः समानप्रतिष्ठाप्रदः ॥ ३४ ॥ न निर्भुजेद्दन्तैर्दंष्ट्रा कुटिली न कुर्यात्। एवमिदं न भवति, इदं न कार्यं, अहमिदं न करिष्यामीति राज्ञो वाक्यं न समाक्षिपेत्। घातं क्षुतादिरूपं ष्ठीवनं श्लेष्मादेर्निरसनम् ॥ ३५ ॥ नातिगाम्भीर्यभावेन चरेत् । किंतु कियता मार्दवेनाऽपि । सदैवास्माद्राज्ञः शङ्केत इति भावः । गुरुतां गौरवम् ॥ ३७ ॥ असंमूढ उत्पन्नप्रतिभः ॥ ३८ ॥ प्रगृहीतः प्रकृष्टतया गृहीत्वा बहुमानं प्रापितः । निगृहीतः कारादौ निक्षिप्तः । न निर्वदति न निन्दति ॥ ४० ॥

[ लक्षा० ] नातिगाढं प्रहृष्येतेत्यत्र प्रहृष्येत प्रहर्षेण अट्टहासं कुर्वीत ॥ ३६ ॥ स विन्दति हि राजानमित्यत्र राजानं राजानमेव विन्दति सेवते ॥ ४० ॥

[ नील० ] यो राज्ञो विषये भवेत् देशे वसेत् यो वा राज्ञ उपजीवी स राज्ञो गुणवादी स्यादिति संबन्धः ॥ ४१ ॥ बलाद्धठात् भोक्तुं कुटिलीकर्तुं येन केनचिद्व्याजेन लोकान्दण्डयेति शिक्षयन् यः प्रार्थयेत् स राज्ञः प्रियोऽपि बहुजनविरोधाच्चिरं स्थानं पदं न तिष्ठेत् । नाधितिष्ठेत्। अवश्यं पदच्युतो भवेदित्यर्थः । भोक्तुमिति भुजकौटिल्ये इत्यस्य रूपम् ॥ ४२ ॥ श्रेय इति । राज्ञः सकाशादात्मनः स्वस्य श्रेयो धनमानादिलाभं दृष्ट्वा परमन्यं सदा सर्वदा राज्ञा सार्धं न संवदेन्न संवादयेत् किंतु महाराजो न भवादृशान्मन्त्रे लक्षयतीत्येव लोके परं दर्शयेत्। योग्यभूमिषु युद्धे परराष्ट्रिकैः सह संलापे वा राजानं विशेषयेत् राज्ञोऽपेक्षया स्वीयं शौर्यं यौक्तिकत्वं वाधिकं दर्शयेत् । तेन राजा प्रीयत इति भावः ॥ ४३ ॥ अम्लानः उत्साही । बलवान् धीबलयुक्तः । मृदुः अनिष्ठुरः । दान्तो जितेन्द्रियः सुशिक्षितो वा ॥ ४४ ॥ अन्यस्मिन्पुंसि कस्यचित् कार्यस्यार्थे प्रेष्यमाणे एहि इदं कुर्वित्युच्यमाने सति यस्तदागमनात्पूर्वं समुत्पतेत्तत्कार्यं कर्तुं स शीघ्रकारी राजवसतिं वसेत् ॥ ४५ ॥ आन्तरे धनदारसंरक्षणादौ बाह्ये सामन्तजये आदिष्ट आज्ञप्तो नैव कम्पेत नैव संशयं भयं वा कुर्यात् निःसंशयो निर्भयश्च तत्कार्यं कुर्यादेवेत्यर्थः ॥ ४६ ॥

[ अर्जु० ] विशेषयेन्न राजानं योग्याभूमिषु सर्वदा । विशेषयेदतिरेचयेत् योग्याभूमिषु शस्त्राभ्यासस्थलीषु । केचित् योग्यभूमिषु इति पठन्ति । योगी युक्तः अभूमिषु असमयेषु इति व्याचक्षते च॥४३॥ अम्लानः सानन्दः बलवान् शक्तिसैन्याभ्यां संपन्नः शूरो विक्रमशाली, मृदु वाक्कर्मभ्यां, दान्तो जितेन्द्रियः ॥४४॥ अभारे लघुनि कार्ये॥ ४६ ॥

[ चतु० ] स्थाने परे पदे॥४२॥ न संवदेत् न संदध्यात न विशेषयेत् नातिशयीत योग्याभूमिषु शिक्षास्थानेषु॥४३॥ अम्लानोऽशिथिलः । बलवान् समर्थः । शूरः सोत्साहः । मृदुः अदारुणः ॥ ४४ ॥ पुरस्तात् प्रथममग्रतो वा ॥४५॥ अभारे अल्पसाध्ये कर्मणि, भारे कृच्छ्रसाध्ये कर्मणि ॥ ४६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥

[ सर्व० ] राजानं ( राजसंबन्धि राज्यं ? ) योग्यभूमिषु परराष्ट्रिकैः सह संल्लापेषु न विशेषयेत् राज्ञोऽपेक्षया स्वीयं यौक्तिकत्वमधिकं न दर्शयेत् ॥ ४३ ॥

[ विरो० ] विशेषमन्यराजतो न्यूनं वैलक्षण्यं न वदेत् । योगी उपायज्ञः आभूमिषु सभासु । [ योग्यभू इति पाठे ] अभूमिषु असमयेषु वा ॥ ४३ ॥ अभावे अप्रशस्तचेष्टायाम् । भावे प्रशस्तकर्मणि । 'अभारे चैव भारे च' अल्पसाध्ये कृच्छ्रसाध्ये च न विकल्पेत संदेहं न कुर्यात् ॥ ४६ ॥

[ विष० ] न विशेषयेत् अतिरेचयेत् अधिकीकुर्यात् । योग्याभूमिषु अभ्यासस्थानेषु आस्थानस्थानेषु वा ॥ ४३ ॥ अम्लानो अदीनः सानन्दः। बलवान् शक्तिसैन्याभ्यां संपन्नः । छायेवानुगतः सदा सन्निहितः । मृदुः वाक्कर्मभ्यां मधुरः ॥ ४४ ॥ प्रेक्ष्यमाणे प्रेष्यमाणे वा अवलोक्यमाने प्रेर्यमाणे वा ॥ ४५ ॥ लघुनि कार्येऽनुचिते गुरुकार्ये वा न विकम्पेत न चलेत् । अङ्गीकुर्यादेव ॥ ४६ ॥

४२ व. ज. स्थाने । ४३ वि. व. विशेषयेन्न । वि. व. ज. योग्याभूमिषु । ४५व.प्रेक्ष्यमाणेऽपि । ४६च.ङ.अभावे चैव भावे च राज्ञा;अभारे चातिभारे च ।

यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत् ॥ ४७ ॥
समवेषं न कुर्वीत नोच्चैः सन्निहितो वसेत् ।
न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ॥ ४८ ॥
न कर्मणि नियुक्तः सन्धनं किंचिदपि स्पृशेत् ।
प्राप्नोति हि हरन्द्रव्यं बन्धनं यदि वा वधम् ॥ ४९ ॥
यानं वस्त्रमलङ्कारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ॥ ५० ॥
एवं संयम्य चित्तानि यत्नतः पाण्डुनन्दनाः ।
संवत्सरमिमं तात तथाशीला बुभूषत ।
अथ स्वविषयं प्राप्य यथाकामं करिष्यथ ॥ ५१ ॥

**युधिष्ठिर उवाच—**

अनुशिष्टाः स्म भद्रं ते नैतद्वक्ताऽस्ति कश्चन ।
कुन्तीमृते मातरं नो विदुरं वा महामतिम् ॥ ५२ ॥
यदेवानन्तरं कार्यं तद्भवान्कर्तुमर्हति ।
तारणायास्य दुःखस्य प्रस्थानाय जयाय च ॥ ५३ ॥

**वैशम्पायन उवाच—**

एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः ।
अकरोद्विधिवत्सर्वं प्रस्थाने यद्विधीयते ॥ ५४ ॥
तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः ।
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ५५ ॥
अग्नीन्प्रदक्षिणीकृत्य ब्राह्मणांश्च तपोधनान् ।
याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ॥ ५६ ॥
गतेषु तेषु वीरेषु धौम्योऽथ जपतां वरः ।
अग्निहोत्राण्युपादाय पञ्चालानभ्यगच्छत ॥ ५७ ॥
इन्द्रसेनादयश्चैव यथोक्ताः प्राप्य यादवान् ।
रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ ५८ ॥

इति श्रीमहाभारते विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

[ नील० ] प्रियाणां प्रियाणि स्त्रीपुत्रान्नपानादिसुखानि दुःखेन प्रवासादिना ॥ ४७ ॥ समवेषं वस्त्रालंकारादिकं राज्ञा समानं न उच्चैः अतिशयेन बहुधा बहुप्रकारं न कुर्यात् न भिन्द्यादित्यर्थः ॥ ४८ ॥ धनं उत्कोचादिना प्राप्तं किंचिदपि अत्यल्पमपि न स्पृशेत् ॥ ४९ ॥ यत संप्रयच्छति राजा तदेव राजदत्तं यानादिकं धारयेन्न तु तदन्यस्मै दद्यादित्यर्थः ॥५०॥ संयम्य निगृह्य इमं त्रयोदशं संवत्सरं हे तात युधिष्ठिर यूयं सर्वे तथाशीला यथोक्तसद्वृत्ताः सन्तो बुभूषत ऐश्वर्यं प्राप्तुमिच्छथ। अथ अनन्तरं स्वविषयं स्वदेशं प्राप्य यथाकामं यथेष्टं करिष्यथ क्रीडामिति शेषः ॥ ५१ ॥ अनन्तरमनुपदं कार्यं शान्तिकं पौष्टिकं च अस्य अज्ञातवासदुःखस्य तारणाय प्रस्थानाय शत्रून्प्रति योद्धुं गमनाय जयाय च यत्कर्म प्रभवति तत्कर्तुमर्हति ॥ ५३ ॥ समिध्य उद्दीप्य। समृद्धिर्जनाभिसंपत्तिः। वृद्धिर्युद्धे विशेषः। लाभो राज्यस्य। लब्धाया अपि पृथिव्या विजयाय वशीकरणाय॥५५॥षट् द्रौपद्या सहिताः ५६

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अर्जु० ] प्रियाणां नानुसंस्मरेत् कर्मणि षष्ठी ॥ ४७ ॥ वेशं मण्डनम् ॥ ४८ ॥ कर्मणि व्यापारे ततो व्यापारात्स्पृशेत् हरेत् ॥ ४९ ॥ तथाशीला यथोक्ताचारा इत्यर्थः ॥ ५१ ॥

इत्यर्जुनमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुर्थोऽध्यायः ॥

[ सर्व० ] राज्ञा समम् ॥ ४८ ॥ यथोक्तसद्वृत्ताः सन्तो बुभूषत ऐश्वर्यं प्राप्तुमिच्छत। करिष्यथ क्रीडाः ॥ ५१ ॥ समिध्य उद्दीप्य ॥ ५५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ विरो० ] बन्धनं २ भर्त्सनं च ॥ ४९ ॥ वक्ता नृणाम् ॥ ५२ ॥ याज्ञसेनीं पुरस्कृत्य गतेषु ॥ ५६–५७ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ विष० ] तथाशीलाः उक्तशीलाः पूर्वोक्तव्यवहारपरा भवितुमिच्छत ॥ ५१ ॥ अनन्तरकार्यं शिक्षादानाच्छेषं प्रास्थानिकं मङ्गलम् ॥ ५३ ॥ याज्ञसेनीं पुरस्कृत्येति । 'आत्यन्तिकेषु कार्येषु नारी कार्या पुरःसरा । सर्वेषु धर्मकार्येषु नारी दक्षिणतो मता ॥ सर्वेषु कामकार्येषु नारी वामा प्रशस्यते। पितृकार्येषु सततं नारी वामकरानुगा ॥ ' आत्यन्तिकमवश्यकरणीयम् ॥५६॥ नासन्ने नच दूरतः परिचरंस्तच्चित्तवृत्त्यनुगो द्वेषी तद्रिपुभिः समं प्रणयवांस्तन्मित्रवर्गैरपि । तत्कृत्यप्रवणः सदा ·····'ना नालस्यवान्नोन्मदः सेवातत्त्वविदाश्रयन्निति नृपं प्राप्नोति सेवाफलम्। प्रक्षिप्तोऽयम्। वचनान्ते आशीर्वादोऽयं धौम्यस्य—शिवा वः पन्थानः परिहरतु विघ्नानि विभवः प्रभावो वृद्धिं वः श्रयतु विफलाः सन्तु रिपवः। प्रतिज्ञात·

---

४८ व. नैवोच्चैः सन्निधौ भवेत्; ज. सन्निहितो हसेत । ण. क्षुतं निष्ठीवनं चापि न कुर्यात्सन्निधौ क्वचित । व. इत्युत्तरार्धम् । ४९ बि. ततः स्पृशेत्; ज. उपस्पृशेत् । वि. दिव्यं बन्धनं यदि वा धनम् । ५० घ. नित्यमेवं राज्ञः प्रियो भवेत । ५१ ग. घ. ज. वि. तथाशीला बुभूषवः । ज. व. शीलाश्चरिष्यथ । ५३ व. तद्भवान्वक्तुमर्हति । उत्तरार्धस्थाने ण. विनाशायास्य दुःखस्य तारणाय जयाय च । ५४ व. सर्वं प्रस्थानाय महीपतेः । ५५ ज. संपत्समृद्धिलाभाय । ५६ व. ज. अग्निं प्रदक्षिणं कृत्वा । ५७ व. ज. यजतां वरः । ५८ व. संबभूवुश्च संवृताः ॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ५

पाण्डवाः स्वान्यस्त्राण्यादाय पदातय एव शूरसेनादीन्देशानतिक्रम्यात्मनो व्याधान्ब्रुवाणा विराटनगरस्याभ्याशं प्रापुः ॥ १ ॥ तत उत्पथे गहने महतीं शमीं दृष्ट्वा तस्यामायुधानि समासज्य तत्र मायाशवं च निर्मायास्माकं कुलधर्मोऽयं यच्छवस्योद्बन्धनमिति मार्गे गोपालादीन्कथयन्तः परस्परव्यवहारार्थं गुह्यानि नामानि धृत्वा राजधानीनिकटमाजग्मुः ॥ २ ॥

**वैशम्पायन उवाच—**

ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः ।
बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥ १ ॥
ततस्ते दक्षिणं तीरमन्वगच्छन्पदातयः ।
निवृत्तवनवासा हि स्वराष्ट्रं प्रेप्सवस्तदा ।
[ततः प्रत्यक्प्रयातास्ते संक्रामन्तो वनाद्वनम् ।]
वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः ॥ २ ॥
विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उत्तरेण दशार्णांस्ते पञ्चालान् दक्षिणेन च ॥ ३ ॥
अन्तरेण यकृल्लोमान् शूरसेनांश्च पाण्डवाः
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन्वनात् ॥४॥
धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ।
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ॥ ५ ॥
पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ।
व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।
वसामेहापरां रात्रिं बलवान्मे परिश्रमः ॥ ६ ॥

---

प्रान्ते सकलयतु पाञ्चालतनया स्वकामान्निःशोका ज्वलयतु कुरून् भीमदहने ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि चतुर्थोऽध्यायः॥४॥

( लक्षा० ) धनं किंचिदपि स्पृशेदित्यत्र धनं राजधनं नियोगरूपधनं वा । धृतं कट्टलिकया कृतं द्रव्यं धनं न भवतीति न धनम् । अन्यद्यानादिरूपं प्राप्नोति । राजकरादेव प्राप्नोति ? ॥ ४९ ॥ तदेव विवेचयति यानमित्यादिना॥५०॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे
विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ नील० ] ते वीरा इति । निस्त्रिंशः खड्गः । कलापिनस्तूणवन्तः । ततायुधेति पाठे सज्जीकृतधनुषः ततायुधाश्च ते कलापिनश्चेति विग्रहः । बद्धं गोधातलं ज्याघातवारणाख्यमङ्गुलित्राणं च यैस्ते बद्धगोधाङ्गुलित्राणाः 'गोधा तलनिहाकयोः' इति मेदिनी ॥ १ ॥ अन्तरेण मध्यतः मत्स्यस्यैव राज्ञो लुब्धा व्याधाः स्म इति ब्रुवाणाः । पक्षे राज्याकाङ्क्षिणः । 'लुब्ध आकाङ्क्षिणि व्याधे' इति मेदिनी । विषयं मत्स्यस्यैव देशम् ॥ ४ ॥ लुब्धत्वाभिनयाय विवर्णाः ॥ ५ ॥ एकपद्यः क्षेत्रगामिनः क्षुद्रमार्गाः ॥ ६ ॥

[ अर्जु० ] 'ते वीरा बद्धनिस्त्रिंशा' इत्यादेः 'समुद्रनेमीपतयोऽपि दुःखिताः' इत्यन्तस्य द्रावणस्य पाण्डवेष्वत्यन्तासंभविना सकलजनाह्लादकतया युधिष्ठिरादिभिः प्रकटीकृतेन विशेषेण महद्भिर्महापुरुषलक्षणाः समुद्रनेमीं पृथिवीं त्वमर्हसि शृङ्गग्राहिकया विद्यमानमपि(?) विधीयत इति वेशस्य पाण्डवरूपाच्छादनसाधकतमत्वातिशयस्तात्पर्यार्थः ॥ ते वीरा बद्धनिस्त्रिंशा बद्धखड्गाः ततायुधकलापिनः ततानि विस्तृतानि दत्तगुणानि आयुधानि यैः तथा ततायुधाश्च कलापिनश्च तूणवन्तश्चेति कर्मधारयः । आ समन्ताद्युध्यते एभिरित्यायुधानि धनूंषि । वक्ष्यति च—अपज्यमकरोद्वीरः सहदेवस्ततायुधमिति । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः । बद्धगोधाङ्गुलित्राणाः गोधा चाङ्गुलीनां त्राणं च बद्धं गोधाङ्गुलित्राणं यैः ते तथा । 'गोधा तले निहाकायाम्' इति विश्वः । 'अधःस्वरूपयोरस्त्री तलम्' इति चामरः । कालिन्दीमभितो ययुः यमुनानिकटं गताः । अभितोयोगाद्द्वितीया 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः ॥१॥ उत्तरेण दशार्णांस्ते पाञ्चालान्दक्षिणेन तु इति । लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् । पाण्डवा दशार्णदेशानां समीपोत्तरेण पञ्चालानां समीपदक्षिणेन यकृल्लोमशूरसेनानां विषयाणां मध्येन लुब्धा अभिलाषुकाः सन्तो मत्स्यविषय इति ब्रुवाणमेव(?) लुब्धोऽभिलाषुक इत्यपि ॥३–५॥ एकपद्यः एकसंचरणयोग्या मार्गाः ॥ ६ ॥

[ चतु० ] गोधा तलत्रम् । कालिन्दीमभितो यमुनायाः समीपतः ॥ १ ॥ तस्याः कालिन्द्याः ॥ २ ॥ उत्तरस्यामदूरेण ॥ ३ ॥ अन्तरेण मध्येन । लुब्धाः व्याधाः ॥ ४ ॥ जनपदं जनपदसमीपम् ॥५॥ एकपद्यः संचारमात्रचिह्नानि । व्यक्तमिति वितर्के । बलवान् महान् ॥ ६ ॥

( सर्व० ) कलापिनस्तूणवन्त । पाठान्तरे सज्जीकृतध-

---

१ ज. व. बि. तथायुधकलापिनः । २ ज. ते तस्या दक्षिणं । व. वसन्तो रमणीयेषु । ३ बि. निघ्नन्तो मृगजातानि । ४ ज. अन्तरेण मत्स्यानां । च. ज. लुब्धाः कराला मत्स्याश्च ।

---

२ यादुत्तरं क. पुस्तके–

पल्वलेषु च रम्येषु नदीनां संगमेषु च ।
द्रुमान्नानाविधाकारान्नानाविधलताकुलान् ॥ १ ॥
कुसुमाढ्यान्मनःकान्ताञ्शुभगन्धान्मनोरमान् ।
पार्था निरीक्षमाणाश्च तान्द्रुमान्पुष्पशालिनः ॥ २ ॥
जिघ्रन्तः पुष्पगन्धांश्च फलगन्धान्मनोरमान् ।
विध्यन्तो मृगजातानि महेष्वासा महाबलाः ॥ ३ ॥
उषित्वा द्वादश समा वने परपुरञ्जयाः । इत्यधिकाः

**युधिष्ठिर उवाच—**

धनञ्जय समुद्यम्य पाञ्चालीं वह भारत ।
राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ७ ॥

**वैशंपायन उवाच—**

तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव ।
संप्राप्य नगराभ्याशमवतारयदर्जुनः ॥ ८ ॥
स राजधानीं संप्राप्य कौन्तेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समासज्ज्य प्रवेक्ष्यामः पुरं वयम् ॥ ९ ॥
सायुधाश्च प्रवेक्ष्यामो वयं तात पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ १० ॥
गाण्डीवं च महद्गाढं लोके च विदितं नृणाम् ।
तच्चेदायुधमादाय गच्छामो नगरं वयम् ।
क्षिप्रमस्मान्विजानीयुर्मनुष्या नात्र संशयः ॥ ११ ॥
ततो द्वादश वर्षाणि प्रवेष्टव्यं वने पुनः ।
एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ॥ १२ ॥

**अर्जुन उवाच—**

इयं कूटे मनुष्येन्द्र गहना महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ १३ ॥
न चापि विद्यते कश्चिन्मनुष्य इति मे मतिः ।
योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पाण्डव ॥ १४ ॥
उत्पथे हि वने जाता मृगव्यालनिषेविते ।
समीपे च श्मशानस्य गहनस्य विशेषतः ॥ १५ ॥
समाधायायुधं शम्यां गच्छामो नगरं प्रति ।
एवमत्र यथायोगं विहरिष्याम भारत ॥ १६ ॥

**वैशम्पायन उवाच—**

एवमुक्त्वा स राजानं धर्मराजं युधिष्ठिरम् ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ १७ ॥
येन देवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
स्फीतान् जनपदांश्चान्यानजयत्कुरुपुङ्गवः ॥ १८ ॥
तदुदारं महाघोषं संपन्नबलसूदनम् ।
अपज्यमकरोत्पार्थो गाण्डीवं सुभयंकरम् ॥ १९ ॥
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परन्तपः ।
अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः ॥ २० ॥

---

नुषः । गोधा ज्याघातनिवारणम् ॥ १ ॥ महान्त इष्वासाः धनूंषि येषाम् ॥ ३ ॥ मत्स्यस्यैव राज्ञो लुब्धा व्याधाः स्म इति ब्रुवाणाः । तस्यैव विषयं देशं प्राविशन्॥ ४ ॥ एकपद्यः क्षुद्रमार्गाः ॥ ६ ॥

[ विरो० ] ततः तस्याः ॥ २ ॥ लुब्धा व्याधा इति ब्रुवाणाः ॥ ४ ॥ जनपदं जनपादचिह्नम् ॥ ५ ॥ एकपद्यः पन्थानः । एकपद्याः ( दे ) । एकमार्गा ( दे ) ? । न परा रात्र्यन्तराभावात् । यद्वा अपरां अव्यवहितरात्रिम् ॥ ६ ॥

[ विष० ] अन्तरेण मध्येकृत्वा यकृल्लोमान्बहिर्लोमान् वयं लुब्धा व्याधा इति ब्रुवाणाः ॥४॥ श्मश्रुधारिणः सकूर्चाः । एकसंचरणयोग्या मार्गा एकपद्यः । राजमार्गं विहाय स्वस्व-क्षेत्रोपरि गच्छन्तः पाददण्डका इत्यर्थः ॥ ६ ॥

[ लक्षा० ] लुब्धान्ब्रुवाणा इत्यत्र लुब्धान् मृगयून् ब्रुवाणाः स्वान्ब्रुवाणाः ॥ ४ ॥

[ नील० ] कूटे इव कूटे उच्चप्रदेशे । 'मायाद्रिशृङ्गयोः कूटम्' इति मेदिनी । दुरारोहा श्मशानस्थत्वात् ॥ १३ ॥ उत्पथे मार्गाद्बहिर्भूते ॥ १५ ॥ संपन्नबलानां देवाराधनप्राप्तबलानामसुरादीनामपि सूदनम् ॥ १९ ॥

[ अर्जु० ] स राजधानीं संप्राप्य राजधानीसमीपं गत्वा ॥ ९ ॥

तच्चेदायुधं गाण्डीवं धनुः ॥ ११ ॥ इयं महती शमी कूटे उच्चदेशे पुरद्वारे वा तिष्ठतीति शेषः 'कूटं पुरद्वारि' इत्यमरः ॥ १३ ॥ निदधतः स्थापयतः ॥ १४ ॥ समासज्य स्थापयित्वा । यथाजोषं यथाप्रीति यथासुखमित्यर्थः ॥ १६ ॥ अपज्यमपगतगुणम् ॥ १९ ॥

[ चतु० ] अभ्याशं समीपम् ॥ ८ ॥ समासज्य आधाय ॥ ९ ॥ कूटे पुरद्वारगतहस्तिनखसमीपे । गहनातिनिबिडा ॥ १३ ॥ शस्त्राणि निदधतोऽस्मान्द्रष्टा भवेदित्यन्वयः ॥ १४ ॥ उत्पथे पथो विप्रकृष्टे ॥ १५ ॥ यथाजोषं यथासुखम् ॥ १६ ॥ अपज्यं अवरोपितगुणम् ॥ १९ ॥

[ सर्व० ] अभ्याशं समीपम् ॥ ८ ॥ कूटे उच्चप्रदेशे इत्यर्थः ॥ १३ ॥ उत्पथे मार्गाद्बहिर्भूते ॥ १५ ॥ स्फीतान् पुष्टान् ॥ १८ ॥

[ विरो० ) लोके भूरादौ । तच्चेत्; तदेव ( दी ) ॥ ११ ॥ कूटे निश्चलस्थाने । गहने; गहना ( च ) ॥ १३ ॥ अत्र विराटराज्ये ॥ १६ ॥ अक्षय्यामयोग्येन क्षयितुमशक्याम् ॥ २० ॥

[ विष० ] द्वादशवर्षावधि यथोक्तं वनवासमतिवाह्य सांप्रतं नगरवासे हानिः काऽपि नास्तीत्यर्थः । नोऽस्माकं मध्ये एकस्मिञ्ज्ञातेऽपि सर्वे विज्ञाताः । नस्तथेति । नो वयमिति । तथा चोक्तम् ' प्रथमायां तृतीयायां पञ्चम्यां वाऽपि

---

७ च.ज. युधिष्ठिर उवाचेत्यत्र—तच्छ्रुत्वा वचनं तस्याः प्राह राजा युधिष्ठिरः । घ. राजधानीं प्रविश्यामो । ८ व. द्रौपदीं पक्षिराडिव । व. अवतारयदच्युतः । १० व. आशङ्कां तु करिष्यामो जनस्यास्य; समुद्वेगं करिष्यन्ति जना वेत्स्यन्ति चैव नः ॥ १४ व. मनुष्य इह पार्थिव । ग. घ. दृष्ट्वा हरेदस्त्राणि पाण्डव; व. भवेदस्त्राणि भारत; ज. भवेदस्त्राणि पाण्डव । १५ क. प्रथमार्धात्परम्—विपुलाकीर्णशाखा च वायसैरुपसेविता । स्नेहानुबद्धां पश्यामि दुरारोहामिमां शमीम् । व. श्मशानस्य दुःप्रवेशे विशेषतः । १६ व. प्रथमार्धस्थाने—समासज्यायुधान्यस्यां गच्छामो नगरं वयम् । ग. घ. व. ङ. यथासौख्यं; ज. यथाजोषं । १८ व. सर्पांश्चैकरथोऽजयत् । १९ क. ग. घ. व. तदुदारं महाघोरं । ण. वः सपत्नगणसूदनम् । बि: संपन्नगणसूदनम् । ग. घ. दे. व. गाण्डीवमभयङ्करम् ।

पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्प्रभुः ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये ॥ २१ ॥
निशम्य यस्य विस्फारं व्यद्रवन्त रणात्परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ २२ ॥
सैन्धवं येन राजानं पर्यामृषितवानथ ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ २३ ॥
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।
माद्रीपुत्रोमहाबाहुस्ताम्रास्यो मितभाषिता ॥ २४ ॥
तस्य मार्वीमपाकर्षेच्छूरः संक्रन्दनो युधि ।
कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः॥२५॥
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तदायुधम् ॥ २६ ॥
खड्गांश्च दीप्तान्दीर्घांश्च कलापांश्च महाधनान् ।
विपाठान् क्षुरधारांश्च धनुर्भिर्निदधुः सह ॥ २७ ॥

**वैशम्पायन उवाच—**

अथान्वशासन्नकुलं कुन्तीपुत्रो युधिष्ठिरः ।
आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप ॥ २८ ॥
तामुपारुह्य नकुलो धनूंषि निदधे स्वयम् ।
यानि तस्या वकाशानि दिव्यरूपाण्यमन्यत ॥ २९ ॥
यत्र चापश्यत स वै तिरोवर्षाणि वर्षति ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत ॥ ३० ॥
शरीरं च मृतस्यैकं समबध्नन्त पाण्डवाः ।
विवर्जयिष्यन्ति नरा दूरादेव शमीमिमाम् ॥ ३१ ॥
आवद्धं शवमत्रेति गन्धमाघ्राय पूतिकम् ।
अशीतिशतवर्षेयं माता न इति वादिनः ॥ ३२ ॥

---

साधितम् । प्राप्नोति युष्मदादीनां वस्त्रसादीन् विधीन् क्वचित् ॥ १२ ॥ क्रूडे उच्चस्थाने । गहना संकटा कण्टकिद्रुमव्याप्ता पत्रबहुला वा । महती उच्चा ॥ १३ ॥ निदधतो निगूढं स्थापयतः ॥ १४ ॥

[ लक्षा० ] शार्दूलः पृषतीमिवेत्यत्र ' गोकर्णपृषतैणर्श्य-रोहिताश्चमरो मृगाः ' इत्यमरः । पृषती मृगी ॥ ८ ॥

[ नील० ] सैन्धवं जयद्रथं ॥ २३ ॥ संक्रन्दनः शत्रूणामाक्रन्दनकरः ॥ २५ ॥ अपज्यं ज्यारहितं ॥ २६ ॥ विपाठान् बाणविशेषान् तादृशान् क्षुरधारांश्च ॥ २७ ॥ अन्वशासत् आज्ञापितवान् ॥ २८ ॥ तस्याः शम्याः वकाशानि भागुरिमतेन अल्लोपः अवकाशाख्यानि सुषिरस्थानानि ॥ २९ ॥ वर्षति मेघः तिरोवर्षाणि असंमुखानि वर्षाणि वृष्टीः यत्रापश्यत तत्र पर्यबन्धत पर्यबध्नात् ॥ ३० ॥ पूतिकममङ्गलं अशीत्यधिकशतवर्षा नोऽस्माकमियमिति शवनिर्देशः पक्षे शमी आयुधरक्षकत्वान्मातेवास्माकमित्यभिसंधिः ॥ ३२ ॥

[ अर्जु० ] विष्फारं शब्दं, विस्फोटं घोषम् ॥ २२ ॥ पर्यामृषत जितवान् ॥ २३ ॥ मौर्वीमपाकर्षेत् ज्यामपसारितवान् । संक्रन्दनः संक्रन्दयति रोदयतीति तथा ॥ २५ ॥ दक्षिणाचारो धनुषि प्रशस्तकर्मा ॥ २६ ॥ पीतानित्यादि पायितजलान् जलावगाहनेन हि तेषां नैर्मल्यं भवति [ पाठान्यत्वं कल्पनीयम् । एवमन्यत्रापि व्याख्यानम् । प्राचीननिबन्धानुसारेण पाठो ज्ञेयः । ] दीर्घानायतान् कलापान् इषून् महाधनान् ' बहुमूल्यं महाधनम् ' इत्यमरः । विपाठादीन् शरविशेषान् ॥ २७ ॥ तिरोवर्षाणि वर्षतीति । देवो वर्षति वर्षाणि वृष्टयः तिरस्तिर्यक् पतन्तीति शेषः ॥ ३० ॥ शरीरं च मृतस्यैकमिति चशब्दोऽलीके यतो नवान्तरं(नचैतत्?) मृतशरीरं किंतु माया, एतच्च उत्तरगोग्रहे व्यक्तीभविष्यति । समबध्नन्त बबन्धुः ॥ ३१ ॥

[ चतु० ] विस्फारं धनुःशब्दम् ॥ २२ ॥ सैन्धवं जयद्रथम् । पर्यामृषत गृहीतवान् । ज्यापाशं गुणबन्धनम् ॥ २३ ॥ संक्रामत्यरीनिति संक्रन्दनः । कुले जनपदेऽपि यस्य रूपे समो नास्तीत्यन्वयः ॥ २५ ॥ पीतान्दीप्तांश्च खड्गांश्चेति । पायितजलानित्यर्थः । जलपानेन तेषां दीप्तिर्भवतीति ॥ २७ ॥ देवे वर्षति सति वर्षाणि वृष्टयः तिर्यक् पतन्तीति शेषः ॥ ३० ॥ अशीतिः शतं च वर्षाणि यस्याः । टीकान्तरं पाठान्तरे ॥ ३२ ॥

[ सर्व० ] अपज्यं ज्यारहितं सैन्धवं जयद्रथमित्यर्थः ॥ ॥ २३ ॥ विपाठान् बाणविशेषान् । तोमरो हस्तक्षेप्यो बाणः ॥ २७ ॥ तस्याः शम्याः वकाशानि अवकाशानि छिद्राणीत्यर्थः ॥ २९ ॥ पूतिकममङ्गलम् । अशीत्यधिकशतवर्षा नोऽस्माकमियमिति शवनिर्देशः । माता ॥ ३२ ॥

[ विरो० ] विस्फोटं चण्डशब्दम् ॥ २२ ॥ कुले जनपदे यस्य रूपे समो नास्ति ॥ २५ ॥ विपाठांस्तीक्ष्णाग्रान् । अदीर्घांश्च २ पीनदीर्घांश्च । (दे) ॥ २७ ॥ तिरः पार्श्वद्वये ॥ ३० ॥ शरीरं चेति । परत्र ' शरीरं नात्र विद्यते ' इति तु वत्सरेण शरीरस्य नाशात् । यद्वाऽत्र शरीरं मायिकम् ॥ ३१ ॥ अशीतं शीतान्यस्पर्शवत् । संख्यापरं चैतत् । ते च पृथिवीतेजोवायवः । तथा च त्र्यधिकशतवर्षा इत्यर्थः । वादिनः पृच्छतो जनान् व्याहरन्तीति ॥ ३२ ॥

[ विष० ] परामृषत परामर्षं चकार । धनुषा कण्ठे जग्राह ॥ २३ ॥ सम्यक् शत्रून् क्रन्दयतीति विक्लवयतीति संक्रन्दनः । क्रदि क्लदि वैक्लव्ये अतः संक्रन्दनः शूरः विक्लवकारी ॥ २५ ॥ कलापान् तूणीरान् महाधनान् बहुमूल्यान्

---

२३ व. पर्यामृषत भारतः; पर्यषेधत पाण्डवः । ज. पर्यामृषत चानघ । २४ वि. पश्चिमान्देशान् । व. ताम्राक्षो । च. ज. अमितविक्रमः । २५ व. संक्रन्दनो युवा । व. समो यस्य रूपेण यशसा श्रिया । तेन तस्याभवन्नाम नकुलेति परंतप ॥ २७ ग. व. खड्गान्सुपीनान्; ज. खड्गान्दीप्तानदीर्घांश्च; वि. पीतान्दीर्घांश्च । २९ ज. डं. बि. व. दृढरूपाणि । ३१ ग. घ. व. मृतस्यैकं समादाय न्यबन्धत । ३२ च. ज. अवेक्ष्य शवमत्रेति । अस्मादुत्तरमधिकं व. यया जाताः स्म वृद्धाः स्म इति वै व्याहरन्ति ते ।

कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि वा ।
समासज्ज्याथ वृक्षेऽस्मिन्निति वै व्याहरन्ति ते ॥ ३३ ॥
आगोपालाविपालेभ्य आचक्षाणाः परंतपाः ।
आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः ॥ ३४ ॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥ ३५ ॥
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत् ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ३६ ॥

इति श्रीमहाभारते विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ६

विपदुत्तरणाय पाण्डवैर्दुर्गायाः स्तवनम् ॥ १ ॥

**वैशम्पायन उवाच—**
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १ ॥
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धिनीम् ॥ २ ॥
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३ ॥
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४ ॥
भारावतरणे पुण्ये ये स्मरन्ति सदाशिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ॥ ५ ॥
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ॥ ६ ॥

॥ २७ ॥ यानि तस्याऽवकाशानीति । स नकुलस्तस्य चापादिशस्त्रभारस्य यानि अवकाशानि पर्णविवराणि अमन्यत अमीभिर्विवरैर्लोका ज्ञास्यन्तीति तान्यन्तर्दधे । तथाच यत्र देवे वर्षति सति वर्षाणि जलानि तिरश्चीनानि पतन्ति इति विचारयन् अध उपरि पार्श्वेषु च पश्यतामावृतवानित्यर्थः ॥ २९ ॥ ३० ॥ मृतस्यैकं शरीरं यथा बध्यते तदाकारेण बबन्धुः ॥ ३१ ॥

[ नील० ] कुलधर्मोऽयं क्षत्रधर्मोऽयं यदायुधसङ्गोपनमिति गूढ आशयः । पक्षे अयं मातुर्वृक्षे बन्धनाख्यः ॥ ३३ ॥ वत्स्यन्तो वस्तुमिच्छन्तः ॥ ३६ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अर्जु० ] आ गोपालाविपालेभ्यः गोपालमेषपालानभिव्याप्याचक्षाणाः कथयन्त इत्यर्थः । एवं कृते सर्वे वर्जयिष्यन्तीति भावः ॥ ३४ ॥

इति श्रीमहा०व्याख्यायामर्जुनमिश्रकृतायां विरा० पञ्चमोऽध्यायः ॥ ५ ॥

[ चतु० ] अविपाला अजपालाः ॥ ३४ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ सर्व० ] तस्या वृक्षे बन्धनाख्योऽयं कुलधर्मः ॥ ३३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पंचमोऽध्यायः ॥ ५ ॥

[ विरो० ] एवं कुलधर्मः । समासज्ज्याथ (दे) ॥ ३३ ॥ आगोपालाविपालेभ्योऽपृच्छद्भ्योऽपि तदेवाचक्षाणाः ॥ ३४ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ विष० ] आगोपालाविपालप्रभृतीनां स्वयं कथयामासुः ॥ ३४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

( लाक्षा० ) अथच्छन्नानि नामानीत्यत्र अथ धौम्यपरित्यागानन्तरं विराटनगरप्रवेशपर्यन्तम् ॥ ३५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ नील० ] गच्छमानः गच्छन् दुर्गां दुर्गमसंकटतारिणीं नारायणेन दत्ता ये वराः उमेति भद्रकालीति देवास्त्वां पूजयिष्यन्तीत्येवमादयो विष्णुपुराणादौ श्रुतास्तात्प्रयां मङ्गल्यां मङ्गलप्रदाम् ॥ २ ॥ शिलातटे कंसेनैव विनिक्षिप्ता सती आकाशं गता ताम् ॥ ३ ॥ खेटकं चर्म ॥ ४ ॥ स्तोत्रार्थमेव संभव उद्भवो येषां नाम्नां वरदेत्यादीनां तैः आमन्त्र्य संबोध्य स्तोतुं प्रचक्रमे इति पूर्वेण संबन्धः ॥ ६ ॥

[ सर्व० ] खटेकं चर्म ॥ ४ ॥

३३ व. पूर्वैराचरितः शुभः । तस्माद्वृक्षादपाक्रम्य व्याहरन्ति ततस्ततः । वि. समासज्जामो वृक्षे । ३५ क. जयो जयेशः । इति पञ्चमोऽध्यायः ॥ ५ ॥

षष्ठाध्यायस्थाने व. पुस्तके—
विराटनगरे रम्ये प्रविशन्वै युधिष्ठिरः ।
तुष्टाव मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १ ॥
यशोदागर्भसंभूतां देवस्य भगिनीं प्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धनीम् ॥ २ ॥
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातलसमुत्क्षिप्तामाकाशान्तरगामिनीम् ॥ ३ ॥
वासुदेवं स्मरन्तीं च दिव्यां मायाकरीं वराम् ।
भारावतरणे पुण्ये ये स्मरन्ति सदाशिवाम् ॥ ४ ॥

१ वि. हरेश्च । २ आकाशोत्पथगामिनीम् ।

नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।
बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ७ ॥
चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये केयूराङ्गदधारिणि ।
भासि देवि यथा पद्मा नारायणपरिग्रहः ॥ ८ ॥
स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ।
कृष्णच्छविसमा कृष्णा संकर्षणसमानना ॥ ९ ॥
बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ।
पात्री च पङ्कजी घण्टी स्त्रीविशुद्धा च या भुवि॥१०॥
पाशं धनुर्महाचक्रं विविधान्यायुधानि च ॥
कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ११॥
चन्द्रविस्पर्द्धिना देवि मुखेन त्वं विराजसे ।
मुकुटेन विचित्रेण केशबन्धेन शोभिना ॥ १२ ॥
भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता ।
विभ्राजसे चाबद्धेन भोगेनेवेह मन्दरः ॥ १३ ॥
ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ।
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया ॥१४॥
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ।
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।
प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ॥ १५ ॥
जया त्वं विजया चैव संग्रामे च जयप्रदा ।
ममापि विजयं देहि वरदा त्वं च सांप्रतम् ॥१६॥
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालिकालि महाकालि सीधुमांसपशुप्रिये ॥ १७ ॥
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणी ।
भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ॥१८॥
प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि ।
न तेषां दुर्लभं किंचित्पुत्रतो धनतोऽपि वा ॥१९॥

[ नील० ] कृष्णे कृष्णस्वरूपे ॥ ७ ॥ चतुर्भुजे चतुर्वक्त्रे इति विष्णुब्रह्मरूपत्वमुक्तम्। मयूरपिच्छाभानि इन्द्रनीलादिमणिखचितानि वलयानि यस्यास्तथाविधे । पद्मा लक्ष्मीः अत एव नारायणपरिग्रहो विष्णुकान्ता ॥ ८ ॥ ब्रह्मचर्यमित्यनन्यगामित्वं दर्शितं तेन लौकिकलक्ष्मीतो व्यावृत्तिः । कृष्णच्छविर्नीलमेघस्तेन समा कृष्णा कृष्णवर्णा ॥ ९ ॥ अष्टभुजामाह—बिभ्रतीति । विपुलौ वराभयप्रदत्वेन ऊर्जितौ द्वौ बाहू । तत एकः पात्री पात्रवान् । पङ्कजी पङ्कजवान् । घण्टी घण्टावान् पञ्चमः ॥ १० ॥ पाशं धनुर्महाचक्रं च बिभ्रतीति पूर्वेणान्वयः । एतान्येव विविधान्यायुधानि कुण्डलपूर्णौ यौ द्वौ कर्णौ ताभ्यां विराजिता ॥ ११ ॥ केशबन्धेन कबरीरूपेण ॥ १२ ॥ वेणीं वर्णयति—भुजङ्गेति । भुजङ्गाभोगवासेन सर्पशरीराकारेण वासो वासना तेन तदाकार उपलक्ष्यते । कटिसूत्रेण सह राजता शोभमानेन कटिसूत्रोपरि लम्बमानया वेण्येत्यर्थः । भोगेन भुजङ्गफणया तद्वता भुजङ्गेनेत्यर्थः । भोगिनेवेति युक्तः पाठः॥ १३ ॥ १४ ॥ शिवा कल्याणरूपा ॥ १५ ॥ कृतानुयात्रा नित्यमनुसृता भूतैर्ब्रह्माद्यैः प्राचीनैः ॥ १८ ॥

[ सर्व० ] भुजङ्गाभोगवासेन सर्पशरीराकारेण॥ १३ ॥ कृतानुयात्रा नित्यमनुसृता ॥ १८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

तान्वै तारयते पापात्पङ्के गौरिव दुर्बला ।
नमोऽस्तु वरदे देवि कुमारि प्रियदर्शने ॥ ५ ॥
बालभानु सुरेन्द्राणी घण्टाली विकटोत्कटे ।
चतुर्भुजे चतुर्वक्त्रे चतुर्दंष्ट्रे महासुरि ॥ ६ ॥
महादेवि महेष्वासे जयन्ति विजयप्रदे ।
भूतरात्रि महारौद्रे चाष्टमीनवमीप्रिये ॥ ७ ॥
कपिले पिङ्गले व्याले हिरण्यकनकप्रदे ।
शशिसूर्यमहाभासे विद्युद्वलितकुण्डले ॥ ८ ॥
मेरुविन्ध्यान्तरगते अप्सरोगणसेविते ।
कालरात्रिमहाकालि खड्गखट्वाङ्गधारिणि ॥ ९ ॥
त्रिशूलवरदे देवि त्रिनेत्रि भुवनेश्वरि ।
देवि देवाश्च पूजन्ति पौर्णमासीं चतुर्दशीम् ॥ १० ॥
दुर्गात्तारय मां दुर्गे बन्धनानां महार्णवात् ।
सोऽहं राज्यपरिभ्रष्टस्त्वद्भक्तश्च विशेषतः ॥ ११ ॥
अहं शरणमापन्नस्तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्येन स्वामिनी भव ॥ १२ ॥
दर्शनं तु गता देवि दुर्गा त्रिभुवनेश्वरी ।

देव्युवाच—

शृणु वत्स महाबाहो संग्रामे विजयस्तव ॥ १३ ॥
मत्प्रसादाद्विनिर्जित्य हत्वा कौरववाहिनीम् ।
निष्कण्टकं कृतं राज्यं भोक्ष्यसे भ्रातृभिः सह ॥ १४ ॥
इति गुह्यतमं स्तोत्रं पवित्रं पापनाशनम् ।
कीर्तयिष्यन्ति ये लोका न तेषां विद्यते भयम् ॥ १५ ॥
संग्रामे शत्रुसंबाधे विवादे चौरकण्टके ।
प्रस्थाने वा प्रवेशे वा यः कश्चिन्मां स्मरिष्यति ॥ १६ ॥
तस्याहं सर्वकार्याणि साधयिष्यामि पाण्डव ।
इत्युक्त्वा पाण्डवं देवी तत्रैवान्तरधीयत ॥ १७ ॥ इति ।

षष्ठाध्यायस्थाने ज. पुस्तके—

वैशम्पायन उवाच—

विराटनगरं रम्यं प्रविशन्नेव भूपते
स्तुनोति मनसा देवीं कुन्तीपुत्रो युधिष्ठिरः ॥ १ ॥

दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः ।
कन्तारेष्ववसन्नानां मग्नानां च महार्णवे ॥ २० ॥
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ।
जलप्रतरणे चैव कान्तारेष्वटवीषु च ॥ २१ ॥
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ।
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या सन्ततिर्मतिः॥२२॥
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया ।
नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम् ॥ २३ ॥
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि ।
सोऽहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान् ॥ २४ ॥
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ॥२५॥
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ।
एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ॥२६॥
उपगम्य तु राजानमिदं वचनमब्रवीत् ।

**देव्युवाच—**

शृणु राजन्महाबाहो मदीयं वचनं प्रभो ॥ २७ ॥
भविष्यत्यचिरादेव संग्रामे विजयस्तव ।
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ॥२८॥
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
भ्रातृभिः सहितो राजन्प्रीतिं प्राप्स्यसि पुष्कलाम्॥२९
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ये च संकीर्तयिष्यन्ति लोके विगतकल्मषाः ॥३०॥
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ।
प्रवासे नगरे चापि संग्रामे शत्रुसङ्कटे ॥ ३१ ॥
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ।
ये स्मरिष्यन्ति मां राजन्यथाऽहं भवता स्मृता ॥ ३॥
न तेषां दुर्लभं किंचिदस्मिँल्लोके भविष्यति ।
इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ॥ ३३ ॥
तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डवाः ।
मत्प्रसादाच्च वः सर्वान्विराटनगरे स्थितान् ॥३४॥
न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ।
इत्युक्त्वा वरदा देवी युधिष्ठिरमरिन्दमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ॥ ३५ ॥

इति श्रीमहाभारते विराटपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ७

विप्ररूपेण युधिष्ठिरस्य विराटसभायां प्रवेशः ॥ १ ॥ तस्य महानुभावतां प्रेक्ष्य विराटेन सभास्तारीकरणम् ॥ २ ॥

**वैशम्पायन उवाच—**

ततो विराटं प्रथमं युधिष्ठिरो
राजा सभायामुपविष्टमाव्रजत् ।
वैदूर्यरूपान्प्रतिमुच्य काञ्चना-
नक्षान्स कक्षे परिगृह्य वाससा ॥ १ ॥
नराधिपो राष्ट्रपतिं यशस्विनं
महायशाः कौरववंशवर्धनः ।
महानुभावो नरराजसत्कृतो
दुरासदस्तीक्ष्णविषो यथोरगः ॥ २ ॥

[ नील० ] कान्तारे महारण्ये ॥ २० ॥ कान्तारे दुर्गममार्गे ॥ २१ ॥ संकीर्तयिष्यन्ति मामिति शेषः ॥ ३० ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ नील० ] वैदूर्यरूपान् काञ्चनांश्च शारीन् इदं श्वेतरक्तशारीणां शारिफलकस्य चोपलक्षणम् । अक्षान्पाशांश्च वाससा प्रतिमुच्य बद्धा कक्षे परिगृह्य आव्रजदिति संबन्धः ॥ १ ॥

( अर्जु० ) अक्षान् परिरभ्य संवेष्ट्य ॥ १ ॥

२८ वि० क्षोभयिष्यसि संप्राप्तां समेतां कुरुवाहिनीम् । ३० वि० मां कीर्तयिष्यन्ति । इति षष्ठोऽध्यायः ॥ ६ ॥

१ ज. ङ. व. प्रतिगृह्य काश्च; व. वैदूर्यबिन्दून्प्रतिनद्धकाश्च—वासासि ।

भ्रातृभिः सहितो राजंस्तवैव प्रपितामहः ।
दुःखशोकेन संतप्तो द्रौपद्या सह भारतः ॥ २ ॥
कृताञ्जलिपुटो भूत्वा वनवासाद्विनिर्गतः ।
भक्त्या परमया युक्तो दुर्गां दुर्गार्तिनाशिनीम् ॥ ३ ॥
महिषासुरदर्पघ्नीं सर्वलोकनमस्कृताम् ।
शैलराजसुतां गौरीं वरदामभयप्रदाम् ॥ ४ ॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि तेषां चक्रे युधिष्ठिरः ॥ ५ ॥
ततो यथाप्रतिज्ञातं प्राविशन्नगरं प्रति ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ६ ॥ इति।

बलेन रूपेण नरर्षभो महा-
नपूर्वरूपेण यथामरस्तथा।
महाभ्रजालैरिव संवृतो रवि-
र्यथाऽनलो भस्मवृतश्च वीर्यवान् ॥ ३ ॥
तमापतन्तं प्रसमीक्ष्य पाण्डवं
विराटराडिन्दुमिवाभ्रसंवृतम्।
समागतं पूर्णशशिप्रभाननं
महानुभावं नचिरेण दृष्टवान् ॥ ४ ॥
मन्त्रिद्विजान् सूतमुखान्विशस्तथा
ये चापि केचित्परितः समासते।
पप्रच्छ कोऽयं प्रथमं समेयिवान्
नृपोपमोऽयं समवेक्षते सभाम् ॥ ५ ॥

न तु द्विजोऽयं भविता नरोत्तमः
पतिः पृथिव्या इति मे मनोगतम्।
न चास्य दासो न रथो न कुञ्जरः
समीपतो भ्राजति चायमिन्द्रवत् ॥ ६ ॥
शरीरलिङ्गैरुपसूचितो ह्ययं
मूर्धाभिषिक्त इति मे मनोगतम्।
समीपमायाति च मे गतव्यथो
यथा गजस्तामरसीं मदोत्कटः ॥ ७ ॥
वितर्कयन्तं तु नरर्षभस्तथा
युधिष्ठिरोऽभ्येत्य विराटमब्रवीत्।
सम्राड्द्विजानात्विह जीवनार्थिनं
विनष्टसर्वस्वमुपागतं द्विजम् ॥ ८ ॥

[ चतु० ] वैडूर्यरूपान्वैडूर्यरचितान् । अक्षान्वाससा परिगृह्य वेष्टयित्वा। परिरभ्येति वा पाठः। कक्षे भुजसंधौ परि(ति?) गृह्येत्यन्वयः ॥ १ ॥

[ सर्व० ] वाससा प्रतिमुच्य बद्ध्वा कक्षे परिगृह्य ॥ १ ॥

[ विरो० ] कक्षे परिगृह्य परिरभ्य वाससा वेष्टयित्वा च ॥ १ ॥

[ विष० ] अधः परिधानवस्त्रे अग्रतः पृष्ठतश्च कक्षाद्वयं कृत्वेत्यर्थः ॥ १ ॥

[नील०] नचिरेण शीघ्रमेव ॥ ४ ॥ विशो वैश्यान् ॥ ५ ॥ न तु द्विजोऽयं द्विजवेषोऽपि राजैव भविष्यतीत्यर्थः ॥ ६ ॥ शरीरलिङ्गैः आजानुबाहुत्वादिभिस्तामरसीं पद्मिनीम्। एतेन स्वाभिभवशङ्का दर्शिता ॥ ७ ॥ द्विजं त्रैवर्णिकत्वात् ॥ ८ ॥

[अर्जु०] रविदृष्टान्तेन दूरस्थितैरनुपलक्षणीयम्। वह्निदृष्टान्तेन समीपस्थैरपीति दर्शयति॥ ३॥ विशस्तथा ये चापि केचिदिति। विशो मनुष्याः परितः सर्वतोभावेन समासते तान् पप्रच्छेत्यर्थः। 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। समीयिवान् आगतः ॥ ५ ॥ यथा गजस्तामरसीं मदोत्कट इति। मदोत्कटो मदेन उत्कृष्टगण्डो यथा मत्तो गजस्तामरसीं पद्मिनीमायाति तथा मम समीपमायाति इति योज्यम्। तामरसं पद्मं विद्यतेऽस्या इत्यर्थः। आदित्वादाति(?)ङीप् प्रत्ययः। तामरसी मदोत्कट इति पाठे तामरसी पद्मी। व्यक्त एवार्थ इति ॥ ७ ॥ अभ्येत्य संमुखमागत्य ॥ ८ ॥

[ चतु० ] अर्चिरूपेण तेजःस्वरूपेण दीर्घत्वाभाव आर्षः ॥ ३ ॥ प्रसमीक्ष्यापतन्तमित्यन्वयः ॥ ४ ॥ विशो मनुष्यान् परितः समीपे। पप्रच्छ विराट इत्यनुषज्यते। समेयिवान् समागतः ॥ ५ ॥ तामरसीं नलिनीम् ॥ ७ ॥

[ सर्व० ] तामरसीं पद्मिनीम् ॥ ७ ॥ द्विजं त्रैवर्णिकत्वात् ॥ ८ ॥

[ विरो० ] अथ स्वरूपेण; अथार्चिरूपेण (च) ॥ २ ॥ तामरसीं पद्मिनीम् ॥ ७ ॥

[ विष० ]रविदृष्टान्तेन दूरस्थैरनुपलक्षणीयत्वम्। अनलदृष्टान्तेन समीपस्थैरनुपलक्षणीयत्वम् ॥ ३ ॥ तान् सभासद इति पप्रच्छ। यदयं वः युष्माकं कः संबन्धीयः। ब्राह्मणादीनां केषामयं संगी नो भवति। मन्ये इहाऽस्मत्सभायां प्रथमं समेयिवान् आगतः। पूर्वमियं सभाऽनेन न दृष्टेत्यर्थः। तत्र कारणमाह। य आगतः सन् सभामीक्षते सर्वमेव विलोकयति ॥ ५ ॥ विनष्टसर्वस्वं द्विजं क्षत्रियम्। "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" इति श्रुतेः। अतो द्वितीयजातत्वाद्विजम्। प्रथमं ब्राह्मणाः तदनु द्वितीयावसरे क्षत्रियाः। यद्वा 'मातुरग्रे प्रजायन्ते द्वितीयं मौञ्जिबन्धनात्। ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ॥ ८ ॥

३ ग. घ. परेण रूपेण; व. परेण रूपेण यथा पुरंदरो अथर्वरूपेण पितामहो यथा। ङ. नरर्षभो–अर्चिःस्वरूपेण; ग. गन्धर्वरूपेण; घ. मनुष्यरूपेण; ज. अथ स्वरूपेण। बि. बभूव रूपेण। बि. तदा ४ व. तमापतन्तं त्वरितं नृपोत्तमं नृपो विराडिन्दु—सभागतम्। ग. घ. त्रि. सहानुचारैरचिरेण; व. सहानुगैर्नातिचिरेण। ५ पूर्वार्धस्थाने ग. स च द्विजान्सुतमुखांस्तथा विशो ये चानुगास्तत्परिषत्सु ते स्थिताः; व. स तु द्विजान्पू (सू) तमुखान्द्विजं तदा (विशस्तथा) ये चापि केचित्परिषत्समागताः। बि. स तु द्विजान्सूतमुखान्विशिष्टान्। उत्तरार्धस्थाने ग. घ. पप्रच्छ को वः प्रथमं समेयिवान्नरो हि येषां प्रसमीक्षते सभाम्। व. वान् मानेन (अभ्येत्य) योऽयं प्रसमीक्षते सभाम्। बि. नातीतकोऽयम्। ६ ज. न चास्य वाजी; व. न चास्य दासा न रथो न कुण्डले सभागतो; दे. घ. व. रथो न कुण्डले समी। ७ ज. व. मूर्धावसिक्तस्त्विति मेऽत्र मानसम्। बि. यथा महेभः सरसीम्। ८ व. सम्राड्द्विजानां त्विह; छ. ज. सम्राड्विजानीहि हि जीवितार्थिनम्।

इहाहमिच्छामि तवानघान्तिके
 वस्तुं यथा कामचरस्तथा विभो ।
तमब्रवीत्स्वागतमित्यनन्तरं
 राजा प्रहृष्टः प्रतिसंगृहाण च ॥ ९ ॥
तं राजसिंहं प्रतिगृह्य राजा
 प्रीत्याऽऽत्मना चैनमिदं बभाषे ।
कामेन ताताभिवदाम्यहं त्वां
 कस्यासि राज्ञो विषयादिहागतः ॥ १० ॥
गोत्रं च नामापि च शंस तत्त्वतः
 किं चापि शिल्पं तव विद्यते कृतम् ॥ ११ ॥

युधिष्ठिर उवाच—

युधिष्ठिरस्यासमहं पुरा सखा
 वैयाघ्रपद्यः पुनरस्मि विप्रः ।
अक्षान्प्रयोक्तुं कुशलोऽस्मि देविनां
 कङ्केतिनाम्नास्मि विराट विश्रुतः ॥ १२ ॥

विराट उवाच—

ददामि ते हन्त वरं यमिच्छसि
 प्रशाधि मत्स्यान्वशगो ह्यहं तव ।
प्रियाश्च धूर्ता मम देविनः सदा
 भवांश्च देवोपम राज्यमर्हति ॥ १३ ॥

युधिष्ठिर उवाच—

प्राप्तो विवादः प्रथमं विशाम्पते
 न विद्यते कं च न मत्स्य हीनतः ।
न मे जितः कश्चन धारयेद्धनं
 वरो ममैषोऽस्तु तव प्रसादजः ॥ १४ ॥

---

[ नील० ] कामचरः त्वदिच्छानुवर्ती ॥ ९ ॥ प्रीत्याऽऽत्मना प्रीतिमता मनसा कामेन रागेण तातेति श्रेष्ठत्वात्संबोधयति ॥ १० ॥ शिल्पं कौशलं किंविषयं तव त्वया कृतं संपादितम् ॥ ११ ॥ युधिष्ठिरस्येति लोके । पक्षे युधिष्ठिरोऽहं तव सखा स्यासं भूयासमिति संबन्धः । अस्तेराशीर्लिङि छान्दस आर्धधातुकत्वाभावः तेन भूभावः श्नसोरित्यल्लोपाभावश्च न भवतः सलोपाभावोऽपि छान्दसः । युधिष्ठिरः स्या हमहं सखेति पाठेऽपि युधिष्ठिरोऽहं मम सखा स्याः भवेति संबन्धः । हमिति तु पादपूरणार्थो निपातः । पक्षे अहमहमिति द्विरुक्तिः सार्वभौमोऽपरसेवां चिकीर्षामीति चिन्तया वैचित्यसूचिका । वैयाघ्रपद्यः व्याघ्रपाद्गोत्रे भवः व्याघ्र इव पततीति व्याघ्रपाद्यमस्तस्य कुले जातो वैयाघ्रपद्यः । गर्गादित्वाद्यञ् । यद्वा । वैयाघ्रं व्याघ्रचर्म तेन परिवृतो रथोऽपि वैयाघ्रः स एव पद्यं पादक्रमणीयं वाहनमस्येति वैयाघ्रपद्यः । 'परिवृतो रथः' इत्यधिकृत्य द्वैपवैयाघ्रादित्यञ् । विप्रः विशेषेण प्राति पूरयति ब्राह्मणादीन् धनादिभिरिति विप्रः । धर्मसूनुत्वाद्वा विप्रोऽहम् । ब्राह्मण इति पाठे तु ब्रह्मविदिति मुख्य एवार्थो ग्रहीतुं शक्यः । कङ्क इति कृतान्तनामेति प्रागेवोक्तम् । अक्षान्प्रयोक्तुं कुशलः बृहदश्वशिष्यत्वात् ॥ १२ ॥ देविनः देवनशीलाः ॥ १३ ॥ प्राप्तो विवाद इति द्यूतिनां मध्ये इति शेषः । द्यूतकृतां मध्ये हीनतः हीनात् पराजितात् यं कं च कमपि प्रथमं राजानं राजपुत्रं वा मुख्यं जयवन्तं प्रथमशब्दोऽत्र श्रेष्ठवाची तं प्रति विवादः प्राप्तो न विद्यते इति न । सत्यगन्धरहिते द्यूते पराजिता जयवद्भिः सह नित्यं कलहं कुर्वन्त्येवेत्यर्थः । हे विशांपते, हे मत्स्येत्यादरार्थं द्विःसंबोधयति । यस्मादेवं तस्मात् कश्चन कोऽपि मया जितो मे मदीयं धनं न धारयेत् । अहं कलहाद्भीतस्त्वमेव सत्यं ज्ञात्वा मदीयं धनं दापयेत्यर्थः ॥ १४ ॥

[ अर्जु० ] कामचरः यदृच्छया तिष्ठामि यामि च । प्रतिसंगृहाण प्रतिसंजग्राह विभक्तिपुरुषयोर्व्यत्ययात् । प्रागेवोक्तं-'पदज्ञैर्नाति निर्बन्धः कर्तव्यो मुनिभाषिते । अनुस्मरणतात्पर्यान्नाद्रियन्ते हि लक्षणम्' इत्यादि ॥ ९ ॥ वैयाघ्रपद्यः वैयाघ्रपद्यगोत्रः ॥ १२ ॥ धूर्ता द्यूतकाराः ॥ १३ ॥ हे मत्स्य विशांपते नृपते हीनतः पुरुषात् कश्चन कोऽपि न विद्यते मम विवाद इति प्रथमं प्राप्तो वर इति शेषः । जितः सन्मम धनं न कश्चन धारयेत् अप्रयच्छन् चिरं कुर्यात् द्वितीयो वर इत्यभिप्रायः । यद्वा हे मत्स्य प्रथममेष वरोऽस्तु हीनतः कुलशीलद्रविणादिहीनेन कश्चन विवादः प्राप्तो न विद्यते विवादप्रधानं द्यूतं यतः । आप्तो विवादः परम इति पाठे—हे विशांपते हीनतो हीनजनेन सह मम कश्चित् द्यूतादिव्यवहारो न विद्यते न भवतु । किंतु साधुभिरेव भवत्वित्यभिप्रायः । अत एव विवादः परमो योग्यः । अयमाशयः द्यूते विवादो जायत एव किंतु साधुसंबन्धी विवादः परमः आप्तानां विवाद आप्त इत्युच्यते । 'आप्तः प्रत्ययितः साधुः' इत्यमरः । प्राप्नोतु वादं प्रथमं विशांपते न विद्यते किंचन मत्स्य हीनत इति पाठे—हे नरपते यः कश्चित् द्यूते मामधिक्षिपति स त्वत्तः प्रथमं वादं प्राप्नोतु त्वयैव सह तेन विवदनीयं न मयेत्यर्थः । न विद्यते न भवतु द्यूतव्यवहारः कुलशीलद्रविणादिभिर्हीनेन । तृतीयान्तात्तसिः । अपरं मया जितः सन् न मे कश्चन धनं धारयतु

---

९ ग. कामचरस्तथामि ते । च. प्रजा प्रहृष्टा प्रति । व. बि. प्रतिसंग्रहेण । ११ व. गोत्रं च नाम्ना सह । १२ व. युधिष्ठिरस्यास्मि सखा प्रतीतो । व. स्मि देविता ( देवने ) कङ्कः; ज. देविता । १३ ज. वरं यथेच्छसि—देवो मम राज्य । व. प्रिया हि धूर्ता—देवो मम राज्य । १४ व. आप्तो विवादः । ज. त्रिवादः परमो विशांपते । व. ज. जितः किंचन ।

द्यूतकारः तत्क्षणमेव त्वयैव वासौ मदीयं धनं दापयितव्यः। अयमभिप्रायः—द्यूतकाराणां चतस्रो वृत्तयः—छलं बलं निह्नवः कलहश्चेति। तत्र प्रथमेन पादेन छलबले निरस्ते राजदण्डभयात्। निह्नवोऽपि नास्ति जितस्य धनस्य तत्क्षणमेव दापनात्। कलहोऽपि नास्ति हीनकुलशीलद्रविणानां हि धाम यत् कलहो नाम। एवं चतुष्टयं याचितवान् इत्यर्थः। अत्र पक्षे 'एकमाहुर्वैश्यवरं वरौ द्वौ क्षत्रियस्य तु। त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः' इति। सभायां द्रौपद्या वाक्यात्परामर्षः। ब्राह्मणवेशधारित्वेन तथा व्यवहार इति ॥ १४ ॥

[ चतु० ]प्रतिसंगृहाण प्रतिसंगृहीतवान्। आर्षो व्यत्ययः ॥ ९ ॥ कामेन इच्छया ॥ १० ॥ कृतमभ्यस्तम् ॥ ११ ॥ वैयाघ्रपद्यः कुलीनो गोत्रेण। प्रयोक्तुं प्रयोजितुम् (?) ॥ १२ ॥ धूर्ता द्यूतविदः ॥ १३ ॥ प्रथमो मुख्यः प्राप्तः प्रत्ययितः स्यामित्यर्थात्। परम इति वा पाठः। हीनतो हीनेन सह मे विवादो द्यूतादिव्यवहारो न विद्यते। जितः सन् न कश्चन मम धनं धारयेत्। एवमेष त्रिविधो वरो ममास्त्वित्यन्वयः ॥ १४ ॥

[ सर्व० ] कामचरः त्वदिच्छानुवर्ती ॥ ९ ॥ शिल्पं कौशलम् ॥ ११ ॥ वैयाघ्रपद्यः व्याघ्रपाद्गोत्रे भवः। तत्त्वं तु व्याघ्र इव पततीति व्याघ्रपाद्यमस्तस्य कुले जातो वैयाघ्रपद्यः। विप्रः विशेषेण प्राति पूरयति ब्राह्मणादीनिति विप्रः। पाठान्तरे ब्रह्मविदिति। प्रकर्तुं प्रयोक्तुम् ॥ १२ ॥ हीनतः हीनेन सह प्राप्तः द्यूतनिमित्तः कलहः कं च न अल्पोऽपि न विद्यते न भवेदिति प्रथममादौ वरो देयः। ततो मया जितः कोऽपि मदीयं धनं न धारयेत् ॥ १४ ॥

[दुर्घ०] विराटेन वरं प्रार्थयेति अभिहितो युधिष्ठिरस्तमुवाच—प्राप्नोतु वादं प्रथमं विशाम्पते न विद्यते किंचन हीनवर्णतः। न मे जितं कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादतः॥ भो विशांपते यः कश्चिद् द्यूते मामाधिक्षिपति स त्वत्तः प्रथमं वादं विवादं प्राप्नोतु त्वयैव तेन सह विवदनीयं नतु मयेत्यर्थः। न विद्यते इति भवतु द्यूतादिव्यवहारः कुलद्रविणवर्णहीनेन सह विवादो न भवत्विति तृतीयायास्तसिः। न मे जित इति। द्यूते जितो नरः कश्चन मे धनं न धारयतु द्यूतकारः तत्क्षणं त्वयैवासौ मदीयं धनं दापयितव्यः। अयमभिप्रायः—द्यूतकाराणां चतस्रो वृत्तयः—छलो बलं निह्नवः कलहश्चेति। तत्र प्रथमपदेन छलबले निरस्ते राजदण्डभयात्। निह्नवो नास्ति जितस्य धनस्य तत्क्षणमेव दानात्। कलहोऽपि नास्ति हीनकुलवर्णानां हि धर्मोऽयं द्यूतकलहो नाम। एवं हि वरचतुष्टयं याचितवानित्यर्थः ॥ १४ ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां
विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ विरो० ] गृहाण जग्राह ॥ ९ ॥ कृतमभ्यस्तम् ॥ ११ ॥ सखा हितकारी। विप्रस्त्वसदृशत्वात् ॥ १२ ॥ विगतो मया सह वादो यस्य स विवादः तव परम आप्तो भविष्यति (शेषः) मया यदि निन्दा क्रियते तदैव मम दोष इत्याह—हे मत्स्य हीनतः हीनं कर्म किंचिन्मम न विद्यते। आप्नोतु वादं प्रथमं; प्रथमः। जितं जयोऽस्यास्तीति [जितः] जयी न धारयेन्न गृह्णीयात् ॥ १४ ॥

[ विष० ] यथाकामचरः यथाकामेन चरामि यदृच्छया गच्छामि तिष्ठामीत्यर्थः। प्रतिसंग्रहेण अभ्युत्थानादिना। यद्वा प्रतिसंगृहाण च विरुद्धविभक्तिपुरुषव्यत्ययात् प्रतिसंजग्राहेत्यर्थः ॥ ९ ॥ यदि सम्राट्पदस्थेन युधिष्ठिरेण ते सख्यं तर्हि मयापि सह सख्यमेव समीचीनमिति राज्ञोऽभिप्रायः। कङ्केति 'कं कोऽपि न प्रयातीह पुमान्दैवविधेर्वशात्। इति कङ्कच्छलादूचे विराटं स युधिष्ठिरः।' यद्वा कं सुखं कायासीति कंकः। कै गै शब्दे। कमात्मानं कथयामि वा। कं ब्रह्म वा कायामि। कं शपथं त्रयोदशवर्षावधिकृतं वा करोमीति कङ्कः। कङ्केतिनाम्ना ॥ १२ ॥ अस्योपरि हन्तेति हर्षे योग्यप्राप्तौ सम्यगर्थे स्मरणे ग्रहणेऽप्यर्थे मङ्गले प्रश्नोत्तरे च ॥ १३ ॥ आप्तो विवाद इति। 'आगमो ह्याप्तवचनमाप्तं दोषक्षयं विदुः। क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात्।' अनृतस्य हेतुर्नास्ति। 'स्वकर्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः। पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः।' हे विशांपते मत्स्य विवाद आप्त उपस्थितः सन् प्रथमं मयेति शेषः। सर्वविवादानां मयैव निर्णयः कार्यः। यतो मयि राष्ट्रे निवसमाने प्रजासु सभ्यदोषादन्यायो माभूदिति भावः। तथा हीनतः वण्ठछायाकारभारवाहादिनीचतः किंचन आसनाह्वानादि न विद्यते न कारयितव्यं सम्राट्त्वात्। तथा मे मया जितं कश्चन न धारयेत्। तदानीमेव दद्यात्। द्यूतजिते धने कालान्तरेण याच्यमाने शुष्ककलहः स्यात्तत्र च वृथाक्षेपं भीमादयो न सहन्ते। तव प्रसादज एष मम वरोऽस्तु। इत्यर्थः प्रकटः। अथ च मनोगतं सत्यमेतदाह—हे विशांपते मत्स्य प्रथमं मुख्यो विवाद आप्तः आप्तुमारब्धः। यतस्त्रयोदशो वर्षः कियान् गतः। इदानीं तव पुरे निवस्तुमागताः। अतोऽल्पावशिष्टे त्रयोदशवर्षे अन्तरा परिज्ञातेषु विवादो मुख्य एव। यतो हीनतो नीचात् स्वभावपापबुद्धेः दुर्योधनशकुनिदुःशासनादेः किंच न विद्यते। अपि तु सर्वं संभवति। तथा मे मम अजितं धनं कश्चिन्न धारयेत् ? अपि तु धारयेदेव। छद्मजितं किल अजितमेव। पुनः सांप्रतं मम छद्मवासिन एव उच्चासनादिस्थानरूपो वरस्तवाऽस्तु। सम्राट्पदस्थस्यापि पश्यतस्त्वया सिंहासनादिराजासनेषु अस्मदनुज्ञया उपवेष्टव्यमित्यर्थः ॥ १४ ॥

[लक्ष्मा०] युधिष्ठिरस्यास्मि सखेत्यत्र ''त्मानं प्रति निरुपाधिप्रेमास्पदत्वाद्युधिष्ठिरस्य सखा अस्मीत्युक्तं। तस्य शरी-

**विराट उवाच—**

हन्यामवध्यं यदि तेऽप्रियं चरे-
　त्प्रव्राजयेयं विषयाद्द्विजांस्तथा ।
शृण्वन्तु मे जानपदाः समागताः
　कङ्को यथाऽहं विषये प्रभुस्तथा ॥ १५ ॥
समानयानो भविताऽसि मे सखा
　प्रभूतवस्त्रो बहुपानभोजनः ।
पश्येस्त्वमन्तश्च बहिश्च सर्वदा
　कृतं च ते द्वारमपावृतं मया ॥ १६ ॥
ये त्वाऽनुवादेऽयुरवृत्तिकर्शिता
　ब्रूयाश्च तेषां वचनेन मां सदा ।
दास्यामि सर्वं तदहं न संशयो
　न ते भयं विद्यति सन्निधौ मम ॥ १७ ॥

**वैशम्पायन उवाच—**

एवं स लब्ध्वा तु वरं समागमं
　विराटराजेन नरर्षभस्तदा ।
उवास धीरः परमार्चितः सुखी
　न चापि कश्चिच्चरितं बुबोध तत् ॥ १८ ॥

इति श्रीमहाभारते विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

रमेव अहमस्मि । स्वशरीरे यथा प्रीतिं करोति तथा मय्यपीति बाह्यो भावः । तच्छरीरं मच्छरीरमित्यान्तरो भावः । वैयाघ्रपद्योऽस्मीत्यत्र व्याघ्रपदः गोत्रापत्यं पुमान् वैयाघ्रपद्यः। वैयाघ्रपद्यगोत्रायेति भीष्मस्य कथनात् सोमवंशप्रवर्तकः व्याघ्रपादिति कश्चिदस्ति ऋषिरिति बाह्यो भावः ॥ १२ ॥ प्रियाः हि धूर्ता ममेत्यत्र अक्षकोविदाः धूर्ताः प्रियाः ममापि सन्ति । तस्मादक्षक्रीडार्थं त्वां न वरये । किं तु महालक्षणभरितस्त्वं राज्यमेव पालयेति भावः ॥ १३ ॥ न मे जितं किंचनेत्यत्र मे जितं वैराग्येण वशीकृतं मनः ॥१४॥

[ नील० ] ते तव अप्रियमितिच्छेदः । यथाऽहं विषये देशे प्रभुस्तथा कङ्कोऽपीति योजना ॥ १५ ॥ अन्तर्धनदारादीन् बहिः सैन्यारामादीन् पश्येः पर्यालोचय अपावृतमनावृतम् ॥१६ ॥ अनुवादेऽयुः पूर्वं देहीत्युक्त्या दत्तस्यैव क्षेत्रारामादेः प्रतिवर्षं पुनर्देहीति राजवचनं यदधिकारिणं प्रति तदनुवादस्तन्निमित्तं ये त्वां प्रति अयुः प्राप्नुयुस्तेषां वचनेन सदाऽनवसरेऽपि मां ब्रूयाः। क्षणमपि ब्राह्मणवृत्तेः प्रतिबन्धो मा भूदित्याशयः॥ १७ ॥ वरं श्रेष्ठं समागमं प्रीतिम् ॥ १८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अर्जु० ] समानजातो भवितासि मे सखेति। ( समानजातः समानवयाः समानमनाश्च तस्य समुन्नतिः तस्य जातं समूहः तद्वान् समानजातः समानं तुल्यं जातं समूहो यस्य इति विग्रहे समानस्य सभावे रूपम् । 'शतंजातोद्यजन्त्यस्मिन्' इति विश्वः । (?) ) तमेवार्थं स्पष्टीकरोति प्रभूतवस्त्र इत्यादिना । अपावृतम् उद्घाटितम् अपसारितमित्यर्थः॥१६॥

अवृत्तिकर्शिता अवृत्तिर्वर्तनाभावः तया पीडिताः ॥ १७ ॥

इत्यर्जुनमिश्रकृतायां महाभारतव्याख्यायां विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ चतु० ] अपावृतमप्रतिरुद्धम् ॥१६॥ त्वा त्वाम् ॥१७॥

इति श्रीचतुर्भु०महा०टी० विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ सर्व० ] देहीत्युक्त्या पूर्वं दत्तस्य क्षेत्रादेः प्रति[illegible] देहीति पुनर्वचननिमित्तं ये त्वां प्रति अयुः प्राप्नुयुः ॥१७॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ विरो० ] समानजातः समवयाः । त्वां च याचेयुः त्वानुवादेयुः ( च ) । अनुवादे मयि वचनार्थमयुः आग[illegible]च्छेयुः ॥ १७ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ विष० ] अयं विशेषः । समानजातः समानवयाः समा[illegible] नधर्मा वा । एतेन समानासनादि सूचितम् । समानजात[illegible] भविष्यसि असि त्वमिति । मानपूजायां मानजात[illegible] मानसमूहेन सह वर्तत इति वा । संमदा हर्षेण ॥ १६ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ लक्षा० ] स वास्य कश्चिच न तं बुबोध तदित्यत्र तत्[illegible] स्माद्यतिवेषधारित्वात् स वा विराटो वा अस्य कश्चिद्भृत्य[illegible] जनो वा तं न बुबोधेति योजना ॥ १८ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

१५ वि. नूनं स वध्यो यदि ग. घ. व. हन्यामवध्यं यदि । व. मे पौरजनाः समागताः । १६ ग. घ. वि. व. समानजातो भवि । व. मध्ये तथान्ते च बहिश्च । १७ व. त्वाऽनुबोधेयुर; त्वाऽनुधावेयुर; त्वाऽनुयाचेयुर; । वि. त्वाध्यायेयुः । ज. त्वां च याचेयुर । त्रि. दद्यां च तेषां वचनेन ते । व. भयं वि[illegible] ते शासनान्मम । १८ व. ज. स लब्ध्वा परमं समा । क. ग. घ. च. त्रि. [illegible] व. वि. उवास वीरः परमार्चितः । इति सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ८

भीमस्य सूदवेषेण विराटसभायामुपस्थानम् ॥ १ ॥ सत्कृत्य विराटेन तस्य तत्काम्यया स्वमहानसाधिपत्ये नियोजनम् ॥ २ ॥

**वैशम्पायन उवाच—**

अथापरो भीमबलः श्रिया ज्वल-
न्नुपाययौ सिंहविलासविक्रमः ।
खजां च दर्वीं च करेण धारय-
न्नसिं च कालाङ्गमकोशमव्रणम् ॥ १ ॥

स सूदरूपः परमेण वर्चसा
रविर्यथा लोकमिमं प्रकाशयन् ।
स कृष्णवासा गिरिराजसारवां-
स्तं मत्स्यराजं समुपेत्य तस्थिवान् ॥ २ ॥

तं प्रेक्ष्य राजा रमयन्नुपागतं
ततोऽब्रवीज्जानपदान्समागतान् ।
सिंहोन्नतांसोऽयमतीव रूपवान्
प्रदृश्यते को नु वरर्षभो युवा ॥ ३ ॥

अदृष्टपूर्वः पुरुषो रविर्यथा
वितर्कयन्नास्य लभामि निश्चयम् ।
तथाऽस्य चित्तं ह्यपि संवितर्कय-
न्नरर्षभस्यास्य न यामि तत्त्वतः ॥ ४ ॥

दृष्ट्वैव चैनं तु विचारयाम्यहं
गन्धर्वराजो यदि वा पुरन्दरः ।
जानीत कोऽयं मम दर्शने स्थितो
यदीप्सितं तल्लभतां च माचिरम् ॥ ५ ॥

विराटवाक्येन च तेन चोदिता
नरा विराटस्य सुशीघ्रगामिनः ।
उपेत्य कौन्तेयमथाब्रुवंस्तदा
यथा स राजाऽवददच्युतानुजम् ॥ ६ ॥

[ नील० ] खजां मन्थनदण्डमङ्गारावक्षेपणं वा हस्ताकारं पिष्टविकारप्रमथनार्थं वा दण्डम् । 'खजा मन्थप्रहस्तयोः' इति विश्वः । दर्वीं शाकादिपरिवेषणार्थामसिं मांसाद्यवकर्तनार्थं खड्गं कालाङ्गं कृष्णायसमयं तीक्ष्णमित्यर्थः । अकोशं पिधानहीनम् ॥ १ ॥ गिरिराजसारः महामेरुवत्कठिनदेहः, यद्वा गिरिराजसारो लोहं तेन तद्विकाररूपं पात्रजातं लक्ष्यते, भक्ष्यद्रव्यपाकार्थं स्नेहपाकार्थं वा तद्वान् ॥ २ ॥ तत्त्वतः तत्त्वं न यामि न प्राप्नोमि ॥ ४ ॥ अवदत् उक्तवान् अच्युतो धर्मः फलमदत्त्वा न च्यवत इति योगात्तस्यानुजम् ॥ ६ ॥

[ अर्जु० ] खजां दर्वीं चेति । खजां मन्थनदण्डं दर्वीं तर्दूम् । यद्वा सूपादिपरिवेषणार्थां लौहमयी खजा, कटाहादन्ननिःसारणार्था दर्वीति भेदः ॥ १ ॥ गिरिराजसारवान् गिरिराजो मेरुः तस्येव सारं बलं विद्यते यस्य स तथा । यद्वा सारः दृढाङ्गावयव इति यावत् , स विद्यतेऽस्येति सारवान् गिरिराज इव सारवान् स्थिरांशवानित्युपमानपूर्वपदकर्मधारयः। न यामि तत्वतः, तत्वं स्वरूपं न यामि नाधिगच्छामि याधातोर्गत्यर्थत्वेनैव ज्ञानार्थत्वात् । संपदः कुलशीलादयः ॥ ४ ॥ अच्युतानुजं युधिष्ठिरस्य सत्यादेरच्युतत्वात् तथा व्यपदेशः । अर्जुनस्य नरनारायणयोरैक्यादच्युतत्वं वा । अर्जुनानुजमिति पाठे अर्जुनोऽनुजो यस्येति स्पष्टार्थः ॥ ६ ॥

[ चतु० ] सिंहविलासविक्रमः सिंहस्येव विलासो विक्रमश्च यस्य । खजां व्यञ्जनाद्यवघट्टनकाष्ठम् । दर्वीं दारुहस्तकम् । कालाङ्गं कृष्णायोघटितम् ॥ १ ॥ न लभामि नावधारयामि ॥ ४ ॥ न विभावयामि न निश्चिनोमि ॥ ५ ॥ अच्युतानुजमजातशत्रोरनुजम् 'अच्युतोऽजातशत्रौ स्यात्स्थिरेऽरिष्टावनिर्जिते' इति कोषदर्शनात् ॥ ६ ॥

[ सर्व० ] खजां हस्ताकारं पिष्टविकारप्रमथनार्थं दण्डमसिं मांसाद्यवकर्तनार्थं खड्गं कालाङ्गं कृष्णायसमयमकोशं पिधानहीनम् ॥ १ ॥ गिरिराजसारः महामेरुवत्कठिनदेहः ॥ २ ॥ तत्त्वतः तत्त्वं न यामि न प्राप्नोमि ॥४॥ अच्युतो धर्मः ॥६॥

[ विरो० ] खजां सूपादिमन्थनकाष्ठम् । दर्वीं दारुहस्तकम् । कालाङ्गं अतिकृष्णाङ्गं ॥ १ ॥ तत्वतः; संपदः (दे)। सम्यङ्निश्चयं न यामि न प्राप्नोमि ॥ ४ ॥ परिभाव २॥५॥ अच्युतानुजमर्जुनानुजम् ॥ ६ ॥

[ विष० ] अथ कदाचित् तस्मिन्नेव दिने खजं मन्थनदण्डम् । दर्वीं चटुकम् । असिं पालीं मांसकर्तनिकां कालं कृष्णमकोशं प्रत्याकाररहितम् । भीषणं तीक्ष्णम् ॥ १ ॥ गम्भीररूपः प्रधानसूपकारवेषः । परमेण वर्चसा उत्कृष्टेन तेजसा । गिरिराजो मेरुस्तस्येव सारं बलं यस्य सः ॥ २ ॥ संपदं गुणवीर्यादीनां समृद्धिम् । तथा अस्य नरर्षभस्य चित्तं ह्यपि सम्यग्विचारयन् हि स्फुटं तत्त्वतो न यामि न प्राप्नोमि । ईदृगयमिति परिच्छेत्तुं न शक्नोमीत्यर्थः ॥ ४ ॥

१ वि. विशालविक्रमः । व. कालाङ्गमकोशभीषणम् । २ व. गम्भीररूपः परमेण । वि. कृत्तिवासाः । व.मिमं प्रभासयन् । व.स मत्स्यराजं गिरि । ३ व. रमयन्तमागतं ततो; वरमभ्युपागतं; ज. राजानमिवान्तिकागतं । व.ज.नु नरर्षभो युवा । ४ व. ज. अदृष्टरूपः । ग. घ. व. न्नास्य लभेय संपदम् । ज.तथाऽस्य तत्त्वं ह्यपि । व. ज. नरर्षभस्याद्य न । ५ ङ. चैनं न विभावयाम्यहम् । व. मदीप्सितं तल्लभतां; ज. यदिच्छते तल्लभताम् ।

ततो विराटं समुपेत्य पाण्डव-
स्त्वदीनरूपं वचनं महामनाः ।
उवाच सूदोऽस्मि नरेन्द्र बल्लवो
भजस्व मां व्यञ्जनकारमुत्तमम् ॥ ७ ॥

**विराट उवाच—**

न सूदतां बल्लव श्रद्दधामि ते
सहस्रनेत्रप्रतिमो विराजसे ।
श्रिया च रूपेण च विक्रमेण च
प्रभाससे त्वं नृवरो नरेष्विव ॥ ८ ॥

**भीम उवाच—**

नरेन्द्र सूदः परिचारकोऽस्मि ते
जानामि सूपान्प्रथमं च केवलान् ।
आस्वादिता ये नृपते पुराऽभव-
न्युधिष्ठिरेणापि नृपेण सर्वशः ॥ ९ ॥

बलेन तुल्यश्च न विद्यते मया
नियुद्धशीलश्च सदैव पार्थिव ।
गजैश्च सिंहैश्च समेयिवानहं
सदा करिष्यामि तवानघ प्रियम् ॥ १० ॥

**विराट उवाच—**

ददामि ते हन्त वरान्महानसे
तथा च कुर्याः कुशलं प्रभाषसे ।
न चैव मन्ये तव कर्म तत्समं
समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ ११ ॥
यथा हि कामो भवतस्तथा कृतं
महानसे त्वं भव मे पुरस्कृतः ।
नराश्च ये तत्र समाहिताः पुरा
भवांश्च तेषामधिपो मया कृतः ॥ १२ ॥

---

स्वप्रतिज्ञाधर्मात् न च्यवते स्म इत्यच्युतो युधिष्ठिरस्तस्याऽनुजं कनीयांसम् ॥ ६ ॥

[ लक्षा० ] खजं च दर्वीं च करेण धारयन्नित्यत्र खजमन्नरसनिष्क्रमणाय खमवकाशं दातुं जातमिति व्युत्पत्त्या खजपदेन शमी कथ्यते । यसमुच्च इत्यपभ्रंशभाषा ॥ १ ॥ गिरिराजसारवानित्यत्र गिरिराजसारवान् पर्वतराजवत्सत्त्ववान् ॥ २ ॥

[ नील० ] सूदः पाककर्ता बल्लवो नामतः ॥ ७ ॥ तव कर्म न चैव समं मन्ये इतरकर्मणेति शेषः । अतिमानुषं कर्म वदसीत्यर्थः ॥ ११ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥

[ अर्जु० ]न केवलं प्रथममहं सामान्यसूपान् जानामि युधिष्ठिरणे ये आस्वादिताः सूपा व्यञ्जनानि । राजयोग्यपाचकोऽहमिति भावः ॥ ९॥ समुद्रनेमिं पृथिवीमिति । समुद्रो नेमिरवधिर्यस्याः पृथिव्याः सा तथा ताम् । 'नेमिः क्लीबे तथा गर्ते प्राकारे कैतवेऽपि च' इति विश्वः ॥ ११ ॥ पुरस्कृतो नियुक्तः अधिकृत इति यावत् ॥ १२ ॥

इति श्रीमदर्जुनमिश्रकृतायां महाभा० विराटप० अष्टमोऽध्यायः ॥ ८ ॥

[ चतु० ] बल्लव इति नाम्ना प्रसिद्धः । भजस्व स्वीकुरु ॥ ७ ॥ प्रभाससे दीप्यसे ॥ ८ ॥ न केवलमित्याकाङ्क्षायां पूरयति—बलेनेति। नियुद्धशीलो बाहुयुद्धकुशलः । समीयिवान् संगतः सन् ॥ १० ॥ अधिकुर्याः अध्यक्षतां कुर्याः कुशलं समुचितम् ॥ ११ ॥ पुरस्कृतोऽधिकृतः ॥ १२ ॥

[ सर्व० ] सूदः पाककर्ता ॥ ७ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥

[ विरो० ] न केवलान् किंतु विशिष्टान् ॥९॥ नेमिं; नेमीं (दी) ॥ ११ ॥

[ विष० ] वल वल्ल च संवरणार्थोऽयं धातुः । वल्लामि शत्रुषु समुत्पतितं कोपं संवृणोमि संयच्छामि ज्येष्ठानुरोधादिति वल्लवः । व्यञ्जनकारं सर्वशाकादिषड्रसव्यक्तिकरम् अन्तर्गतपक्षे क्रुद्धः सन् समरे शत्रूणां व्यञ्जनं पराजितलक्षणं दासकरणपञ्चचूलाकरणादिकं करोमीति व्यञ्जनकारः ॥७॥ नरेन्द्र अहं सूदः नरेन्द्रस्य युधिष्ठिरस्य सूदः । अन्तर्गतपक्षे अहं नरेन्द्रसूदः नरेन्द्रान् नृपतीन् सूदयामीति नरेन्द्रसूदः साम्प्रतं परिचारकः प्रतिचाररूपः प्रच्छन्नवासीत्यर्थः । जानामि सूपान् तथा सूपान्देशाञ्जानामि । सुष्ठु सम्यगुप्यते बीजवापः क्रियते एष्विति सूपा देशास्तान् । केवलान् 'एके मुख्यान्यकेवलाः' प्रथमेन मुख्यतया मुख्यान् देशानित्यर्थः । हे नृपते ! ये सूपा देशा युधिष्ठिरेण नृपेण आस्वादिताः करादानेन राजसूये भुक्ता अभूवन् । सर्वशः समन्तात् ॥ ९ ॥

[ लक्षा० ] एवं हि मन्ये तव कर्म तादित्यत्र तव कर्म तत् उपरि वक्ष्यमाणम् ॥ ११ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे
विराटपर्वण्यष्टमोऽध्यायः ॥ ८ ॥

---

६ व. विराटराजेन तु नोदिता नरा गताश्च वेगेन सुशीघ्रकारिणः । ज. ब्रुवंस्तथा यथा स । ७ ज. स्वदीनरूपो वचनं । व. उवाच सूदेषु । ८ ङ. ग. घ. व. ज. सूदतां मानद श्रद्द । च.बि.व. प्रतिमो हि दृश्यसे । व. प्रभासि वाचानवरो ( ऽनवमो ) नरेष्विह । ९ ज. न केवलान् वि. व. सूपान्प्रथसने; सूपान्पृथिवीश । व.नृपेण सर्वतः। १० च. ज. बले च । ज. ङ.समीयिवानहं ११ ज. नसे तथाधिकुर्याः । १२ व. हि कामस्तव तत्तथा । व. कामो भविता पुरस्कृतः; त्वं च मया पुरस्कृतः । न. तत्र तवोचिता मता भजस्व; तु मोचिता पुरा भवाद्य तेषाम् ।

**वैशम्पायन उवाच—**

तथा स भीमो विहितो महानसे
विराटराज्ञो दयितोऽभवद्दृढम् ।
उवास राज्ये न च तं पृथग्जनो
बुबोध तत्रानुचराश्च केचन ॥ १३ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ९.

द्रौपद्याः सैरन्ध्रीवेषेण विराटनगरे प्रवेशः ॥ १ ॥ सुदेष्णया समाहूय स्ववेश्मनि तस्या निवासनम् ॥ २ ॥

**वैशम्पायन उवाच—**

ततः केशान्समुत्क्षिप्य वेल्लिताग्राननिन्दितान् ।
कृष्णान्सूक्ष्मान्मृदून्दीर्घान्समुद्ग्रथ्य शुचिस्मिता ॥१॥
जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना ॥
वासश्च परिधायैकं कृष्णा सुमलिनं महत् ॥ २ ॥
कृत्वा वेषं च सैरन्ध्र्यास्ततो व्यचरदार्तवत् ।
तां नराः परिधावन्तीं स्त्रियश्च समुपाद्रवन् ॥ ३ ॥
अपृच्छंश्चैव तां दृष्ट्वा का त्वं किं च चिकीर्षसि ।
सा तानुवाच राजेन्द्र सैरन्ध्र्यहमिहागता ॥ ४ ॥
कर्म चेच्छामि वै कर्तुं तस्य यो मां युयुक्षति ।
तस्या रूपेण वेषेण श्लक्ष्णया च तथा गिरा ॥
न श्रद्दधत तां दासीमन्नहेतोरुपस्थिताम् ॥ ५ ॥
विराटस्य तु कैकेयी भार्या परमसंमता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥ ६ ॥
सा समीक्ष्य तथारूपामनाथामेकवाससम् ।
समाहूयाब्रवीद्भद्रे का त्वं किं च चिकीर्षसि ॥ ७ ॥
सा तामुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छाम्यहं कर्तुं तस्य यो मां युयुक्षति ॥ ८ ॥

**सुदेष्णोवाच—**

नैवंरूपा भवन्त्येव यथा वदसि भामिनि ।
प्रेषयन्तीव वै दासीर्दासांश्च विविधान्बहून् ॥ ९ ॥

---

[ विष० ] नियुद्धशीलः बाहुयुद्धशाली । अनघप्रियमिति प्रियं बद्धमोक्षादिकमिति [ समेयिवान् ] भाविनि भूतवदुपचारः ॥ १० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ चतु० ] विहितः स्थापितः ॥ १३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ विरो० ] विहितः; विदितः (च) । विद सत्तायाम् । पृथगुवास । जनो बाह्यजनः ॥ १३ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ नील० ] वेल्लिताग्रान् आकुञ्चिताग्रान् समुत्क्षिप्य वेणीकृत्य ॥ १ ॥ जुगूहे गोपितवती ॥ २ ॥ युयुक्षति योजयितुमिच्छति । पुपूषतीति पाठे पोषयितुमिच्छति ॥ ५ ॥ नैवंरूपा त्वमसि किंतु दासान्दासीश्च प्रेषयन्तीव बहूनां स्वामिन्यसीत्यर्थः ॥ ९ ॥

[ अर्जु० ] वेल्लिताग्रान् कुटिलाग्रान् समुद्ग्रथ्य दक्षिणे पार्श्वे जुगूहे संवृतवती द्रौपदीति शेषः । 'वेल्लितं वक्रम्' इत्यमरः । कल्पिताग्रानिति व्याचक्षते केचित् । नराः पुमांसः ॥१—३॥ बुभूर्षति भर्तुमिच्छति । भृञ् धारणपोषणयोः । पुपुक्षतीति पाठः पोष्टुमिच्छति स एवार्थः पुष पुष्टौ धातोः । मुमुक्षतीत्यपपाठ एव ॥ ५ ॥ प्रासादात् प्रासादमारुह्य । ल्यब्लोपे पञ्चमी ॥६॥

[ चतु० ] वेल्लिताग्रान् कुटिलत्वेन अधिगतान्यग्राणि येषां मृदून् सुस्पर्शान् । अन्यत्र सुखदर्शनः (?) समुद्ग्रथ्य वेणीभावेन निबध्य ॥ १ ॥ पुपूषति पोषयितुमिच्छति ॥ ५ ॥ दासीः प्रेषयामि दास्यो मम सन्तीत्यर्थः । प्रेषयन्तीति पाठे एवंविधाः स्त्रियो दासीः प्रेषयन्त्येव नतु दास्यो भवन्तीत्यर्थः ॥ ९ ॥

[सर्व०] वेल्लिताग्रान् आकुञ्चिताग्रान् समुत्क्षिप्य वेणीकृत्य ॥१॥ जुगूहे गोपितवती ॥ २ ॥ युयुक्षति योजयितुमिच्छति पाठान्तरे पोषयितुमिच्छति ॥ ५ ॥ किंतु दासान्दासीश्च प्रेषयन्ती बहूनां स्वामिन्यसीत्यर्थः ॥ ९ ॥

[ विरो० ] वेल्लितं कुटिलम् । समुद्ग्रथ्य वेणीत्वेन निबध्य ॥१॥ मृदून् अशर्करान् देशान् व्यचरत् ॥ २—३ ॥ पुपुक्षति बुभूर्षति ( दे ) युयुक्षति ॥५॥ प्रासादात्प्रासादमारुह्य ॥६॥ प्रेषयन्ति २ प्रेषयामि च २ प्रेषयन्ती । अहं (शेषः) ॥९॥

[ विष० ] वेल्लिताग्रान् कुटिलाग्रान् अनिन्दितान् प्रश-

---

१३ व. भीमोधिकृतो महानसे । बि. विहितो महात्मना विराटराज्ञाधिकृते महानसे । उवास राजन्न तथा । ग. घ. न. उवास राजन्न च । इति अष्टमोऽध्यायः ॥ ८ ॥

२ ज. व. कृष्णं सुमलिनं । ३ ज. सैरन्ध्र्याः कृष्णा सा व्यचरत्तदा । न. द्वितीयार्धस्थाने—तां व्रजन्तीं तदा दृष्ट्वा राजपुत्राः कुतूहलात् । नरा नार्यश्च संप्रेक्ष्य परं विस्मयमागताः । ५ क. कर्तुं तरया या मां भरिष्यति । वैशम्पायन उवाच । घ. मां बुभूर्षति; बि. पुपुक्षति । व. रूपेण ताम्रेण । ६ च. ज. परमशोभना । ९ प्रेषयामीव; व. प्रेषयिष्यसि; ङं. प्रेषयन्ति तु ।

नोचगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता ।
रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ १० ॥
सुकेशी सुस्तनी श्यामा पीनश्रोणिपयोधरा ।
तेन तेनैव संपन्ना काश्मीरीव तुरङ्गमी ॥ ११ ॥
अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ।
कम्बुग्रीवा गूढशिरा पूर्णचन्द्रनिभानना ॥ १२ ॥

स्यलक्षणान् ॥१॥ जुगूहे संवृतवती गुहूसंवरणे ॥२॥ मां बुभूषेति केवलेन भोजनेन भर्तुमिच्छतीत्यर्थः ॥ ५ ॥

[ लक्षा० ] जुगूहे दक्षिणे पार्श्वे इत्यत्र वेणीकेशान् जुगूहे । कवरीभारान्तःप्रवेश्य आच्छादितवती ॥ २ ॥ नच श्रद्धतां दासीमित्यत्र श्रद्दधतामिति लोटि आत्मनेपदे बहुवचनम् । न श्रद्धधिर इत्यर्थः ॥ ५ ॥ कैकेयी केकयविषयजाता सुदेष्णा ॥ ६ ॥

[ नील० ] नोचौ न बहिर्निर्गतौ गूढावित्यर्थः । नोचौ गुल्फौ पादग्रन्थी यस्याः सा तथा । त्रिगम्भीरा त्रिषु शब्दबुद्धिनाभिषु गहना । षडुन्नता षट्सु नासिकाक्षिद्वयश्रोत्रनखस्तनकृकाटिकासु उत्ताना । पञ्चसु स्थानेषु पादपाणितलनेत्रान्तोष्ठजिव्हानखेषु एतान्येव संज्ञया पञ्चरक्तानि तेषु रक्ता । हंसवद् गद्गदं किंचिल्लुप्ताक्षरं मधुरं वा भाषते सा हंसगद्गदभाषिणी ॥ १० ॥ तेन तेन लक्षणेन मन्दगतित्वादिना ॥ ११ ॥ अराले वक्रे कृष्णे वा पक्ष्मणी ययोस्तादृशे नयने यस्याः सा । तथा कम्बुग्रीवा शङ्खवद्रेखात्रयाङ्कितग्रीवा । गूढशिरा गुप्तनाडिका ॥ १२ ॥

[ अर्जु० ] गूढगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता इत्यादिपूर्णचन्द्रनिभाननान्तनिचयार्थः—गूढौ गुल्फौ पादग्रन्थी यस्याः सा तथा । नोचगुल्फेति पाठे लीनग्रन्थिकेत्यर्थः । संहतोरुः परस्परालिङ्गितोरुः । यद्वा संहतौ मांसलावूरू यस्याः सा तथा । त्रिगम्भीरा त्रिषु स्वरसत्त्वनाभिषु अनुत्ताना । तथाच सामुद्रलक्षणम् ' नाभिः स्वरः सत्वमभिप्रशस्तं गम्भीरमेतत्त्रितयं नराणाम् ' । यद्वा वाग्बुद्धिनाभिभिर्गम्भीरा अनवगाह्यरूपा । षडुन्नता षट्सु स्थानेषु उन्नता । कृकाटिकाक्षिमुखकटिपृष्ठेषु स्तनद्वयांसद्वयपादद्वयेषु वा कक्षे नासिकाग्रं कृकाटिका(?) चेति षडुन्नतानीति सामुद्रिकम् ॥ स्तनयुगकक्षाद्वयनितम्बवक्षोभिरुन्नता वा । पञ्चसु रक्तेषु रक्ता 'हस्तपादौ तथा जिह्वा ओष्ठाधरं च एव च (?) इति । करतल-पादतल-जिह्वा-मुखाधरेषु रक्ता लोहितवर्णा । किंभूतेषु पञ्चसु रक्तेषु अनुरागजनकेषु मार्जनयुक्तेषु वा । 'रक्तः स्यात्कुङ्कुमे प्राचीनामलकेषु' इति विश्वः । यद्वा पञ्चसु नयनयोरसौष्ठकरचरणेषु रक्तेषु रागविषयेषु । हंसगद्गदभाषिणी हंसीव गद्गदभाषणशीला गद्गदं मधुरमीषद्गम्भीरं वा । तेन तेन पूर्वोक्तेन । काश्मीरी काश्मीरदेशोद्भवा तुरङ्गमी यथा । अश्वपरीक्षाशास्त्रे अश्वाना पद्मलक्षणं प्रतिपादितं तेन तेन प्रतिपादितपुच्छकर्णाद्यवयवोगामा(?)स्कन्दितादिना लक्षणेन संपन्ना तथा स्त्रीणां सामुद्रिकादौ प्रतिपादितं तेन तेनैव संपन्ना तथा यल्लक्षणं स्त्रीणां प्रतिपादितं तेन तेनैव संपन्ना । का लमिति द्रौपदीं सुदेष्णा पृच्छति । तदेव लक्षणं गूढगुल्फेत्यादिना स्पष्टीकृतम् । मरालपक्ष्मनयना मरालो हंसः तस्य पक्ष्मणीव पक्ष्मणी ययोर्नयनयोः मरालपक्ष्मणी नयने यस्याः । अरालपक्ष्मनयनेति पाठे अराले प्रस्तरे युक्ते (?) । यद्वा अरालं पक्ष्म नेत्ररोम तेनोपलक्षिते नयने यस्याः सा । अराले वक्रे पक्ष्मणी ययोर्नेत्रयोस्ते तथा अरालपक्ष्मणी नयने यस्या इति द्वितीयबहुव्रीहिः । ' पक्ष्माक्षिलोम्नि' इत्यमरः । कम्बुग्रीवा त्रिरेखाङ्कितगला गूढशिरा गुप्तनाडिका ॥ १०–१२ ॥

[ चतु० ] गूढौ मांसलौ गुल्फौ पादग्रन्थी यस्याः । संहतावविरलावूरू यस्याः । त्रिगम्भीरा गम्भीराः शस्ता नाभिमुखस्वरा यस्याः । षडुन्नता, 'नासिका वदनं वक्षो नला कक्षे कृकाटिका । उन्नतानि षडेतानि शस्तानि वरयोषिताम्' पञ्चसु रक्तेषु रागविषयेषु अङ्गेषु रक्ता ' नेत्रान्तहस्तचरणजिह्वौष्ठमिति पञ्चभिः । रक्तैर्भवन्ति रूपस्य महिषी चक्रवर्तिनः । वाक्यं गम्भीरमधुरं हंसगद्गदमुच्यते ॥ १० ॥ तेन तेन गुणसमुदायेन ॥ ११ ॥ अरालपक्ष्मनयना अरालं कुटिलम् अरालपक्ष्मणी नयने यस्याः सा । कम्बुग्रीवा त्रिरेख ग्रीवा यस्याः । गूढा मांसपिहिताः शिराः यस्याः सा ॥१२॥

[ सर्व० ] नोचौ न बहिर्निर्गतौ गुल्फौ पादग्रन्थी यस्याः शब्दबुद्धिनाभिषु गहना । नासिकाक्षिद्वयश्रोत्रनखस्तनकृकाटिकासूत्ताना । पादपाणितलनेत्रान्तोष्ठजिह्वानखेषु एतान्येव संज्ञया रक्तानि तेषु रक्ता । गद्गदं मधुरम् ॥ १० ॥ अराले वक्रे पक्ष्मणी ययोस्तादृशे नयने यस्याः । कम्बुः शङ्खः तद्वद्रेखात्रयाङ्कितग्रीवा । गूढशिरा गुप्तनाडिका ॥ १२ ॥

[ दुर्घ० ] गूढगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता । रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ द्रौपदीति शेषः । गूढौ गुल्फौ पादग्रन्थी यस्याः सा तथा संहतौ मांसलौ ऊरू यस्याः । त्रिभिर्वाग्बुद्धिनाभिभिर्गम्भीरा अथवा नाभ्युदरजघनैर्वा अनवगाह्यरूपा । षट्सु स्थानेषु स्तनपादां(हस्त)सयुग्मे उन्नता । पञ्चसु हस्तपादजिह्वानखाधरेषु रक्ता । हंसगद्गदभाषणशीला । गद्गदमीषद्गम्भीरम् ॥ १० ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

१० ग. घ. ज. ङ. गूढगुल्फा । ११ क. सुकेशी सुस्वरा; व. सुशीला सुस्वनी । व. लक्षणैश्च सुसंपन्ना ।

शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
शारदोत्पलसेविन्या रूपेण सदृशी श्रिया ॥ १३ ॥
का त्वं ब्रूहि यथा भद्रे नासि दासी कथंचन ।
यक्षी वा यदि वा देवी गन्धर्वी यदि वाऽप्सराः॥१४॥
देवकन्या भुजङ्गी वा नगरस्याथ देवता ।
विद्याधरी किन्नरी वा यदि वा रोहिणी स्वयम् ॥१५॥
अलम्बुषा मिश्रकेशी पुण्डरीकाऽथ मालिनी ।
इन्द्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः ।
देव्यो देवेषु विख्यातास्तासां त्वं कतमा शुभे ॥१६॥

द्रौपद्युवाच—

नास्मि देवी न गन्धर्वी नासुरी न च राक्षसी ।
सैरन्ध्री तु भुजिष्याऽस्मि सत्यमेतद्ब्रवीमि ते ॥१७॥
केशान् जानाम्यहं कर्तुं पिंषे साधुविलेपनम् ।
मल्लिकोत्पलपद्मानां चम्पकानां तथा शुभे ॥ १८ ॥
ग्रथयिष्ये विचित्राश्च स्रजः परमशोभनाः ।
आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ॥१९॥
कृष्णां च भार्यां पाण्डूनां कुरूणामेकसुन्दरीम् ।
तत्र तत्र चराम्येवं लभमाना सुभोजनम् ॥ २० ॥
वासांसि यावन्ति लभे तावत्तावद्रमे तथा ।
मालिनीत्येव मे नाम स्वयं देवी चकार सा ।
साऽहमद्यायता देवि सुदेष्णे त्वन्निवेशनम् ॥ २१ ॥

सुदेष्णोवाच—

मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते ।
न चेदिच्छति राजा त्वां गच्छेत्सर्वेण चेतसा ॥ २२ ॥
स्त्रियो राजकुले याश्च याश्चेमा मम वेश्मनि ।
प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहयेः ॥२३॥

---

[ विरो० ] गूढः; नोच्च (दे) बुद्धिवाक्यनाभिषु गम्भीरा। नासाग्रस्तनद्वयपादाङ्गुष्ठाग्रद्वयान्युन्नतानि । रक्तेषु रागयोग्येषु वदनकरतलपादतलद्वयेषु पञ्चसु । 'वाक्यं गम्भीरमधुरं हंसगद्गदमुच्यते ' ( च ) ॥ १० ॥ तेन प्रसिद्धगुणवृन्देन । काश्मीरी काश्मीरदेशजा ॥ ११ ॥ अरालं कुटिलम् । अरालः कृष्णवर्णः ॥ १२ ॥

[ विष० ] गूढगुल्फेत्यादि । गुप्तघुण्टिका परस्परमिलितोरुः । त्रिषु स्वरसत्त्वनाभिषु गम्भीरा । कक्षाक्षिवक्षोनखनासिकाकृकाटिकाश्चेति षडुन्नतानि । 'पाणिपादतले रक्ते नेत्रान्तौ च नखास्तथा । तालुर्जिह्वाधरोष्ठश्च सप्तरक्तोऽर्थभाग्भवेत् ॥ हंसी चैवोच्यते वीणा गद्गदास्तत्र तन्तवः । सप्तस्वरसमायोगाद्धंसगद्गदभाषिणी ॥ १० ॥ सुस्तनी सुमुखी श्यामा पीनश्रोणिपयोधरा इति यौवनलक्षणम् । श्यामा अप्रसूता षोडशवार्षिकी च । वर्णेन वा कृष्णा । तेन तेन अनुक्तेन सामुद्रिकोक्तेन लक्षणेन । कश्मीरदेशोद्भवा तुरङ्गी जात्या सुन्दरी भवति ॥ ११ ॥ मरालपक्ष्मेति मरालो हंसः तस्येव पक्ष्मणी नयने यस्याः सा अथवा अराले कुटिले पक्ष्मणी तद्विशिष्टे नयने यस्याः सा अरालपक्ष्मनयना 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते ' गूढशिरा गुप्तनाडीका । यद्वा । ह्रस्वग्रीवात्वात् गूढमस्तका अंसलग्नत्वात् ॥ १२ ॥

[ लक्षा० ] त्रिगम्भीरेत्यादेरयमर्थः त्रिगम्भीरा नाभौ श्रोत्रयोश्चेति त्रिषु गम्भीरा । षडुन्नता कपोलयोः श्रोण्या च अङ्गुल्यग्रेचेति षट्स्थानेषु उन्नता । पञ्चसु अधरे हस्ततलयोः पादतलयोश्चेति । रक्तेषु रागयोग्येषु स्थानेषु रक्ता॥१०॥ अरालपक्ष्मनयनेत्यत्र 'अरालं वृजिनं जिह्मम् ' इत्यभिधानात् अराले जिह्मे पक्ष्मणी नयने च यस्याः सा । गूढसिरेत्यत्र ' नाडी तु धमनिः सिरा ' इत्यमरः । गूढसिरा गूढनालीनाडा ॥ १२ ॥

[ नील० ] सैरन्ध्रीभुजिष्यापदे, प्राक् व्यर्थे व्याख्याते ॥ १७ ॥ कर्तुं संस्कर्तुम् ॥ १८ ॥ कृष्णां च भार्यां पाण्डूनामिति स्वात्मना स्वस्याराधनं संभवतीति नेयं मृषोक्तिः ॥ २० ॥ राजा त्वां चेन्न इच्छति तदा त्वां मूर्ध्नि वासये परंतु राजा त्वां सर्वेण चेतसा गच्छेत्स्पृहयेदेवेति शङ्के ॥२२॥ त्वं स्त्रीणामपि मोहकरी किमुत पुंसामित्याह—स्त्रिय इति॥२३॥

[ चतु० ] प्रसक्ता एकाग्राः ॥ २३ ॥

[ सर्व० ] भुजिष्या दासी ॥ १७ ॥

[ विरो० ] शारदोत्पलं हस्तद्वयं तेन सेविन्या ॥ १३ ॥ यथा यथार्थम् ॥१४॥ त्वष्टुर्देव्यः ॥१६॥ सैरन्ध्री शिल्पज्ञा भुजिष्या दासी॥१७॥तावन्ति प्राप्य ( शेषः) 'तावदवधारणे' रमे एव ॥ २१ ॥

[ विष० ] 'सैरन्ध्री परवेश्मस्था कर्मकृत्स्ववशा स्त्रियाम्' स्वैरं स्वयमात्मानं धरामीति स्वैरन्ध्री वर्णलोपत् सैरन्ध्री भक्तान् साधून् भोक्ष्यामि पालयामीति भुजिष्या साधुपालिका दुष्टनिग्रहकारिकेत्यर्थः । भुज पालनाभ्यवहारयोः ॥ १७ ॥ मल मल्ल धारणे मलामि सतीव्रतं धारयामीति

---

१३ शादुत्तरं व.—सर्वलक्षणसंयुक्ता भार्या त्वं पृथिवीपतेः । १६ घ. व. पुण्डरीका तिलोत्तमा । व. इन्द्राणी वरुणानी वा । तासां का त्वं वरानने । १७ क. न यक्षी न च किन्नरी । सैरन्ध्री नाम मे जातिर्वन्यमूलफलाशना । १९ व. ग्रन्थयिष्यामि चित्राश्च । २० व. नारीणामेकसुन्दरीम् । ज. चराम्येका लभमाना सुशोभनम्; बि. प्रीयमाणा शुभानना । २१ व. चकार ह । ज. बि. साऽहमभ्यागता । २२ व. धारयेयं वै । ज. नात्र विद्यते; व. नचेदिह तु राजानं त्वं गच्छेः सर्वचेतसा; चेदिहस्थां राजा त्वां गच्छेत्सर्वेण तेजसा । २३ व. पश्य याश्चेमा ।

वृक्षांश्चावस्थितान्पश्य य इमे मम वेश्मनि ।
तेऽपि त्वां सन्नमन्तीव पुमांसं कं न मोहयेः ॥२४॥
राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम् ।
विहाय मां वरारोहे गच्छेत्सर्वेण चेतसा ॥ २५ ॥
यं हि त्वमनवद्याङ्गि तरलायतलोचने ।
प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत् ॥ २६ ॥
यश्च त्वां सततं पश्येत्पुरुषश्चारुहासिनि ।
एवं सर्वानवद्याङ्गि स चानङ्गवशो भवेत् ॥ २७ ॥
अध्यारोहेद्यथा वृक्षान्वधायैवात्मनो नरः ।
राजवेश्मनि ते सुभ्रु गृहे तु स्यात्तथा मम ॥ २८ ॥
यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः ।
तथाविधमहं मन्ये वासं तव शुचिस्मिते ॥ २९ ॥

द्रौपद्युवाच—

नास्मि लभ्या विराटेन न चान्येन कदाचन ।
गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि ॥ ३० ॥
पुत्रा गन्धर्वराजस्य महासत्त्वस्य कस्यचित् ।
रक्षन्ति ते च मां नित्यं दुःखा चारा तथा ह्यहम् ॥३१॥
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीणेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ३२ ॥
यो हि मां पुरुषो गृध्येद्यथाऽन्याः प्राकृताः स्त्रियः ।
तामेव निवसेद्रात्रिं प्रविश्य च परां तनुम् ॥ ३३ ॥
न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।
दुःखशीला हि गन्धर्वास्ते च मे बलवत्प्रियाः ॥३४॥

---

मालिनी । यद्वा मलामि शत्रुवधार्थं एकवेणीधरत्वादिव्रतं धारयामीति ह प्रसिद्धम् । देवी सत्यभामा द्रौपदी वा ॥ २१ ॥ प्रसक्ता एकाग्रचेतसः त्वद्गतमनस्का इत्यर्थः । पुंभावं मनसा दधुः [ इति भावः ] ॥ २३ ॥

[ नील० ]वृक्षानिति वृक्षा अपि त्वां दृष्ट्वा स्तब्धाः सन्तीत्यर्थः ॥ २४ ॥ प्रसक्तं आसक्तियुक्तं यथा स्यात्तथा ॥ २६ ॥ एवमनेनैव स्त्रीवृक्षादिस्तब्धीभावचिह्नेन ॥ २७ ॥ कर्कटी षट्पादवान् जन्तुः ॥ २९ ॥ मह्यं मम गन्धर्वा इति देवतांशजत्वादमानुषत्वमात्रं विवक्षितम् । अतिमानुषकर्माण इत्यर्थः ॥३०॥ गन्धर्वतुल्यो राजा गन्धर्वराजः पाण्डुस्तस्येति गूढोऽभिसंधिः दुःखा दुःखवती आतिदुःखदा चाहं परपत्नीत्वात् आरा सिंहीव सिंही परैरनाक्रमणीया । 'आरः पुंसि तरोर्भेदे तथा कर्कटदंष्ट्रिणोः' इति मेदिनी । आरशब्दाददन्तत्वात्स्त्रियां टाप् । स्वयमेव तीक्ष्णव्रताऽस्मीति भावः । दुःखाचारेति क्लेशकालोऽयं कियान् ममास्तीति दर्शयति ॥ ३१ ॥ परां तनुं प्रविश्येत्यनेन परलोकं गच्छेदेवेत्युक्तम् ॥ ३३ ॥ तेऽपि दुःखशीलाः केनचिन्निमित्तेन दुःखं सहन्तीत्यर्थः । बलवन्तश्च ते प्रियाश्च ॥ ३४ ॥

[ अर्जु० ] रज्वा बद्धा च लेखाभ्रु रोहिते स्यात्तथा मम । लेखेव चित्रमिव भ्रुवौ यस्याः सा संबोधनम् । 'रेखा लेखा लिपौ चित्रे' इत्यभिधानम् । यद्वा लिख्यते विन्यस्यते इति लेखश्चित्रं लेखतुलिकया कृते इव भ्रुवौ यस्याः सा तथा लेखाभ्रूः ॥२८॥ गृध्येत् काङ्क्षेत् । प्राकृताः स्त्रियः ·····'अपरां तनुं परलोकनिर्दिष्टाम् ॥ ३३ ॥

[ चतु० ] लेखे चित्रनिर्मिते इव भ्रुवौ यस्याः । रोहितं

ऋजु शक्रधनुः ॥ २८ ॥ मह्यं मम ॥ ३० ॥ न च पादौ प्रधावयेत् तामिति शेषः ॥ ३२ ॥ गृध्येत् प्रार्थयेत् । परां पारलौकिकीम् ॥ ३३ ॥

[ सर्व० ] कर्कटी जलचरो जन्तुः 'खेंकडा' इति प्रसिद्धः ॥ २९ ॥ अपरां तनुं प्रविशेत् परलोकं गच्छेत् ॥ ३३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ विरो० ] लेखभ्रू; चित्रभ्रू; लेखाभ्रू [च] लेखा चित्रं रोहिते इन्द्रधनुस्तुल्ये ॥२८॥ प्रधावयेत् मया (शेषः) ॥३२॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[विष० ] अवस्थितान्निश्चलान् ॥२४॥ चकारात्सोऽपि कामवशगो भवेदिति वाक्यशेषः ॥ २७ ॥ कर्कटकी वेगसरी अश्वतरी कुरुचरी जलचरी ॥ २९ ॥ गन्धर्वाः गां पृथिवीं धरन्तीति गन्धर्वाः । यद्वा क्रुद्धाः सन्तः गां पृथिवीं धूर्वन्ति हिंसन्तीति गन्धर्वाः । धुर्व हिंसायाम् ॥ ३० ॥ गृध्येत् अभिलषति अपरां तनुं स्वकर्मविहिताम् । मृतो हि किल कार्मणं वपुर्धत्ते ॥ ३३ ॥ प्रशस्ताङ्गयोगादङ्गना । हे कल्याणिनि । बलवत्प्रियाः अतिशयेन प्रियाः ॥ ३४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ लक्षा० ] वृक्षांश्चोपस्थितानित्यत्र उप प्रासादसमीपस्थोपवने स्थितान् वृक्षान् ॥ २४ ॥ अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठति । इत्यत्र वधाय स्वशत्रौ वृक्षमारुह्य तिष्ठति सति तमेव वृक्षं यथाऽऽरोहेत् । राजवेश्मनि स्थिता ॥ २८ ॥ दासीभावेन स्वस्या अपि कदाचिदुच्छिष्टं दद्यात् स्वकरेण पादप्रक्षालनं वा कारयेदित्याशङ्क्याह—या मे न दद्यादुच्छिष्टमित्यादि । प्रियैः प्रियैः प्रियोक्तिभिः । रत्नेन वस्त्रैर्वा दत्तैरी

---

२४ व. वृक्षांश्चावर्जितान्पश्य । २५ व. ज. त्वां गच्छेत्सर्वचेतसा । २६ व. ज. नरमायतलोचने । २८ छ. सुभ्रु वासे तु । ज. वेश्मनि लेखभ्रू रोहितं स्या. २९ ज. कर्कटिका वि. कर्कटकी । तव सुमध्यमे । ३० व. चान्येन कथंचन । ३२ व. प्रीयेयुस्तेन । ३३ व. तामेव स ततो रात्रिं प्रविशेदपरां विनश्येदपरान्तरम् । ३४ व. तथाप्यहं ।

प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्यं शुचिस्मिते ।

**सुदेष्णोवाच—**

एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि। ३५

न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथंचन ।

**वैशम्पायन उवाच—**

एवं कृष्णा विराटस्य भार्यया परिसान्त्विता ॥ ३६॥

उवास नगरे तस्मिन्पतिधर्मवती सती ।

न चैनां वेद तत्रान्यस्तत्त्वेन जनमेजय ॥ ३७ ॥

इति श्रीमहाभारते विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः १०

सहदेवस्य गोपवेषेण विराटसभाप्रवेशः ॥ १ ॥ विराटेन सत्कृत्य तस्य गवामाधिपत्ये नियोजनम् ॥ २ ॥

**वैशम्पायन उवाच—**

सहदेवोऽपि गोपानां कृत्वा वेषमनुत्तमम् ।
भाषां चैषां समास्थाय विराटमुपयादथ ॥ १ ॥
गोष्ठमासाद्य तिष्ठन्तं भवनस्य समीपतः ।
राजाऽथ दृष्ट्वा पुरुषान् प्राहिणोज्जातविस्मयः ॥ २ ॥
तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभम् ।
समुपस्थाय वै राजा पप्रच्छ कुरुनन्दनम् ॥ ३ ॥
कस्य वा त्वं कुतो वा त्वं किं वा त्वं तु चिकीर्षसि
नहि मे दृष्टपूर्वस्त्वं तत्त्वं ब्रूहि नरर्षभ ॥ ४ ॥
संप्राप्य राजानममित्रतापनं
ततोऽब्रवीन्मेघमहौघनिःस्वनः ।
वैश्योऽस्मि नाम्नाऽहमरिष्टनेमि-
र्गोसंख्य आसं कुरुपुङ्गवानाम् ॥ ५ ॥
वस्तुं त्वयीच्छामि विशां वरिष्ठ
तान्राजसिंहान्नहि वेद्मि पार्थान् ।
न शक्यते जीवितुमप्यकर्मणा
न च त्वदन्यो मम रोचते नृपः ॥ ६ ॥

**विराट उवाच—**

त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि
समुद्रनेमीश्वररूपवानसि ।
आचक्ष्व मे तत्त्वममित्रकर्शन
न वैश्यकर्म त्वयि विद्यते क्षमम् ॥ ७ ॥

---

या मे उच्छिष्टं न दद्यादित्यादिपादत्रयस्य योजना । मम पतयो गन्धर्वाः । तस्यास्त्राणं कुर्युरिति पूर्वक्रियाध्याहारेण योजना ॥ ३२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ नील० ] हे नन्दिनि सुखदे ॥ ३५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि० प० नवमोऽध्यायः ॥ ९ ॥

[ अर्जु० ] नन्दिनि हे पुत्रि ॥ ३५ ॥ द्रौपदीप्रवेशः ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां वि० प० नवमोऽध्यायः ॥ ९ ॥

[ चतु० ] नन्दिनि इति सादरोपमन्त्रणम् ॥ ३५ ॥ पतिधर्मवती विद्यमानपतिका ॥ ३७ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ नील० ] उपयात् उपायात् ॥ १ ॥ वेशो रूपान्तरप्रकाशनं कर्म यस्य स वैश्यः । अरिष्टनेमिः अप्रतिहतचक्रोऽस्मीति गूढोऽभिसंधिः । कुरुपुङ्गवानां पाण्डवानां मध्ये गोसंख्यः गोइति इन्द्रियवाचित्वात्पञ्चानां संख्या यस्य स गोसंख्यः पञ्चसंख्यः पञ्चम इत्यर्थः ॥ ५ ॥ तान् राजसिंहान् वर्तमानकाले राजमूर्धस्थान् न वेद्मि नोपलभे । स्वर्गी ध्वस्त इतिवद्विशेषणादर्शनाद्विशिष्टादर्शनमुक्तमित्यदोषः ॥ ६ ॥

[ अर्जु० ] उपयात् समीपं गत इत्यर्थः ॥ १ ॥ मेघमहौघनिस्वनः इति । मेघानां घनानां महौघस्य महाजलप्रवाहस्य निस्वन इव निस्वनो यस्य स तथा 'ओघो व्यूहेऽम्भसां रये' इत्यमरः ॥ ५ ॥ विशां वरिष्ठ हे नरश्रेष्ठ ॥ ६ ॥ समुद्रनेमीश्वरत्वाच्चक्रवर्तिरूपवानसि सममुचितम् ॥ ७ ॥

[ चतु० ] प्राहिणोत् प्रेषितवान् ॥ २ ॥ समुपस्थाय समीपमानीय ॥ ३ ॥

[ विरो० ] तातोऽनुकम्प्ये जनके॥४॥ नास्ति रिष्टमशुभं नेमावन्ते यस्य ॥ ५ ॥ नहि वेद्मि शिरश्चालनाभिप्रायेण ॥६॥ सममुचितम् ॥ ७ ॥

[ विष० ] वैश्यो जात्या इति प्रकटम् । विक्षु लोकेषु

---

३६ व. त्वं न संशयः । इति नवमोऽध्यायः ॥ ९ ॥
१ ज. विराटं समुपाययौ । ३ व. तमागतम् । समीपस्थमतो राजा । ४ च.ज. किमु तात चिकीर्षसि । व. दृष्टपूर्वोऽसि सत्यं । ५ व. अमित्रकर्शनं;ज. अमित्रतापनः; घ. वि. अमित्रकर्शनस्तथा । वि. वैश्यो ह । ७ ग. घ. बि. व. समम्

कस्यासि राज्ञो विषयादिहागतः
किंचाऽपि शिल्पं तव विद्यते कृतम् ।
कथं त्वमस्मासु निवत्स्यसे सदा
वदस्व किं चापि तवेह वेतनम् ॥ ८ ॥

**सहदेव उवाच—**

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ।
तस्याष्टशतसाहस्रा गवां वर्गाः शतं शतम् ॥ ९ ॥
अपरे शतसाहस्रा द्विस्तावन्तस्तथाऽपरे ।
तेषां गोसंख्य आसं वै तन्तिपालेति मां विदुः॥१०॥
भूतं भव्यं भविष्यच्च यच्च संख्यागतं गवाम् ।
न मेऽस्त्यविदितं किंचित्समन्ताद्दशयोजनम् ॥११॥
गुणाः सुविदिता ह्यासन्मम तस्य महात्मनः ।
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥ १२ ॥
क्षिप्रं च गावो बहुला भवन्ति
न तासु रोगो भवतीह कश्चन ।
तैस्तैरुपायैर्विदितं ममैतदेतानि
शिल्पानि मयि स्थितानि ॥ १३ ॥
ऋषभांश्चापि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ १४ ॥

**विराट उवाच—**

शतं सहस्राणि समाहितानि
सवर्णवर्णस्यविमिश्रितान् गुणैः ।
पशून् सपालान् भवते ददाम्यहं
त्वदाश्रया मे पशवो भवन्त्विह ॥ १५ ॥

**वैशम्पायन उवाच—**

तथा स राज्ञो विदितो विशाम्पते-
रुवास तत्रैव सुखं नरोत्तमः ।
न चैनमन्येऽपि विदुः कथंचन
प्रादाच्च तस्मै भरणं यथेप्सितम् ॥ १६ ॥

इति श्रीमहाभारते विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

---

चरतीति वैश्यः लोकव्यवहारचरः । अरिष्टस्य अशुभस्य दैवादापततः नेमिर्निषेद्धा दैवज्ञत्वात् । इत्यन्तर्गतसत्यभाषित्वम् । गां वाचं भाविनीं सम्यगाचष्टे कथयतीति गोसंख्यः । ख्या प्रकथने अनागतवक्तेत्यर्थः त्रिकालदर्शीति प्रतिभाज्ञानम् ॥ ५ ॥ सांप्रतं तान् पार्थान् पृथासुतान् न वेद्मि । अपि तु अन्यान्कङ्कबल्लवादीन् जानामीत्यर्थः ॥ ६ ॥ समुद्रनेमीश्वररूपवानिति । चक्रवर्तिरूपत्वात् । समं युक्तं न ॥ ७ ॥

[नील०] गोसंख्यो गवां परीक्षकः तन्तिपालः वचनकरः ॥ १० ॥ संख्यागतं परीक्षायामवगतम् ॥ ११ ॥ समानो वर्णो येषां ते सवर्णाः वर्णस्य वर्णेन विमिश्रिताश्च पाटलादयः विभक्त्यलोप आर्षः सवर्णाश्च वर्णविमिश्रिताश्च तांस्तत्तद्गुणैरुपलक्षितान् ॥ १५ ॥ राज्ञो राज्यकर्तुः विशांपतेः प्रजापालकस्य भरणं वेतनम् ॥ १६ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि दशमोऽध्यायः ॥१०॥

[अर्जु०] गवां वर्गाः गवां भेदाः । 'वर्णः स्याद्गुणभेदयोः' इति विश्वः । वर्गा इति पाठे वर्गाः सजातीयसमुदायाः ॥ ९ ॥ गुणैः शुक्लकृष्णादिभिः ॥ १२ ॥ सपालान्पशुपालसहितान् ॥ १५ ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

[चतु०] अष्टशतसाहस्राः अष्टलक्षप्रमिताः वर्गाः समूहाः एकैको वर्गोऽष्टकप्रणीत इत्यर्थः ॥ ९ ॥ एवं सत्त्वमर्हतीति तस्य च मानं वर्गस्य प्रतिवर्गस्य शतं सहस्राणीत्यन्वयः। वर्गस्य वर्गस्येति पाठे यानि पशूनां शतं सहस्राणि तस्य वर्गस्य संबन्धितया समाहितानि तान्पशूनित्यन्वयः ॥ १५॥ भरणं वेतनम् ॥ १६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

[सर्व०] गोसंख्यः गवां परीक्षकः ॥ १० ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

[विरो०] वर्गाः; वर्णाः । 'वर्णः स्याद्गुणभेदयोः' ॥ ९ ॥ भव्यं वर्तमानम् । गतं ज्ञानम् ॥ ११ ॥ वर्गस्य २; वर्गस्य वर्णस्य । वर्णस्य २ विनिश्चितानि। विनिश्चितान्गुणैः । मेषा पशूनाम् । पशुनाम (?) वर्गस्य सहस्राणि तान् चापशून् वर्णस्य प्रत्येकं वर्णस्य वर्णविशिष्टस्य प्रत्येकवर्णेन ॥ १५ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

[विष०] सजातीयसमुदायो वर्गः । एकवर्णगोसमूहा

---

९ ग. घ. व. शतं शता । १० ज. व. अपरे दशसाहस्रा । ११ ग. यच्च गतागतं क्वचित् ;च.ज.संख्यागतं क्वचित्; बि.यच्च सज्ञागतं क्वचित् । घ. यत्प्रसङ्गादिहागतम् । १२ व. गुणैः सुविदितो ह्यासमहं । अ. छ. ज. मया दृष्टः । १३ व. न चैव रोगो । १४ वि. ह्यपि । १५ ज.वर्गस्य वर्गस्य विनिश्चितान्गुणैः व. वर्णस्य वर्णस्य विनिश्चितानि । १६ व. ततः स राज्ञा विहितो (ऽपिहितो) विशांपते (तौ) उवास तत्रैव सुखी नरेश्वरः । इति दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ११

क्लीबवेषेणार्जुनस्य विराटसभाप्रवेशः ॥ १ ॥ विराटेन तस्य प्रमदाभिरपुंस्त्वं परीक्ष्य कुमारीपुरे उत्सर्जनम् ॥ २ ॥

**वैशम्पायन उवाच—**

अथापरोऽदृश्यत रूपसंपदा
स्त्रीणामलङ्कारधरो बृहत्पुमान् ।
प्राकारवप्रे प्रतिमुच्य कुण्डले
दीर्घे च कम्बूपरि हाटके शुभे ॥ १ ॥
बाहू च दीर्घान्प्रविकीर्य मूर्धजान्
महाभुजो वारणतुल्यविक्रमः ।
गतेन भूमिं प्रतिकम्पयंस्तदा
विराटमासाद्य सभासमीपतः ॥ २ ॥
तं प्रेक्ष्य राजोपगतं सभातले
व्याजात्प्रतिच्छन्नमरिप्रमाथिनम् ।
विराजमानं परमेण वर्चसा
सुतं महेन्द्रस्य गजेन्द्रविक्रमम् ॥ ३ ॥
सर्वानपृच्छच्च समानुचारिणः
कुतोऽयमायाति पुरा न मे श्रुतः ।
न चैनमूचुर्विदितं तदा नराः
सविस्मयं वाक्यमिदं नृपोऽब्रवीत् ॥ ४ ॥
सत्त्वोपपन्नः पुरुषोऽमरोपमः
श्यामो युवा वारणयूथपोपमः ।
आमुच्य कम्बूपरि हाटके शुभे
विमुच्य वेणीमपिनह्य कुण्डले ॥ ५ ॥
स्रग्वी सुकेशः परिधाय चान्यथा
शुशोभ धन्वी कवची शरी यथा ।
आरुह्य यानं परिधावतां भवान्
सुतैः समो मे भव वा मया समः ॥ ६ ॥

---

दशसहस्राणि ॥ ९ ॥ प्रसङ्गादागतं प्रस्तावप्राप्तम् ॥ ११ ॥ मम गुणा वा तस्य युधिष्ठिरस्य सुविदिताः ॥ १२ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि
दशमोऽध्यायः ॥ १० ॥

[ नील० ] अदृश्यत दृष्टः रूपसंपदा उपलक्षितः प्राकारवप्रे स्थितैः तत्समीपे वा स्थितोऽदृश्यत दृष्टः । प्रतिमुच्य परिधाय दीर्घे कुण्डले ताटङ्के । कम्बूनां शङ्खानामुपरि कम्बूपरि हाटके कनकमये वलये च परिमुच्य ॥ १ ॥ दीर्घान् मूर्धजान्बाहू च प्रविकीर्य प्रसार्य ॥ २ ॥

[ अर्जु० ] प्राकारवप्रे प्रतिमुच्य कुण्डले इति । प्राकारवप्रे स्थितेति शेषः । प्राचीरतटे प्रतिमुच्य पश्चाद्विधाय । यद्वा प्राचीरतटप्राये कर्णे प्रतिमुच्य अथवा प्राकारसमीपे । प्रविमुच्येति पाठेऽपि स एवार्थः । कम्बुपरिहाटके शंखवलये । गतेन गमनेन भूमिं कम्पयन् दृश्यत इति शेषः । कुण्डले इत्यस्य विशेषणं वा प्राकारवप्रे इति । अयं चार्थः प्रकृष्टश्चासावाकारश्चेति प्राकारः तस्य वप्रे वप्रशब्देनात्र क्षेत्रमुच्यते वप्रे इव वप्रे आश्रयभूते इति विग्रहः । 'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्' इत्यमरः ॥ १ ॥ सत्रप्रतिच्छन्नं सत्रेण छद्मना प्रतिच्छन्नं तिरोहितं गजेन्द्रविक्रमं ऐरावतस्येव विक्रमो गमनं यस्य तम् ॥ ३ ॥ अपिनह्य परिधाय ॥ ५ ॥

[ चतु० ] प्राकारवप्रे प्राकारमूलबन्धाकारे । परिमुच्य पिनह्य । कम्बू शङ्खवलये । परिहारके अङ्गदे ॥ १ ॥ गतेन गमनेन ॥ २ ॥ सत्रप्रतिच्छन्नं छद्मतिरोहितम् ॥ ३ ॥ अन्यथा प्रकृतादन्येन प्रकारेण ॥ ६ ॥

[ सर्व० ] प्रतिमुच्य प्राकारवप्रतुल्ये [ कुण्डले ] अदृश्यत दृष्टः । प्रतिमुच्य परिधाय कम्बूनां शङ्खानामुपरि कम्बूपरि हाटके कनकमये वलये च ॥ १ ॥ प्रविकीर्य प्रसार्य ॥ २ ॥

[ विरो० ] प्रकृष्ट आकारो यस्य स प्राकारो वप्रोऽन्तर्भागो ययोस्ते । कम्बू शङ्खवलये । परि सर्वतो हाटकं ययोः सभासमीपतोऽदृश्यत ॥ १ ॥ २ ॥ सत्रं छद्म ॥ ३ ॥ परिधावतां मध्ये यानमारुह्य शोभस्व ॥ ६ ॥

[ विष० ] बृहत्पुमान् प्रधानपुरुषः प्राची(र?)तटे प्राकारवप्रे इति लुप्तोपमा प्राकार इति लुप्तोपमानम् । वप्रमिति विशालोपमानम् । कम्बू शङ्खवलये । परिहाटके परितः समन्तात् हाटकं सुवर्णं ययोस्ते मध्ये रत्नखचिते कर्णयोः कुण्डले हस्तयोः कङ्कणे, प्रसिद्धेरेवं सिद्धम् । अन्यत्र धारणस्यानुचितत्वात् ॥ १ ॥ विगतं किरणं विकिरणम् । विकीर्य ग्रथित्वा । प्रविकीर्येति पाठः । प्रगतं विकरणम् प्रविकीर्य ग्रथित्वा वेणीं कृत्वा ॥ २ ॥ सत्रप्रतिच्छन्नं छद्मतिरोहितम् ॥ ३ ॥

---

१ वि. व. ज. प्रविमुच्य । व. ज. कम्बू परिहारके । २ बि. ग. घ. च. वि. ण. बहूंश्च; व. कृष्णांश्च दीर्घां । व.ज.वि.वारणमत्तवि । बि. व.ज. गतेन भूमीमपि । ज. कम्पयंस्तथा । ३ वि. वस्तुं प्रति; व. सत्वप्रति; ग. घ. ज. सत्र ( छद्म ) प्रति । वं. सुरराजवर्चसा । व. नरेन्द्रस्य; सुरेन्द्रस्य । ज. गजेन्द्रगामिनं; घ. महेन्द्रविक्रमं; यथा ध.ागतं । ४ ग. नरानपृच्छच्च समीपचारिणः । घ. ज. व. समीपचारिणः । ज. सुविस्मिताः; व. सविस्मितो । ५ ग. विराट उवाच । बि. ग. घ. च. ज. पुरुषो मनोरमः । व. वारणमत्तविक्रमः । व. निर्मुच्यकम्बू; ज. विमुच्य कम्बू । व.परिहारके । ६ व. शिखी सुकेशः । व. चान्यद्दासोऽथ धन्वी । व. शरी रथी । भविता मया । पूर्वार्धादुत्तरं ज. प्रवेश्यतामेष समीपमाशु मे विभाति वीरश्च यथामरस्तथा । ज. सुतैः समः स्यादथवा मया ।

वृद्धो ह्यहं वै परिहारकामः
सर्वान्मत्स्यांस्तरसा पालयस्व ।
नैवंविधाः क्लीबरूपा भवन्ति
कथंचनेति प्रतिभाति मे मनः ॥ ७ ॥

अर्जुन उवाच—

गायामि नृत्याम्यथ वादयामि
भद्रोऽस्मि नृत्ये कुशलोऽस्मि गीते ।
त्वमुत्तरायै प्रदिशस्व मां स्वयं
भवामि देव्या नरदेव नर्तकः ॥ ८ ॥
इदं तु रूपं मम येन किं तव
प्रकीर्तयित्वा भृशशोकवर्द्धनम् ।
बृहन्नलां मां नरदेव विद्धि
सुतं सुतां वा पितृमातृवर्जिताम् ॥ ९ ॥

विराट उवाच—

ददामि ते हन्त वरं बृहन्नले
सुतां च मे नर्तय याश्च तादृशीः ।
इदं तु ते कर्म समं न मे मतं
समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ १० ॥

वैशम्पायन उवाच—

बृहन्नलां तामभिवीक्ष्य मत्स्यराट्
कलासु नृत्येषु तथैव वादिते ।
संमन्त्र्य राजा विविधैः स्वमन्त्रिभिः
परीक्ष्य चैनं प्रमदाभिराशु वै ॥ ११ ॥
अपुंस्त्वमप्यस्य निशम्य च स्थिरं
ततः कुमारीपुरमुत्ससर्ज तम् ।
स शिक्षयामास च गीतवादितं
सुतां विराटस्य धनञ्जयः प्रभुः ॥ १२ ॥
सखीश्च तस्याः परिचारिकास्तथा
प्रियश्च तासां स बभूव पाण्डवः ॥ १३ ॥
तथा स सत्रेण धनञ्जयो वसन्
प्रियाणि कुर्वन्सह ताभिरात्मवान् ।
तथा च तं तत्र न जज्ञिरे जना
बहिश्चरा वाऽप्यथ चान्तरेचराः ॥ १४ ॥

इति श्रीमहाभारते विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

[ लक्षा० ] प्रवालचित्रे प्रविमुच्य कुण्डले इत्यत्र कुण्डले प्रविमुच्य त्यक्त्वा । परिवर्तते वर्तमाने वर्तुले इत्यर्थः । कम्बू शङ्खकृतौ ताटङ्कौ धृत्वा ॥ १ ॥

[ नील० ] परिहारकामः अमात्येषु राज्यभारं न्यस्तुकामः ॥ ७ ॥ देव्या उत्तरायाः ॥ ८ ॥ येन हेतुना इदं रूपं मम जातं तत्कीर्तनं तव निकटे व्यर्थं शोककरं चेत्यर्थः ॥ ९ ॥ ते समं त्वदाकृत्या युक्तं न इति मे मम मतम् ॥ १० ॥ अपुंस्त्वं क्लीबत्वं निशम्य आलोच्य ॥ १२ ॥ सत्रेण कैतवेन । 'सत्रमाच्छादने यज्ञे सदादाने च कैतवे' इति विश्वः । न जज्ञिरे न ज्ञातवन्तः ॥ १४ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि॰ प॰ एकादशोऽध्यायः ॥ ११ ॥

[अर्जु०] परिहातुकामः राज्यादिविषयाणां योज्यम्॥७॥ परिधत्स्व पोषय ॥८॥ इदं नपुंसकरूपं येन केनचित् वक्त्रा प्रकीर्तितं मम शोकवर्धनमिति भावः । इदं तु रूपं समयेन किंतु तत्प्रकीर्तयिष्ये इति पाठे इदं तु रूपं किंनामेति प्रश्नानन्तरं प्रकीर्तयिष्ये समयेन कालेन स्वाभिप्रेतेनेत्यर्थः ॥ ९ ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ चतु० ] परिदत्स्व समर्पय ॥ ८ ॥ सुतं सुतां वेति नपुंसकत्वमेकैकमवधारणायोगात् ॥ ९ ॥ कलासु शिल्पेषु ॥ ११ ॥ निशम्य निरीक्ष्य ॥ १२ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतव्याख्यायां विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ सर्व० ] परिहारकामः अमात्येषु राज्यभारं न्यस्तुकामः ॥ ७ ॥ देवी उत्तरा ॥ ८ ॥ येन हेतुनेदं मम रूपं जातं तत्कीर्तनं तव निकटे व्यर्थम् ॥९॥ निशम्य आलोच्य ॥१२॥ सत्रेण कपटेन ॥ १४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ विरो० ] हातु; हार ( दे ) ॥ ७ ॥ धत्स्व ( दे ) दत्स्व ( च ) देव्या उत्तरायाः क्रीडन्त्याः ॥ ८ ॥ मम येन समयेन ( दे ) । सुतं सुतां वा आदौ ( शेषः ) ॥ ९ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ विष० ] इदं तु रूपं प्रत्यक्षं नपुंसकरूपम् । येन केनचित्कारणेन [ जातं तत् ] नहि कीर्तनीयं यतः कीर्तयित्वा मेऽतिशयेन शोकं वर्धयतीत्यर्थः । 'समयेन' इति पाठे

---

७ व. परिहर्तुकामः; ज. परिहातुकामः । ज. नचैतदेवं प्रति । व. भाति मे मतिः । ८ वि. गर्जामि । व. भद्रोऽस्मि गीते कुशलोऽस्मि नृत्ये । च.ज.डं.वि. परिदत्स्व मां । पुत्र्या नर । ९ व. येन केनचित् । व. विद्धि समागतां वै । ज. देवव-र्जितां । ११ व. तां समवेक्ष्य । १२ व. ज. निशाम्य । दे. छ. पुर उत्ससर्ज । १४ व. जज्ञिरे नराः । व. वान्तरेचराः । इति एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः १२

हयानीक्षमाणं नकुलं प्रेक्ष्य विराटेन नलमयं हयज्ञो भवितेति वितर्क्य तमाहूय शिल्पं च पृष्ट्वाश्वपालने तस्य नियोजनम् ।

**वैशम्पायन उवाच—**

अथापरोऽदृश्यत पाण्डवः प्रभु-
विराटराजं तरसा समेयिवान् ।
तमापतन्तं ददृशे पृथग्जनो
विमुक्तमभ्रादिव सूर्यमण्डलम् ॥ १ ॥
स वै हयानैक्षत तांस्ततस्ततः
समीक्षमाणं स ददर्श मत्स्यराट् ।
ततोऽब्रवीत्याननुगान्नरेश्वरः
कुतोऽयमायाति नरोऽमरोपमः ॥ २ ॥
अयं हयानीक्षति मामकान् दृढं
ध्रुवं हयज्ञो भविता विचक्षणः ।
प्रवेश्यतामेष समीपमाशु मे
विभाति वीरो हि यथाऽमरस्तथा ॥ ३ ॥
अभ्येत्य राजानममित्रहाऽब्रवी-
ज्जयोऽस्तु ते पार्थिव भद्रमस्तु वः ।
हयेषु युक्तो नृप संमतः सदा
तवाश्वसूतो निपुणो भवाम्यहम् ॥ ४ ॥

**विराट उवाच—**

ददामि यानानि धनं निवेशनं
ममाश्वसूतो भवितुं त्वमर्हसि ।
कुतोऽसि कस्यासि कथं त्वमागतः
प्रब्रूहि शिल्पं तव विद्यते च यत् ॥ ५ ॥

**नकुल उवाच—**

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ।
तेनाहमश्वेषु पुरा नियुक्तः शत्रुकर्शन ॥ ६ ॥
अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ७ ॥
न कातरं स्यान्मम जातु वाहनं
न मेऽस्ति दुष्टा वडवा कुतो हयाः ।
जनस्तु मामाह स चापि पाण्डवो
युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ ८ ॥

---

स्वाभिहितकालेन । बृहतः क्षत्रियान् नटयतीति बृहन्नडा (?टा) । सुभटानपि रणरङ्गे नटयति नर्तयति । कबन्धनर्तनत्वात् विनडयामीत्यर्थः । 'बृहन्दलां वा' पाठे बृहतः क्षत्रियान् दलयतीति बृहन्दला ॥ ९ ॥ अपुंस्त्वं पौरुषाभावं नपुंसकत्वं स्थिरं दृढं विज्ञाय कुमारीणामन्तःपुरे नियुक्तवान् । तत्र पुरुषस्याऽनधिकारित्वात् । पुरमिति सप्तम्यर्थे द्वितीया ॥ १२ ॥ आत्मा देहो वशे यस्य स आत्मवान् जितेन्द्रियः ॥ १४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ लक्षा० ] उत्तरायाः परिदत्स्व नर्तनमित्यत्र नर्तनं कारयितुं परिदत्स्व दिश ॥ ८ ॥ तादृशीत्यत्र नृत्तभेदे ईदृशो जनो न । इयमेव महानर्तकीति भावः ॥ १० ॥ वादितं वादित्रम् ॥ ११ ॥

इति श्रीमहाभारतव्याख्याने वादिराजकृते लक्षाभरणे विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ नील० ] प्रकृतिं जातिम् । विनयं शिक्षाम् । प्रतिपत्तिं दोषनिराकरणप्रकारम् । चिकित्सितं व्याध्युपशमोपायम् ॥ ७ ॥ कातरं भीरु,वडवा अश्वा । अत एव ग्रन्थिकमश्वशास्त्रज्ञम् ॥ ८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. द्वादशोऽध्यायः ॥ १२ ॥

[ अर्जु० ] पृथक्जनः प्राकृतजनः ॥ १ ॥ कातरं कुटिलम् ॥ ८ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ चतु० ] तान् समीक्षमाणमित्यन्वयः ॥ २ ॥ नियुक्तः अभियुक्तः ॥ ६ ॥ प्रकृतिं स्वभावम् । विनयं विनयनम् ॥ ७ ॥

[ सर्व० ] प्रकृतिं जातिं विनयं शिक्षां प्रतिपत्तिं दोषनिराकरणप्रकारम् ॥ ७ ॥ कातरं भीरु वडवा अश्वा ॥ ८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ विरो० ] प्रतिपत्तिं प्रतिकूलज्ञानम् ॥ ७ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ विष० ] प्रकृतिं वातपित्तश्लेष्मणां साम्यावस्थाम् । विनयं शिक्षाकरणम् । प्रतिपत्तिमदुष्टकरणम् । चिकित्सितं शिरामोक्षादि औषधप्रयोगादि व ॥ ७ ॥ कातरं भीरु कुटिलं वा । वाहनमश्वः । वडवा स्वभावतो मदवशात् स्त्रीस्वभावाच्च दुष्टा संभाव्यते । दामतः[1] दाम्ना सह ग्रन्थिकमिति । दामतः सार्वविभक्तिकस्तस् ॥ ८ ॥

---

१ ग. विराटराज्ञो विबुधोपमाकृतिः; व. विराटराज्ञस्तुरगान्समीक्षयन् ; बि. क्षते, ज. तुरगान्निरीक्षितुं; घ. व.–यन् । व. ज. ददृशुः पृथग्जनाः । प्रथमादनन्तरमधिकं व. सर्वोपपन्नः पुरुषोऽमरोपमः श्यामो युवा वारणमत्तविक्रमः । २ व. तानितस्ततः । तां स्तुरगानुगामिनः । व. नरो गतव्यथः । ३ ज. स्वयं हया° । ४ व. ज. सोऽभ्येत्य । ग. व. ज. °स्तु ते । व. तवाश्वसूतो । ५ ज. ददानि रत्नानि । व. कथं समागतः । बि. स ब्रूहि ज. शिल्पं त्वयि यच्च विद्यते । ६ व. पुरा सत्कृतः । ८ ज. ग्रन्थिकनाम नामतः ।

[1] नाम दामत इति पाठोऽस्य टीकाकृतः संमतः ।

**विराट उवाच—**

यदस्ति किंचिन्मम वाजिवाहनं
तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोजका-
स्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ ९ ॥
इदं तवेष्टं यदि वै सुरोपम
ब्रवीहि यत्ते प्रसमीक्षितं वसु ।
न तेऽनुरूपं हयकर्म विद्यते
प्रभासि राजेव हि संमतो मम ॥ १० ॥
युधिष्ठिरस्येव हि दर्शनेन मे
समं तवेदं प्रियमत्र दर्शनम् ।
कथं तु भृत्यैः स विनाकृतो वने
वसत्यनिन्द्यो रमते च पाण्डवः ॥ ११ ॥

**वैशम्पायन उवाच—**

तथा स गन्धर्ववरोपमो युवा
विराटराज्ञा मुदितेन पूजितः ।
न चैनमन्येऽपि विदुः कथंचन
प्रियाभिरामं विचरन्तमन्तरा ॥ १२ ॥
एवं हि मत्स्ये न्यवसन्त पाण्डवा
यथाप्रतिज्ञाभिरमोघदर्शनाः ।
अज्ञातचर्यां व्यचरन्समाहिताः
समुद्रनेमीपतयोऽतिदुःखिताः ॥ १३ ॥

इति श्रीमहाभारते विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

समाप्तं पाण्डवप्रवेशपर्व ।

## ( अथ समयपालनपर्व २ )

### त्रयोदशोऽध्यायः १३

सर्वैः स्वस्वकर्मणा द्रुपदं तोषयित्वा लब्धद्रव्यस्य विक्रयव्याजेन यथार्हं भ्रातृषु संविभजनम् ॥ १ ॥ भीमेन शरदि ब्रह्मोत्सवे सर्वमल्लोपमर्दिनो भृशमुत्सिक्तस्य जीमूतमल्लस्य बाहुयुद्धे पातनम् ॥ २ ॥

**जनमेजय उवाच—**

एवं ते मत्स्यनगरे प्रच्छन्नाः कुरुनन्दनाः ।
अत ऊर्ध्वं महावीर्याः किमकुर्वत वै द्विज ॥ १ ॥

**वैशम्पायन उवाच—**

एवं ते मत्स्यनगरे प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानं यदकुर्वत तच्छृणु ॥ २ ॥
तृणबिन्दुप्रसादाच्च धर्मस्य च महात्मनः ।
अज्ञातवासमेवं तु विराटनगरेऽवसन् ॥ ३ ॥
युधिष्ठिरः सभास्तारो मत्स्यानामभवत्प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशाम्पते ॥ ४ ॥

---

[ लक्षा० ] तुरगानवेक्षिता तुरगसादी ॥ १ ॥ रथानि यानानीत्यत्र ददानीति योग्यक्रियाध्याहारः ॥ ५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ चतु० ] प्रियाभिरामं च प्रियमभिरामं च अन्तरा अज्ञातवासमध्ये ॥ १२ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ विष० ] प्रियो दर्शो दर्शनं यस्याऽसौ प्रियदर्शः तस्य संबोधनम् । रमते विनोदं कुरुते ॥ ११ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. द्वादशोऽध्यायः ॥१२॥

[ नील० ] एवमिति ॥ १ ॥

[ अर्जु० ] एवं मत्स्यस्य नगरे इत्यादेः विराटनृपतेस्तदे... स्सन्तस्य षण्णामपि स्वे स्वे कर्मणि राजप्रसादप्राप्तिपर्यन्तः प्रकर्षविशेषस्तात्पर्यार्थः ॥ १ ॥ तृणबिन्दुः राजर्षिः तद्गु... ग्रहाद्धर्मस्य वरदानाच्च । एकमेकं वर्षं, वर्षसाध्यत्वात् ॥ ३ ॥

[ विरो० ] एवम् २ एकम् ( दे ) ॥ ३ ॥

[ विष० ] तृणबिन्दुः श्वेतपर्वतनिवासी राजर्षिः । वर्ष... सहस्रे गते तृणाग्रबिन्दुना व्रतपारणं चक्रे अतस्तृणबि... न्दुनामा । यस्यान्वये विशालो राजा यो विशालां पुरीं नि... र्ममे । अत्रानुवंशश्लोको भवति । 'तृणबिन्दोः प्रसादेन स...

---

१० वि. सुरप्रभ; व. यदि वाऽमरोपम । क. °क्षितं वरं । °कर्म दृश्यते । ११ वि.व. प्रियदर्श दर्शनं । व. कथं तु° १२ व. °न्ये° विविदुः । °रन्तमन्तरात् । वि. एवंस्म । इति द्वादशोऽध्यायः ॥ १२ ॥

१ वि. व. एवं मत्स्यस्य नगरे वसन्तस्तत्र संवृताः । च. ज. वसन्तस्तत्र पाण्डवाः । व. नरव्याघ्राः किमकुर्वत पाण्डवाः । २ व. एवं ते न्यवसंस्तत्र; ज. एवं ते मत्स्यनगरे प्रच्छन्नाः कुरुपाण्डवाः । ३ ज. तृणबिन्दोः प्रसादेन । ... अज्ञातचर्यामेकत्र; अज्ञातं वर्षमेकं च; वि. वासमेकं तु । ४ क. ग. घ. व. ... सभ्यानाम° । वि. सपुत्राणां ।

१ वा. रामा. बालकाण्डे ४७ सर्गे १८ श्लोकः । तत्र इक्ष्वाकोस्तु प्रसादे... ति पाठः

स ह्यक्षहृदयज्ञस्तान् क्रीडयामास पाण्डवः ।
अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान् ॥ ५ ॥
अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथार्हं संप्रयच्छति ॥ ६ ॥
भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन विक्रीणीते युधिष्ठिरे ॥ ७ ॥
वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः ।
विक्रीणानश्च सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥८॥
सहदेवोऽपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ ९ ॥
नकुलोऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन्नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ १० ॥
कृष्णा तु सर्वान् भर्तॄंस्तान्निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ ११ ॥
एवं संपादयन्तस्ते तदाऽन्योन्यं महारथाः ।
विराटनगरे चेरुः पुनर्गर्भधृता इव ॥ १२ ॥
साशङ्का धार्तराष्ट्रस्य भयात्पाण्डुसुतास्तदा ।
प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिप ॥१३॥
अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः ।
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥१४॥
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः ।
समाजे ब्रह्मणो राजन् यथा पशुपतेरिव ॥ १५ ॥
महाकाया महावीर्याः कालखञ्जा इवासुराः ।
वीर्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः ॥१६॥
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।
असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ ॥ १७ ॥

---

वैशालिका नृपाः । दीर्घायुषो महात्मानो वीर्यवन्तोऽतिधार्मिकाः ' ॥ ३ ॥

[ नील० ] अतिसृष्टानि प्रसाददत्तानि ॥ ७ ॥ संपादयन्तोऽन्योन्यमाराधयन्तः गर्भधृता इव प्रच्छन्नत्वेन सेवाश्रमेण च दुःखिता इत्यर्थः ॥ १२ ॥ ब्रह्मण उत्सवः शरदि नवधान्योत्पत्तौ सर्वैः क्रियते स च देशविशेषे प्रसिद्धः ॥ १४ ॥ यथा ब्रह्मणः समाजे ब्रह्मलोके कैलासे वा पशुपतेः समाजे इव मत्स्येषु समापेतुरिति संबन्धः ॥ १५ ॥ स्ववदाताः अत्यन्तनिर्मलाः मनस्विनः प्रीतमनसः लब्धलक्षाः प्राप्तविजयाः ॥ १७ ॥

[ अर्जु० ] स चाक्षहृदयज्ञ इत्यादि । स पाण्डवस्तान्द्विजान् पक्षिण इव अक्षवत्यां द्यूतशालायां द्यूतैराक्रीडयामास इति संबन्धः 'द्यूते स्त्रियामक्षवती इत्यमरः' ॥ ५ ॥ अतिसृष्टानि दत्तानि ॥ ७ ॥ परिजीर्णानि परिधानमात्रजीर्णानि ॥ ८ ॥ कर्मणि चिकित्सादिरूपे ॥ १० ॥ तपस्विनी दुःखिता पुनरिवाजाता जन्मान्तरगतेव दर्शनसंभावनाभावात् (?)॥११॥ समाजे उत्सवगोष्ठ्यां ॥ १५ ॥ वीर्योन्मत्ता बलोदग्रा वीर्यमान्तरं बलं तेन उन्मत्ता अनताः; बलं शारीरं तेन उदग्रा उत्कटाः ॥ १६ ॥ स्ववदाताः सुष्ठु शुद्धाः लब्धलक्षाः यो यमुद्दिश्य प्रवर्तते तत्तस्य लक्ष्यम् ॥ १७ ॥

[ चतु० ] अक्षवत्यां द्यूतसभायाम् । द्विजान् पक्षिणः॥५॥ अतिसृष्टानि राज्ञा दत्तानि ॥७॥ अविज्ञाता गर्भस्थेव॥११॥

संपादयन्तः स्वविभवैर्योजयन्तः ॥ १२ ॥ वीर्योन्नताः तल्लब्ध्या सगर्वाः । बलोदग्राः बलाधिकाः ॥ १६ ॥ स्ववदाताः सुशुद्धाः । लब्धलक्षाः कृतकर्माणः । रङ्गे रङ्गाङ्गणे ॥ १७ ॥

[ सर्व० ] संपादयन्तः आराधयन्तः गर्भधृता इव दुःखिन इत्यर्थः ॥ १२ ॥ ब्रह्मण उत्सवः शरदि कर्तव्यो देशविशेषे प्रसिद्धः ॥ १४ ॥ स्ववदाताः अत्यन्तनिर्मलाः लब्धलक्षाः प्राप्तविजयाः ॥ १७ ॥

[ विरो० ] मत्स्येन; मूल्येन ( च ) ॥ ७ ॥ परिजीर्णानि परिवर्जने । नूतनानीत्यर्थः ॥ ८ ॥ अजातेव; इवाजाता ( दे ) अविज्ञाता जन्मान्तरगतेव २ ॥ ११॥ ब्रह्मणः शिवस्य ॥ १४ ॥ यथा ब्रह्मणः समाजे ब्रह्मलोके पशुपतेस्तथात्रापि पशुपतेः समाज इत्यर्थः ॥ १५ ॥ वीर्योन्मत्ताः; वीर्योन्नद्धा ( च ) वीर्योन्नताः ( दे ) ॥ १६ ॥

[ विष० ] द्विजान् पक्षिणः ॥ ५ ॥ अतिसृष्टानि प्रसाददत्तानि ॥ ७ ॥ परिजीर्णानि नूतनानि ॥ ८ ॥ कर्मणि चिकित्सादिरूपे ॥ १० ॥ तपस्विनी दीना । निरीक्षन्ती साध्वीधर्मेण न कटाक्षादिना । अजाता (?) पुनर्जन्मान्तरगता संभाषणाद्यभावात् । यद्वा अज्ञाता ॥ ११ ॥ स्ववदाताः सुष्ठु अतिशयेन अवदाता निर्मलवीर्या बीजयोनिकर्मशुद्धाः शुश्रूषाशुद्धा वा । यो यदुद्दिश्य प्रवर्तते तत्तस्य लक्ष्म् ॥ १७ ॥

[ लक्षा० ] अतिसृष्टानि मत्स्येनेत्यत्र अतिसृष्टानि द-

---

५ व. °हृदयं ज्ञात्वा; ज. विराटनगरे राजन्; वि. स ह्यक्षकुशलस्तान्वै; । ६ वि. अथाज्ञातं । ज. °र्हं स्म प्रयच्छति; ग. यथालब्धं । ७ व. विक्रीणाति; क. विक्रीणान्निव भ्रातृषु । ८ व. वासांसि च महार्हाणि । बि. °पुराञ्जयः । भ्रातृभ्यः पुरुषव्याघ्रो यथेष्टं संप्र° । ११ ज. भ्रातॄंस्तान्नि° । ग. °न्ती यशस्विनी । ज. पुनरिवाज्ञा(जा)ता । १२ ज. तथाऽन्योन्यं महीपते । व. गर्भस्थिता; ज. गर्भगता । १३ घ. व. प्रच्छन्ना धा° । व. पाण्डुसुतास्तथा; पाण्डवसत्तमाः । ज. व. °णाः सदा—नरर्षभाः । ग. व. अत्राध्यायसमाप्तिः । १४ व. °णां समागमः; ज. स संमतः । १५ व. समाजग्मुर्दि° । व. राजन्महाबलाः । व. समाजे देवदेवस्य । व. पशुपतेरिह; ज. वि. पशुपतेरपि । १६ व. वीर्यवन्तो व°; ज. वीर्योन्नता ब°; बि. वीर्योन्नद्धाः । १७ बि. तेऽवदाता ।

तेषामेको महानासीत्सर्वमल्लानथाह्वयत् ।
आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन ॥ १८ ॥
यदा सर्वे विमनसस्ते मल्ला हतचेतसः ।
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ १९ ॥
नोद्यमानस्तदा भीमो दुःखेनैवाकरोन्मतिम् ।
नहि शक्नोति विवृते प्रत्याख्यातुं नराधिपम् ॥ २० ॥
ततः स पुरुषव्याघ्रः शार्दूलशिथिलश्चरन् ।
प्रविवेश महारङ्गं विराटमभिपूजयन् ॥ २१ ॥
बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनम् ।
ततस्तु वृत्रसंकाशं भीमो मल्लं समाह्वयत् ॥ २२ ॥
जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमम् ।

त्तानि विक्रीणन्निव विक्रयं कुर्वन्निव तूष्णींदाने अन्योन्यसंबन्धं ज्ञास्यन्तीति भीत्या विक्रयव्याजेन प्रयच्छतीति भावः ॥८॥ असकृल्लब्धलज्जा इत्यत्र अन्योन्यकलहे पराभवेन लब्धलज्जाः ॥ १७ ॥

[नील०] सूदेन भीमेन ॥ १९ ॥ दुःखैनेव पारतन्त्र्यात् प्राकट्यभयाद्वा दुःखं न तु भङ्गभयात् । विवृते प्रकाशे ॥ २० ॥ कक्षां परिकरम् । कच्छामिति पाठेऽपि स एवार्थः । यद्वा कक्षां रज्जुं रज्वा पाटनभयान्मल्लैरङ्गुल्यो बध्यन्त इति प्रसिद्धेरङ्गुलीर्बद्धेत्यर्थः ॥ २२ ॥ कृतं कचिद्देशे निपीडनम् । प्रतिकृतं तस्य मोचनम् । सुसंकटैः मुष्टिग्रहणेन कृशीकृतैः । सकण्टकैरिति पाठे सकवचैः सकिणैर्वा 'कण्टको वाहुचरणकवचे कठिने किणे' इति विश्वः । संनिपातोऽङ्गसंघट्टनम् । अवधूतं तेनैव दूरीकरणम् । प्रमाथादय उक्ता मल्लशास्त्रे–'निपात्य पेषणं भूमौ प्रमाथ इति कथ्यते । यत्तूत्थायाङ्गमथनं तदुन्मथनमुच्यते' ॥ २७ ॥

[अर्जु०] रङ्गे युद्धस्थाने आवल्गमानमास्फोटनपूर्वमुपसर्पन्तम् ॥१८॥ दुःखेन स्वप्रकटनराजाज्ञालङ्घनद्वन्द्वजेन । विवृतं लोकसमक्षम् ॥ २० ॥ शार्दूलशिथिलः सिंह इवासारज्ञः । 'स्यात्सिंहेऽपि च शार्दूलः' इति दर्शनात् ॥ २१ ॥ कक्षः कच्छसंपातः ॥ २२ ॥ संकटैः संकटः करघर्षणजः किणः कठा इति प्रसिद्धः । कृतप्रतिकृतैः परप्रयुक्ते प्रतिकृतैश्चित्रैर्विचित्रैर्बन्धैरिति शेषः । सन्निपातादयो मल्लाना शिक्षाविशेषाः सन्निपातो वृध्वाङ्गुलिकारा (?) मुष्टिः ॥ २७ ॥

१८ ग. प्रथमार्धस्थाने—युयुत्समानाः संरब्धा मल्ला अन्योन्यमाह्वयन् । व. °र्वमल्लान्य आह्वयत् । ज. द्वितीयार्धस्थाने—प्रावल्गमानं तं रङ्गे नोपतिष्ठन्ति केचन । व. नोपातिष्ठत क° । अस्मादुत्तरमधिकं ज.—कीचकोऽपि यदा मल्लं न विशेषयते बलात् । तदा सूदेन तं राजा योधयामास भारत । १९ व. ज. तदा स° । ज. तं राजा । ज. °मास भारत; व. °मास पार्थिवः । २० व. करोन्मनः । व. नहि शक्तः स दाक्षिण्यात्प्र° । बि. विवृतं । व. पुस्तकमूलपाठे नोद्यमान इत्यारभ्य महागजावित्यन्तानां सार्धसप्तश्लोकानां स्थाने 'उभा-

तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ ॥ २३ ॥
मत्ताविव महाकायौ वारणौ षष्टिहायनौ ।
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ॥ २४ ॥
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ।
आसीत्सुभीमः संपातो वज्रपर्वतयोरिव ॥ २५ ॥
उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ २६ ॥
उभौ परमसंहृष्टौ मत्ताविव महागजौ ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसंकटैः ।
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ॥ २७ ॥

[चतु०] एको जीमूतः ॥ १८ ॥ दुःखेन अनिच्छया विवृतं व्यक्तम् ॥ २० ॥ शार्दूलशिथिलः शार्दूलवत् सावज्ञः ॥ २१ ॥ कक्षाम् उद्धाहाशक्याम् ॥ २२ ॥ संपातः संघर्षः ॥ २५ ॥ चित्रैर्नानाविधैः । सकण्टकैः 'करग्रहणसंघर्षात् प्रकोष्ठे वाहुयोधिनाम् । किणः प्रादुर्भवति यः कण्टकं तं प्रचक्षते ॥ २७ ॥

[सर्व०] सूदेन भीमेन ॥१९॥ विवृते प्रकाशे ॥२०॥ कक्षां परिकरम् ॥ २२ ॥ कृतं कचिद्देशे निपीडनम् । प्रतिकृतं तस्य मोचनम् । सुसंकटैः मुष्टिग्रहणेन कृशीकृतैः । पाठान्तरे सकिणैः । सन्निपातोऽङ्गसंघट्टनम् । अवधूतं तेनैव दूरीकरणम् । प्रमाथः निपात्य भूमौ पेषणम् । उन्मथनमुत्थायाङ्गमथनम् ॥ २७ ॥

[विरा०] शार्दूलशिथिलः तद्वत् सावज्ञः ॥ २१ ॥ कक्षां परिधानवस्त्रम् ॥ २२ ॥ परमसंहृष्टौ हृष्टरोमाणौ । परमाऽपि संहृष्टा याभ्याम् ॥ २५ ॥ 'करग्रहणसंघर्षात्प्रकोष्ठे बाहुयोधिनाम् । किणः प्रादुर्भवति यः कङ्कटं तं प्रचक्षते' ॥ २७ ॥

[विष०] आवल्गमानम् आस्फोटनपूर्वमुपसर्पन्तं (रङ्गे) युद्धस्थाने ॥ १८ ॥ राजा[ज्ञालङ्घ?]नं [द्वन्द्वजनात्?] विवृतं लोकसमक्षं निराकर्तुं न शक्नोतीत्यर्थः । स्वप्रकटनभयाद्राजाज्ञाया अनुल्लङ्घनीयत्वाद्वा दुःखं नत्वतिबलाद्वन्द्वे स्वपराजयभयात् । मनः मतिं चाकरोत् ॥ २० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

भ्यामेव घर्षोऽभूद्यथा शैलमयस्तथा' इत्यर्धमेव दृश्यते । २१ व. तथाशु पुरं दे. °मतिपूजयन् । ग. विराटेनाभिपूजितः । २२ बि. बबन्ध रक्षां । व. ज. ततः वृ° । २३ व. ज. विख्यातविक्रमम् । बि. व. ज. तीव्रपराक्रमौ । २४ वि. वारणौ सन्निपेततुः । व. ज. बाहुयुद्धे । २५ बि. व. आसीत्स भी° । २६ °न्यमन्तरं प्रेक्ष्य । ज. परस्परवधैषिणौ २७ ग. व. प्रथमार्धादग्रे—उभाभ्यामवघर्षोऽभूद्यथा शैलमयस्तथा । ग. घ. व. बाहुभिः परिघोपमैः । बि. सकण्टकैः व. सन्निपातावपातैश्च ।

क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिःस्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥ २८ ॥
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः ॥ २९ ॥
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ।

[ लक्षा० ] नहि शक्नोमि विवृतमित्यत्र विशेषेण अभ्यासादिना वृतं विवृतम् ॥ २० ॥ शार्दूलशिथिलं चरन्नित्यत्र शार्दूलवत् शिथिलं यथा भवति तथा चरन्। शनैः शनैश्चरन्नित्यर्थः ॥ २१ ॥ बद्धकक्ष्योऽथ कौन्तेय इत्यत्र 'दूष्या कक्ष्या वरत्रा स्यात्' इत्यभिधानात् बद्धकक्ष्यः बद्धोदरबन्धनः ॥ २२ ॥

[नील०] 'क्षेपणं कथ्यते यत्तु स्थानात्प्रच्यावनं हठात् । उभयोर्भुजयोर्मुष्टिरुरोमध्ये निपात्यते । मुष्टिरित्युच्यते तज्ज्ञैर्मल्लविद्याविशारदैः । अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः । क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिःस्वनः ॥' तलैर्वज्रनिपातैर्वज्रवद्दृढपातैश्चपेटैः । अङ्गुल्यः प्रसृता यास्तु ताः प्रसृष्टा उदीरिताः ॥ २८ ॥ 'ऋज्वी दृढा रुषा क्षिप्ता शलाका साङ्गुली स्मृता' । तस्या नखपातैः । पादोद्धूतैः पादप्रसारणेनाक्षेपैः । जानुभिः शिरोभिश्च कृतैरवघट्टनैरास्फालनैः । अश्मनिर्घोषैरित्युभयविशेषणम् ॥ २९ ॥ अशस्त्रं निन्द्यम् । यथोक्तं तत्रैव—'बाहुयुद्धं हि मल्लानामशस्त्रमृषिभिः स्मृतम् । मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते' इति । बलप्राणेन बलेन शारीरबलेन प्राणेन मानसबलेन च ॥ ३० ॥ सोत्कुष्टनिनदः (दोत्थितः) हीहीशब्दोच्चारणेन यज्जितस्य समुत्थापनं तत्सहितः ॥ ३१ ॥ 'आकृष्य क्रोडीकरणं प्रकर्षणमुदाहृतम् । आकर्षणं लीलयैव संमुखीकरणं स्मृतम् ॥ पुरः पश्चात्पार्श्वयोश्चाभ्याकर्षो भ्रमणं तथा । पश्चात्प्रपातनं वेगाद्विकर्षणमुदाहृतम् '॥ ३२ ॥

[ अर्जु० ] अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः । क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिस्वनः ॥ तर्जन्यङ्गुष्ठमध्येन प्रसारितकरो हि यः । संप्रहारस्तलाख्यः स संग्रहो वज्रमिष्यते ॥ अर्धचन्द्रस्तलं, मुष्टिर्वज्रमित्यर्थः । प्रसृताङ्गुलिहस्तेन प्रसृष्टिः प्रसृताः स्मृताः ॥ २८ ॥ द्विगुणीकृतबाहुर्यस्तदीयार्थी (?र्थं) यथाबलम् । प्रहरेत्सा शलाका स्यात्पदोद्धूतं पदाहतम् । जानुभिश्चाश्मनिर्घोषैः पाषाणसदृशघोषैः जानुभिः शिरोभिः करणैर्यानि घट्टनानि ॥ २९ ॥

बलप्राणेन शूराणां समाजोत्सवसन्निधौ ॥ ३० ॥
अरज्यत जनः सर्वः सोत्कुष्टनिनदोत्थितः ।
वलिनोः संयुगे राजन् वृत्रवासवयोरिव ॥ ३१ ॥
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ।
आकर्षतुरथान्योन्यं जानुभिश्चापि जघ्नतुः ॥ ३२ ॥

बलप्राणेन बलोत्कर्षेण सोत्कुष्टनिनदोत्थितः उत्क्रोशननिनदोत्थानसहितः ॥ ३० ॥ प्रकर्षणं बाहुसंमुखानयनं प्रकृष्टं कर्षणं, तदेवाकर्षणमीषत्संमुखानयनम्, अभ्याकर्षः समन्ततः कर्षणं, पश्चान्नयनम् तदेव विपरीतं विकर्षणमुच्यते उपसर्गभेदादर्थतो(र्थभेदं) ज्ञापयति ॥ ३२ ॥

[ चतु० ] कराभ्यां यन्निरसनं पश्चात्तत्क्षेपणं मतम् ॥ मुष्टिरित्युच्यते प्राणैः संहताकुञ्चिताङ्गुलिः ॥ अवाङ्मुखं भ्रामयित्वा पीडयित्वा तथैव च । क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिस्वनः । तर्जन्यङ्गुष्ठमध्येन प्रसारितकरो हि यः ॥ संप्रहारस्तलाख्यस्तु सङ्ग्राहो वज्रमिष्यते । अङ्गुल्यः प्रसृता यास्तु ताः प्रसृष्टा उदीरिताः ॥ द्विगुणीकृतबाहुर्यस्तदीयास्ता (?समीपस्थो) यथाबलम् । प्रहरेत्सा शलाका स्यात् पादोद्धूतं पदाहतम् ॥ नखाघातैर्नखाघातः पदोद्धूतं पदाहतिः ।' अश्मनिर्घोषैः शिलासंघट्टनसमस्वनैः ॥ २८–२९॥ टीकान्तरम्—कङ्कटः करग्रहणजः किणः। सन्निपातः परस्परसंघातः।अवधूतं बद्धबाहुमुष्टिप्रहारः। क्षेपणैः स्थानाच्च्यावनैः । ऊरुभ्यां घातः संपातः सम्यङ्निपातः । अवधूतं पादेनावप्रेरणम् । प्रमाथो भूमौ पतितस्य निष्पेषणम् ॥ क्षेपणैः वेगेन प्रहरणैः 'अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः । क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिस्वनः ' ॥ शलाका हस्तपादयोः शरीकरणम् ॥ २७–२९ ॥ बलप्राणेन बलवदतिशयेन ॥ ३० ॥ उत्कुष्टमुच्चैः स्वनितम् ॥ ३१ ॥ 'प्रदाय दक्षिणाकृष्टिः प्रकर्षणमिहोच्यते । भवेदाकर्षणं नाम संमुखानयनं बलात् ॥ भ्रामणं मण्डलाकारमभ्याकर्षणमुच्यते । आकृष्य पश्चान्नयनं यत्तदाहुर्विकर्षणम् ॥' प्रकर्षणाकर्षणयोरिति तृतीयार्थे षष्ठी ॥ ३२ ॥

[ सर्व० ]क्षेपणं स्थानात्प्रच्यावनम् । मुष्टिरुरसि मुष्ट्योः पातनम् । वराहोद्धूतनिःस्वनः स्कन्धगतमवाङ्मुखं भ्रामयित्वा क्षिप्तस्य शब्दः । तलैः चपेटैः । प्रसृष्टाः प्रसृता अङ्गुल्यः ॥ २८ ॥ शलाका ऋज्वी दृढा रुषा क्षिप्ताङ्गुली तस्या नख-

२८ व. प्रथमार्धस्थाने—क्ष्वेडितैर्मुष्टिभिश्चैव क्षेपणोत्कृष्टनिःस्वनैः । ग. क्ष्वेडितोत्कृष्टनिःस्वनैः । २९ व. शिलाकानख° । बि. वारुणैः । व. °श्चाश्मनिर्घषैः । व. ज. श्चावघट्टितैः । ३० व. °द्घोरं सुमहद्बाहु° । व. बलप्राणविनिष्पाद्यं समा° । ३१ बि. अभज्यत । व. प्रथमार्धस्थाने—संरज्यत जनः सर्वो निनादोत्कुष्टमुत्थितः । व. वृत्रशक्रपराक्रमौ । ३२ बि. व. आकर्षतामथाऽन्योन्यं बाहुभि° ।

ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ३३ ॥
चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ।
निनदन्तमभिक्रोशन् शार्दूल इव वारणम् ॥ ३४ ॥
समुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।
ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ॥ ३५ ॥
भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ॥ ३६ ॥
तस्मिन्विनिहते वीरे जीमूते लोकविश्रुते ।
विराटः परमं हर्षमगच्छद्बान्धवैः सह ॥ ३७ ॥
प्रहर्षात्प्रददौ वित्तं बहु राजा महामनाः ।
बल्लवाय महारङ्गे यथा वैश्रवणस्तथा ॥ ३८ ॥
एवं स सुबहून्मल्लान्पुरुषांश्च महाबलान् ।
विनिघ्नन्मत्स्यराजस्य प्रीतिमाहरदुत्तमाम् ॥ ३९ ॥
यदास्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥ ४० ॥
पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स विराटेन सिंहैर्मत्तैर्महाबलैः ॥ ४१ ॥
बीभत्सुरपि गीतेन स्वनृत्येन च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः ॥ ४२ ॥
अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः ।
तोषयामास राजानं नकुलो नृपसत्तमम् ॥ ४३ ॥
तस्मै प्रदेयं प्रायच्छत्प्रीतो राजा धनं बहु ।
विनीतान्वृषभान्दृष्ट्वा सहदेवस्य चाभितः ।
धनं ददौ बहुविधं विराटः पुरुषर्षभः ॥ ४४ ॥
द्रौपदी प्रेक्ष्य तान्सर्वान्क्लिश्यमानान्महारथान् ।
नातिप्रीतमना राजन्निःश्वासपरमाऽभवत् ॥ ४५ ॥
एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ४६ ॥

इति श्रीमहाभारते विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

समाप्तं समयपालनपर्व ।

---

पातैः ॥ २९ ॥ बलेन शरीरबलेन प्राणेन मानसबलेन ॥३०॥ सोत्क्रुष्टनिनदः(दोत्थितः) हीहीशब्दोच्चारणेन यज्जितस्य समुत्थापनं तत्सहितः ॥ ३१ ॥ प्रकर्षणमाकृष्य क्रोडीकरणम् । आकर्षणं लीलयैव संमुखीकरणम् । अभ्याकर्षः सर्वतो भ्रामणम् । विकर्षणं वेगेन पश्चात्पातनम् ॥ ३२ ॥

[विरो०] घट्टितैः; घट्टनैः ( दे ) ॥ २९ ॥ आकर्षणाभ्यां २ आकर्षणयोः ( च ) तृतीयार्थे षष्ठी ॥ ३२ ॥

[ नील० ] गतसत्त्वं नष्टबुद्धिम् अत एव अचेतनं शवभूतम् ॥ ३६ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ अर्जु० ] शतगुणं शतवारम् ॥ ३६ ॥ सहदेवस्य तस्मै प्रदेयं प्रायच्छत् इत्युभयत्रान्वयः ॥ ४४ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ चतु० ] उत्पाट्य उत्क्षिप्य ॥ ३४ ॥

इति श्रीमहाभारतटीकायां चतुर्भुजमिश्रकृतायां वि. प. त्रयोदशोऽध्यायः ॥ १३ ॥

[ सर्व० ] नियुद्धं बाहुयुद्धम् ॥ ३३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ विरो० ] भवेत् सिंहेऽपि शार्दूलः ( अ ) ॥ ३४ ॥ शतगुणं; शतपरम् ( अ ) ॥ ३६ ॥ च प्रभो; वा विभो ( अ ) ॥ ४४ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ लक्षा० ] प्रत्यपिङ्क्षन्महाबाहुरित्यत्र प्रत्यपिंक्षत् पिष्टं कृतवान् पिषि पिष्टाविति धातोर्लुङि रूपम् ॥ ३६ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

३३ व. आयुधैः परिघैस्तथा । ३४ ज. दोर्भ्यामुद्यम्य । ज. बलवन्तमतिक्रो° । व. °मतिक्रोधाच्छार्दूल । ३५ च ज. प्रथमार्धात्प्रागधिकम्—एवं तदभवद्घोरं तयोस्तत्र महोत्सवे । बलिनोः संयुगे राजन्निन्द्रप्रह्लादयोरिव । व. च. बि. तमुद्यम्य । वि. व. °मास पाण्डवः । ग. तत्र मल्लास्तु तत्प्रेक्ष्य । ३६ बि. अचेतसम् । ३७ व. ज. बि. विनिहते मल्ले । ३८ बि. सहर्षं; व. °स हर्षाः; ज. संहर्षा° । ४० व. °प्ययोजयत् । ४१ क. गजैः सिंहैर्महाबलैः । ४३ द. नकुलो राजसत्तमः । ४४ व. °स्य च प्रभुः; च. ज. °स्य वै विभो । ४५ द. नातिप्रीतिमती । ज. विनिःश्वासपराऽभ° । इति त्रयोदशोऽध्यायः ॥ १३ ॥

## ( अथ कीचकवधपर्व ३ )

### चतुर्दशोऽध्यायः १४

सुदेष्णाभवने कदाचिद्द्रौपदीं सैरन्ध्रीवेषेण परिचरन्तीमालोक्योन्मादमुपगतवता कीचकेन सुदेष्णां प्रति तस्याः प्रार्थनम् ॥ १ ॥ ततो द्रौपदीमेत्य त्वत्संगमसंकल्पविद्धेन कामाग्निना दह्यमानं मामात्मप्रदानेनोद्धरेति प्रार्थना ॥ २ ॥ द्रौपद्या परदाराभिमर्शने दोषान् स्वस्य दुर्लभत्वं चोक्त्वा तस्य भर्त्सनम् ॥ ३ ॥

**वैशम्पायन उवाच—**

वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषुच्छन्नेषु मासा दश समाययुः ॥ १ ॥
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
आवसत्परिचारार्हा सुदुःखं जनमेजय ॥ २ ॥
तथा चरन्ती पाञ्चाली सुदेष्णाया निवेशने ।
तां देवीं तोषयामास तथा चान्तःपुरस्त्रियः ॥ ३ ॥
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ४ ॥
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ५ ॥
स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै ।
प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ॥ ६ ॥

**कीचक उवाच—**

नेयं मया जातु पुरेह दृष्टा
राज्ञो विराटस्य निवेशने शुभा ।
रूपेण चोन्मादयतीव मां भृशं
गन्धेन जाता मदिरेव भामिनी ॥ ७ ॥
का देवरूपा हृदयङ्गमा शुभे
ह्याचक्ष्व मे कस्य कुतोऽत्र शोभने ।
चित्तं हि निर्मथ्य करोति मां वशे
न चान्यदत्रौषधमस्ति मे मतम् ॥ ८ ॥
अहो तवेयं परिचारिका शुभा
प्रत्यग्ररूपा प्रतिभाति मामियम् ।
अयुक्तरूपं हि करोति कर्म ते
प्रशास्तु मां यच्च ममास्ति किंचन ॥ ९ ॥
प्रभूतनागाश्वरथं महाजनं
समृद्धियुक्तं बहुपानभोजनम् ।
मनोहरं काञ्चनचित्रभूषणं
गृहं महच्छोभयतामियं मम ॥ १० ॥
ततः सुदेष्णामनुमन्त्र्य कीचकः
ततः समभ्येत्य नराधिपात्मजाम् ।
उवाच कृष्णामभिसान्त्वयंस्तदा
मृगेन्द्रकन्यामिव जम्बुको वने ॥ ११ ॥

---

[ नील० ] वसमानेष्विति ॥ १ ॥ अन्यदौषधम् एतां विना ॥ ८ ॥ प्रत्यग्ररूपा दिव्यरूपा ॥ ९ ॥

[ अर्जु० ] वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा इत्यादेर्योक्ष्यते सह बान्धवैरित्यन्तस्य भूभारावतरणसंकल्पः परमेश्वरस्य विजृम्भमाणो धर्मवरदानावसरे विराटनगरे त्रयोदशं वर्षमनतिवाहयन्नेव पञ्चमन्त्रानादिश्य तेषां मध्ये भीमेन कीचको घातितः(?)भुवो भारावतरणार्थमिति तात्पर्यार्थः ॥१॥ तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः इति तस्मिन् वर्षे गतप्राये गतबाहुल्ये मासद्वयमात्रस्थित इत्यर्थः ॥ ४ ॥ 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः। जाता पक्वा सुसंधानेनेत्यर्थः । भामिनी कोपना ॥ ७ ॥

प्रत्यग्ररूपा अभिनवरूपा अदृष्टरूपेत्यभिप्रायः । प्रतिभाति मां रोचते मह्यम् ॥ ९ ॥

[ चतु० ] छन्नेषु निगूढेषु ॥ १ ॥ कामयामास कामितवान् ॥५॥ प्रत्यग्ररूपा अदृष्टपूर्वसौन्दर्या । मां प्रतिभाति मह्यं रोचते ॥ ९ ॥

[ विरो० ] देवतामिव अव्याहतगतिम् ॥५॥ भामिनी; भाविनी ( दे ) ॥ ७ ॥ प्रतिभाति रोचते ( दे ) ॥ ९ ॥

[ विष० ] उन्मादयति धातुसंक्षोभाच्चित्तविभ्रममिव करोति । नीलोत्पलमयो गन्धो यस्याः कोशात् प्रवाति(सा) गन्धे सुपक्वा (जाता) जात्या उत्कृष्टा ॥ ७ ॥ एतस्याः संभोगादन्यदौषधं नास्ति । इति मे मम मतं विमर्शः ॥८॥ प्रत्यग्ररूपा अभिनवरूपा अदृष्टरूपेत्यभिप्रायः ॥ ९ ॥

---

१ ज. बि. विराटनगरे तदा । व. ज. दश समभ्ययुः । २ व. अचरत्परिचारार्हा । ४ ज. कीचकः सूतनन्दनः; बि. सूतपांसुलः । बि. ग. घ. ध. ददर्श जलजाननाम् । ५ ज. कामबाणवशं गतः । ७ व. गन्धेन पक्वा मदिरेव । ज. मदिरेव भाविनी । ८ व. ज. कस्य कुतश्च शोभना । ग. दृढं हि कामस्य करोति । व. बि. चान्यदत्रौषधमद्य मे । ९ व. प्रतिमेव काञ्चनी । व. अयुक्तमेतत्तु करोति । १० व. रथं सकाञ्चनं; ज. रथं सभाजनं । ११ व. सुदेष्णामभिगम्य ।

का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ १२ ॥
रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम्।
कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्मलम्॥१३॥
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे।
वाक्यं ते चारुसर्वाङ्गि परपुष्टरुतोपमम् ॥ १४ ॥
एवंरूपा मया नारी काचिदन्या महीतले।
न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ॥ १५ ॥
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे।
ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने॥१६॥
अतीव रूपिणी किं त्वमनङ्गाङ्गविहारिणी।
अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ १७ ॥
अपि चेक्षणपक्ष्मणां स्मितं ज्योत्स्नोपमं शुभम्।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमम् ॥ १८ ॥
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्याऽनुपमया युतम्।
कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ॥ १९ ॥
हारालङ्कारयोग्यौ तु स्तनौ चोभौ सुशोभनौ।
सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ॥२०॥
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ २१ ॥
वलीविभङ्गचतुरं स्तनभारविनामितम्।
कराग्रसंमितं मध्यं तवेदं तनुमध्यमे ॥ २२ ॥
दृष्ट्वैव चारु जघनं सरित्पुलिनसंनिभम्।
कामव्याधिरसाध्यो मामप्याक्रामति भामिनि ॥ २३ ॥
जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः।
त्वत्सङ्गमाभिसंकल्पविवृद्धो मां दहत्ययम् ॥ २४ ॥
आत्मप्रदानवर्षेण संगमाम्भोधरेण च।
शमयस्व वरारोहे ज्वलन्तं मन्मथानलम् ॥ २५ ॥

---

[ नील० ] परपुष्टः कोकिलः ॥ १४ ॥ भूतिः ईश्वरी ऐश्वर्याभिमानिनी देवता ॥ १६ ॥ अनङ्गाङ्गविहारिणी स्मरदेहेन क्रीडन्ती रतिरित्यर्थः ॥ १७ ॥ ईक्षणपक्ष्मणां नेत्रपक्ष्मणां स्मितमीषदुन्मीलनं तदेव ज्योत्स्नोपमं मनस आह्लादकरम्। लक्ष्माणमिति पाठे वक्त्रचन्द्रविशेषणम् ॥ १८ ॥ सुजातौ उन्नतौ निरन्तरौ पृथुत्वात्संश्लिष्टौ॥२०॥ कुड्मलेति मुकुलीभूतपद्माकारौ ॥२१॥ वलीनां जठरगतरेखानां विभङ्गेन चतुरं शोभनम्। कराग्रं अङ्गुष्ठादिमध्यमान्तो वितस्तिस्तेन संमितं कृशमित्यर्थः ॥ २२ ॥ अग्निमदनो मदनाग्निः ॥ २४ ॥

[ अर्जु० ] प्रकारान्तरेणापि कीचको द्रौपदीं वर्णयन्नाह—'अपि चेक्षणपक्ष्माणं स्मितज्योत्स्नोपमं शुभम्। दिव्यांशुरश्मिसंवीतं दिव्यकान्तिमनुत्तमम्। निरीक्ष्य' इत्यादि। हे सैरन्ध्रि तव वक्त्रचन्द्रं निरीक्ष्य कृत्स्ने जगति को नाम जनः कामस्य वशगो न भवेत्, अपि तु सर्वे एवेत्यर्थः। चन्द्रस्य साम्यमाह स्मितज्योत्स्नोपमं स्मितमीषद्धसनं ज्योत्स्नोपमं यत्रेति विग्रहः। पुनः किंभूतं तत्राह—ईक्षणपक्ष्माणं कुटिलाग्रेण ईक्षणं गर्ह्यं यस्मिंस्तत्तथा। 'पक्ष्माक्षिलोम्नि किंजल्के तन्त्वाद्यंशेऽप्यणीयसि' इत्यमरः। 'खेटगर्ह्याणकाः समाः' इति च। ईक्षणमेव सूक्ष्मपक्ष्मांशो यस्मिन् स तथा। अथवा चन्द्रस्तावदाणयति प्राणयति वक्त्रचन्द्रोऽपीक्षणपक्ष्मणा प्राणयति इत्याह—अपि चेक्षणपक्ष्माणमिति। ईक्षणपक्ष्माणयति अण प्राणने इत्यस्य दैवादिकस्य रूपम् ॥ १८ ॥ १९ ॥ स्तनौ विशेषयति पयोऽधराविति ॥ २० ॥ सरित्पुलिनसन्निभमिति नद्यास्तोयोत्थितभागवत्कठिनविस्तृतरमणीयमिति मध्यमित्यस्य विशेषणम् ॥ २३ ॥

[ चतु० ] अग्र्यं श्रेष्ठम् ॥ १३ ॥ ईक्षणपक्ष्मैव अङ्को लाञ्छनं यस्मिन्। स्मितज्योत्स्नोपमं स्मितमेव ज्योत्स्नात्वमागतम् ॥ १८ ॥ वृत्तौ वर्तुलौ ॥२०॥ प्रतोदाविव प्राजनमिव ॥ २१ ॥ वलीनां जठरगतरेखानां विभङ्गेन निम्नोन्नतविभागेन चतुरं शोभनम् ॥ २२ ॥ असाध्यः अनन्यसाध्यः ॥ २३ ॥

[ सर्व० ] परपुष्टः कोकिलः ॥ १४ ॥ अनङ्गाङ्गविहारिणी स्मरदेहेन क्रीडन्ती ॥ १७ ॥ नेत्रपक्ष्मणां स्मितमीषदुन्मीलनं तदेव ज्योत्स्नोपमम् ॥ १८ ॥ सुजातौ उन्नतौ ॥ २० ॥ कुड्मलेति मुकुलीभूतपद्माकारौ ॥ २१ ॥ कराग्रं अङ्गुष्ठादिमध्यमान्तो वितस्तिः ॥ २२ ॥

[विरो०] ईक्षणपक्ष्मैव अणो गर्ह्यः कलङ्को यत्र। पक्ष्मणो(?) (अ); पक्ष्माङ्कम्। स्मितज्योत्स्नोपमं स्मितं ज्योत्स्नया उपमीयते यत्र। ज्योत्स्नोपमं ज्योत्स्नात्वेनोपगतं (च) दिव्यांशुर्नेत्रतारका ॥ १८ ॥ पयोऽधरौ पयोरहितौ ॥ २१ ॥ समीचीनं कल्पयतीति संकल्पो वायुः ॥ २४ ॥

---

१२–२१श्लोकाः वि. व. पुस्तकयोर्न सन्ति। १४ ज. उत्तरार्धस्थाने–वाक्यं च ते चारुसर्वाङ्गि परपुष्टरुतोपमा। २२ ज. स्तनभारावनामितम्। २३ म. °साध्यो मामभ्याक्रामति; च. दे. ज. मामध्याक्रामति। २४ ज. ज्वालावान्य मन्मथो

१ ईक्षणपक्ष्मांकमिति पाठोऽस्य संमतः।

मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः ।
त्वत्संगमाशानिशितास्तीव्राः शशिनिभानने ।
मह्यं विदार्य हृदयमिदं निर्दयवेगिताः ॥ २६ ॥
प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्डदारुणाः ।
अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम ।
आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ २७ ॥
चित्रमाल्याम्बरधरा सर्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह विलासिनि ॥२८॥
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।
प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ॥२९॥
स्वादून्यमृतकल्पानि पेयानि विविधानि च ।
पिबमाना मनोज्ञानि रममाणा यथासुखम् ॥ ३०॥
भोगोपचारान्विविधान्सौभाग्यं चाप्यनुत्तमम् ।
पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ॥ ३१ ॥
इदं हि रूपं प्रथमं तवानघे
निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्रगिवोत्तमा शुभा
न शोभसे सुन्दरि शोभना सती ॥ ३२ ॥
त्यजामि दारान्मम ये पुरातना
भवन्तु दास्यस्तव चारुहासिनि ।
अहं च ते सुन्दरि दासवत्स्थितः
सदा भविष्ये वशगो वरानने ॥ ३३ ॥

द्रौपद्युवाच—

अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।
निहीनवर्णां सैरन्ध्रीं बीभत्सां केशकारिणीम् ॥३४॥
परदाराऽस्मि भद्रं ते न युक्तं तव साम्प्रतम् ।
दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥३५॥
परदारे न ते बुद्धिर्जातु कार्या कथंचन ।
विवर्जनं ह्यकार्याणामेतत्सत्पुरुषव्रतम् ॥ ३६ ॥
मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः ।
अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयम् ॥ ३७ ॥

वैशम्पायन उवाच—

एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः ।
जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शने ॥ ३८ ॥
दोषान्बहून्प्राणहरान् सर्वलोकविगर्हितान् ।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः ॥ ३९ ॥

कीचक उवाच—

नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ४० ॥
प्रत्याख्याय च मां भीरु वशगं प्रियवादिनम् ।
नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि ॥ ४१ ॥
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ ४२ ॥
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ४३ ॥
सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥४४॥
मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने ।
भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ॥४५॥

---

[नील०] अत्युन्मादं मरणकालीनं सन्निपातं समारभन्ते ते अत्युन्मादसमारम्भाः । त्वदलाभे मरिष्याम्येवेति भावः ॥ २७ ॥ कामं स्मरं प्रकाममतिशयितम् ॥ २८ ॥ प्राप्नुहि लभस्व ॥ २९ ॥ अभिमन्यसे कामयसे ॥ ३४ ॥ मिथ्याभिगृध्नः वितथाभिनिवेशी महद्भयं मृत्युम् ॥ ३७ ॥

[अर्जु०] पानं पाहि छान्दसत्वात् पिबादेशाभावः ॥३१॥ अधार्यमाणा शिरसेति शेषः ॥ ३२ ॥ अतिमन्यसे बहुमन्यसे विहीनवर्णां निकृष्टवर्णां बीभत्सा गर्हिताम् ॥३४॥ परदाराऽस्मि आचष्टाप(?)एकवचनम् । अथवा परदाराः स्म इति पाठः। दयिता दयासंयुक्ता तारकादित्वादितः ॥३५॥ मिथ्या(?तथा)भिगृद्धो विषयाभिलाषी ॥ ३७ ॥ त्वत्कृते तन्निमित्तम् ॥ ४० ॥ हृष्यस्व मोदयस्व ॥ ४५ ॥

[चतु०] काराः (कारकराः) हिंसाविधायिनः ॥ 'कारो निश्चयहिंसयोः' इत्यभिधानात् ॥ २७ ॥ पाति पिबति वा (?) ॥ ३१ ॥ अभिमन्यसे प्रार्थयसे ॥ ३४ ॥ जातु कदाचित् ॥ ३६ ॥ मिथ्याभिगृध्नः अयुक्ताभिलाषी॥ ३७ ॥

[सर्व०] मिथ्याभिगृध्नः वितथाभिनिवेशी ॥ ३७ ॥

[विरो०] निशिता घृष्टाः पीताः तीक्ष्णाः ॥ २६ ॥

---

२६ ज. मन्मथस्य शरोत्तमाः । दे. छ. वि. ण. त्वत्सङ्गमेन शमितास्ती° । ज. °शिताः पीताः शशि° । २७ ज. मामुद्धर्तुं त्वमर्हसि । २९ च. ज. मत्तस्त्वं गजगामिनि । ३१ ज. भोगैश्चानुपमैः शुभैः । ३२ ग. घ. व. ज. प्रथमं च ते वयो; वि. ण. छ. दे. नवं वयः । व. ज. °माणा स्रगिवोत्तमा यथा । ३३ व. सुन्दरि दास्यमास्थितः । त्रयस्त्रिंशान्ते क. पुस्तकेऽध्यायसमाप्तिः । ३४ व. °नीयां सुभगां । व. न हीनवर्णां । ३५ व. न युक्तं त्वयि (मयि)। ३६ ग. घ. परदारेषु ते बुद्धिर्न तु कार्या कदाचन । व. ज. °मेतत्सत्पुरुषव्रतम् । ३७ व. मिथ्याभिचारो हि; वि. मिथ्याप्रवृत्तो हि° । ज. व. लोभमास्थितः; वि. लौल्यमा° । व. सुमहत्प्रा(च.)प्नुया° । वि. ३८–४६ श्लोका न सन्ति । ४२ दे. हि सर्वराज्यस्य ।

वैशम्पायन उवाच—

एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः ।
कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ॥ ४६ ॥

सैरन्ध्युवाच—

मा सूतपुत्र मुह्यस्व माऽद्य त्यक्ष्यस्व जीवितम् ।
जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् ॥ ४७ ॥
न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम ।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥४८॥
अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि ।
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ।
तर्तुमिच्छति मन्दात्मा तथा त्वं कर्तुमिच्छसि ॥४९॥
अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः
समुद्रपारं यदि वा प्रधावसि ।
तथाऽपि तेषां न विमोक्षमर्हसि
प्रमाथिनो देवसुता हि खेचराः ॥ ५० ॥
त्वं कालरात्रीमिव कश्चिदातुरः
किं मां दृढं प्रार्थयसेऽद्य कीचक ।
किं मातुरङ्के शयितो यथा शिशु-
श्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् ॥ ५१ ॥
तेषां प्रियां प्रार्थयतो न ते भुवि
गत्वा दिवं वा शरणं भविष्यति ।
न वर्तते कीचक ते दृशा शुभं
या तेन संजीवनमर्थयेत सा ॥ ५२ ॥

इति श्रीमहाभारते विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

---

साक्षात्कारकरा इव । कारकरा हिंसकाः मम । 'कारो निश्चयहिंसयोः' ॥ २७ ॥ विविधान् प्राप्नुहीत्यनुषङ्गः । पाहि; पिब (च) ॥ ३१ ॥ दारास्मि २ अन्यदाराः स्म नसाप्रतमयुक्तम् ॥ ३५ ॥ गृद्धः; गृध्नुः (स्र) ॥ ३७ ॥

[विष०] भामिनी दीप्तिमती भा दीप्तौ । अधार्यमाणा कण्ठे शिरसि वा इति शेषः ॥ ३२ ॥ अभिमन्यसे ऐश्वर्याभिमानेन पश्यसि ॥ ३४ ॥ मिथ्याभिगृध्नो मिथ्याविषयेष्वभिलाषुकः ॥ ३७ ॥

[नील०] अन्तर्महीं भूमि(छिद्र?)म् ॥ ५० ॥ मन्यसे लिप्ससे । शिशोश्चन्द्रवदहं तव दुर्लभाऽस्मीति भावः ॥५१॥ तेषां प्रियामिति । तेषां प्रसिद्धानां गन्धर्वाणां प्रियां प्रार्थयतस्ते भुवि गत्वा दिवं वा गत्वा शरणं त्राता कश्चिन्न भविष्यति । अत एव हे कीचक ते तव कामान्धस्य सा दृशा दृष्टिर्बुद्धिरिति यावत् या शुभं स्वीयं अर्थयेत कामयेत शुभेच्छारूपा तव नास्तीत्यर्थः । तेन च शुभेन परदारनिवृत्तिरूपेण कामितेन संजीवनं भवतीति शेषः । अन्यथा मरिष्यसीत्यर्थः । न मे भुवीति पाठे तेषां प्रियां प्रार्थयतो मे मम कोऽपि त्राता न भविष्यतीति दृशा बुद्धिस्तव नास्तीति संबन्धः । या ते च संजीवनमर्थयत्तमिति पाठे तु या दृष्टिस्ते तव संजीवनं च भवति कीदृशं संजीवनं अर्थयत्तं वस्त्वधीनम् । तस्माद्वितथाभिनिवेशिनस्ते जीवनं नास्तीत्यर्थः ॥ ५२ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[अर्जु०] साधु शोभनम् अक्लेशेन निहन्युरिति पूर्वेणान्वयः । अथवा साधु शोभनमलं वारणमेव ॥ ४८ ॥ उत्तरं परम् ॥ ४९ ॥

इत्यर्जुनमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[चतु०] शक्या लब्धुमिति शेषः । लभ्येति च पाठ[ः] अलं वारणे वृथा वा मा व्यनीनशः विनाशं मा गाः ॥ ४८ ॥ अन्तर्महीं भूमिच्छिद्रम् ॥ ५० ॥ मन्यसे वाञ्छसि ॥ ५१ ॥

इति श्रीमहाभारतटीकायां चतुर्भुजमिश्रकृतायां वि० प० चतुर्दशोऽध्यायः ॥ १४ ॥

[सर्व०] या दृष्टिस्ते तव संजीवनं च भवति । कीदृशं सं[जीवनं] जीवनं अर्थयत्तं वस्त्वधीनं तस्मात्ते जीवनं नास्तीत्यर्थः ॥५२॥

इति सर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[विरो०] मुह्यस्व; कृष्यस्व ॥ ४७ ॥ अलं नि[वृ]त्तिरेव साधु विनीनशः व्यनीनशः ॥ ४८ ॥ कीचकवधे ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[विष०] दुर्लभामैश्वर्यात्सुलभां मन्वानः ॥ ४७ ॥ मे वरा मे भर्तारः ॥ ५० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

---

४७ ग. सूतपुत्र हृष्यस्व माद्य । ज. माऽद्य त्याक्षीः सुजीवितम्; व. मा त्यजस्व स्वजी° । त्रि. ग. घ. व. दुर्लभाममभिमन्वानो मां वीरैरभिवीक्षिताम् ; व. दुर्लभामपि म°; ज. दे. च. षि. ण. पञ्चभिर्नित्यं मां वीरैर° । ४८ ग. घ. व. त्वया शक्या गन्धर्वाः । व. मा विनीनशः । ४९ ग. असह्यरूपं यत्कर्म मा त्वं तत्कर्तुं°; घ. अगम्यरूपं पुरुषैरध्वानं गन्तुमर्हसि । व. °च्छति बाहुभ्यां [...] त्वमपि कीचक । ५० ण. मत्प्रार्थिता देवसुता हि । बि. व. हि मे वराः । ५१ [...] मां भृशं प्रार्थ° । व. जिघृक्षन्निव । ग. मां जिघृक्षसि । ५२ ज. प्रियां प्रार्थ[...] व. या तेन संजीवनमर्थमर्थयेत् ; ज. मर्थयेत्तम् । इति चतुर्दशोऽध्यायः ॥ १[४]

## पञ्चदशोऽध्यायः १५

कीचकप्रियचिकीर्षया तद्भवने सुराहरणव्याजेन सुदेष्णया बलाद्द्रौपद्याः प्रेषणम् ॥ १ ॥ द्रौपदीप्रार्थितेन सूर्येण तद्रक्षार्थं निगूढं रक्षसो नियोजनम् ॥ २ ॥

**वैशम्पायन उवाच—**

प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत् ।
अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ १ ॥

**कीचक उवाच—**

यथा कैकेयि सैरन्ध्री समेयात्तद्विधीयताम् ।
येनोपायेन सैरन्ध्री भजेन्मां गजगामिनी ।
तं सुदेष्णे परीप्सस्व प्राणान्मोहात्प्रहासिषम् ॥ २ ॥

**वैशम्पायन उवाच—**

तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा ।
विराटमहिषी देवी कृपां चक्रे मनस्विनी ॥ ३ ॥
स्वमन्त्रमभिसंधाय तस्यार्थमनुचिन्त्य च ।
उद्योगं चैव कृष्णायाः सुदेष्णा सूतमब्रवीत् ॥ ४ ॥
पर्वणि त्वं समुद्दिश्य सुरामन्नं च कारय ।
तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ॥ ५ ॥
तत्र संप्रेषितामेनां विजने निरवग्रहे ।
सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि ॥ ६ ॥

**वैशम्पायन उवाच—**

इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात्तदा ।
सुरामाहारयामास राजार्हां सुपरिष्कृताम् ॥ ७ ॥
भक्ष्यांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा ।
कारयामास कुशलैरन्नं पानं सुशोभनम् ॥ ८ ॥
तस्मिन्कृते तदा देवी कीचकेनोपमन्त्रिता ।
सुदेष्णा प्रेषयामास सैरन्ध्रीं कीचकालयम् ॥ ९ ॥

**सुदेष्णोवाच—**

उत्तिष्ठ गच्छ सैरन्ध्रि कीचकस्य निवेशनम् ।
पानमानय कल्याणि पिपासा मां प्रबाधते ॥ १० ॥

---

[ नील० ] समेयात् मामुपगच्छेत् मा ऊहादिति च्छेदः ऊहात् वितर्कात्तम् उपायं युक्त्या परीप्सस्वेति योज्यं प्राणान् मा प्रहासिषमिति च ॥ २ ॥ कृष्णायाः प्रास्यर्थे उद्योगं उद्यमं चानुचिन्त्येति योज्यम् ॥ ४ ॥ पर्वणि मद्यपायिनामुत्सवकाले चतुर्दश्यादौ । समुद्दिश्य अद्याहं सुदेष्णार्थमन्नादिकं कारयामीति ख्यापयित्वा ॥ ५ ॥ विजने एकान्ते निरवग्रहे निष्प्रतिबन्धे ॥ ६ ॥ उपमन्त्रिता प्रार्थिता ॥ ९ ॥ पानं मद्यं सुरामन्नं चेत्युपक्रमात्तस्यैव पिपासा पातुमिच्छा ॥ १० ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
पञ्चदशोऽध्यायः ॥ १९ ॥

[ अर्जु० ] इयात् गच्छेत् ॥ परीप्सस्व कुरु ॥ प्रहासिषम् त्यजेयम् ॥ २ ॥

[चतु०] अमर्यादेन स्थित्यतिक्रान्तेन अनवधिना वा ॥ १ ॥ परीप्सस्व परिचिन्तय ॥ २ ॥ पर्वणि उत्सवकाले ॥ ५ ॥ निरवग्रहे निष्प्रतिबन्धे ॥ ६ ॥ आहारयामास संभृतवान् । सुपरिष्कृतां मदिराभेदेन सहितां ॥ ७ ॥ आजं मेषभवं मासं; बभ्रुं नकुलभवं मांसं ॥ ८ ॥

[ सर्व० ] पर्वणि उत्सवे ॥ ५ ॥ निरवग्रहे निष्प्रतिबन्धे ॥ ६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि
पञ्चदशोऽध्यायः ॥ १९ ॥

[ विरो० ] पर्वणि; पर्वणीम् । उत्सवं ( च ) पर्वणि इं कामम् ॥ ५ ॥ सुपरिष्कृतां; सपरिस्रुताम् । परिस्रुता मद्यविशेषः ॥ ७ ॥

[ विष० ] अभिपरिप्लुतो लज्जां त्याजितः ॥ १ ॥ स्वमर्थभभिसंधाय यदि एषा कीचकं कामयते तदा मम भर्ता एनां नाभिलषतीति स्वार्थः । यदि एनां रहसि सकृदपि कीचको लभते तदा कामाग्निना न पीड्येत विरहेणास्या न म्रियेत इति तस्य कीचकस्यार्थः । एतदुभयमपि यदि न संपद्यते तथापि सैरन्ध्र्या उद्वेग एव भविष्यतीति कार्यत्रयमभिसंधाय ॥ ४ ॥ 'पार्वरीणं तु पर्णस्य शिरायां घृतकम्बले । पर्णवृन्तरसेऽपि स्यात्पार्वरीणं तु पर्वणि ' ॥ ५ ॥

[ लक्षा० ] प्रोवाच च सुदुःखार्तो भगिनीं निश्वसन्निव । अव्यक्तमृदुना नाम्ना शुष्यमाणः पुनः पुनरित्यत्र अ-

---

२ ज. मामियात्तद्विधीयताम्; व. सैरन्ध्र्या समेयां तद्वि° । ज. मत्तगामिनी । व. नाहं प्राणैः ( णान् ) प्रहासिषम्; माहं प्राणान्प्रणाशिषम् ३ बि ग.ज.व.तस्तां । ४ ग. घ. स्वमर्थमभिसंख्याय; आत्मार्थमभि° । बि. व. ज. उद्वेगं चैव । ५ बि. व. पार्वणी । ६ व. ततः संप्रेषि° । बि. व. निरवग्रहम् । ज. रमिष्यति । ७ बि. ग. घ. व. कीचकस्तु विनिष्क्रम्य; ज. एतच्छ्रुत्वा स निष्क्रम्य भगिनीभवनात्ततः । ग. घ. भवनात् । ८ च. ज. ङ. आजं बभ्रुं च सुभृशं बहूंश्चोच्चावचं तथा; ग. आजं शौकरमन्यच्च भक्ष्यांश्चो°; बि. आजमैणं च. सुभृशम् ; घ. व. आजौरभ्रं च सुकृतं बहूंश्चोचावचान्मृगान् । १० व. सुरामाहर वै क्षिप्रं पिपासा ।

सैरन्ध्र्युवाच—

न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेव राज्ञि जानासि यथा स निरपत्रपः ॥ ११ ॥
न चाहमनवद्याङ्गि तव वेश्मनि भामिनि ।
कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी ॥१२॥
त्वं चैव देवि जानासि यथा स समयः कृतः ।
प्रविशन्त्या मया पूर्वं तव वेश्मनि भामिनि ॥१३॥
कीचकस्तु सुकेशान्ते मूढो मदनदर्पितः ।
सोऽवमंस्यति मां दृष्ट्वा न यास्ये तत्र शोभने ॥१४॥
सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय भद्रं ते स हि मामवमंस्यते ॥ १५ ॥

सुदेष्णोवाच—

नैव त्वां जातु हिंस्यात्स इतः संप्रेषितां मया ।
इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयम् ॥ १६ ॥
सा शङ्कमाना रुदती दैवं शरणमीयुषी ।
प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ १७ ॥

सैरन्ध्र्युवाच—

यथाऽहमन्यं भर्तृभ्यो नाभिजानामि कंचन ।
तेन सत्येन मां प्राप्तां मा कुर्यात्कीचको वशे ॥१८॥

वैशम्पायन उवाच—

उपातिष्ठत सा सूर्यं मुहूर्तमबला ततः ।
स तस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ॥१९॥
अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ।
तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम् ॥ २० ॥
तां मृगीमिव संत्रस्तां दृष्ट्वा कृष्णां समीपगाम् ।
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥ २१ ॥

इति श्रीमहाभारते विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५॥

---

व्यक्तमृदुना नाम्ना सुदेष्णां संबोध्य प्रोवाचेति संबन्धः ॥ १ ॥ मध्वन्नार्थं तवान्तिकमित्यत्र मधु मद्यम् ॥ ५ ॥ विजने निरवग्रहामित्यत्र अव अधःकृत्य ग्रहः ग्रहणम् बलात्कारेणग्रहः । तद्रहितां निरवग्रहाम् ॥ ६ ॥

[अर्जु०] काश्यं कश्यस्य मद्यस्य इदं काश्यम् । कांस्यमिति घटनादिविशेषः । कांस्यं मधुपात्रं वा सापिधानं पात्रान्तरेणावृतं हिरण्मयं सौवर्णम् । 'कांस्यं वाद्यान्तरे पानपात्रे स्यात्तैजसान्तरे' इति मेदिनीकारः ॥ १६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[चतु०] कांस्यं भाजनम् । सपिधानमाच्छादनसहितम् ॥ १६ ॥ शङ्कमाना शङ्कां बिभ्रती । दैवमादित्यम् ॥ १७ ॥ रक्षः रक्षस्तत्वम् ॥ २० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतव्याख्यायां विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[विरो०] (च) कांस्यं पानपात्रम (मेदि०) कांश्यं कश्यमद्यस्य पात्रम् ॥ १६ ॥ देवं रविम् ॥ १७ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[विष०] समयो व्यवहारविधानम् ॥ १३ ॥ कांस्यं सुरापात्रम् । कल्यं कश्यं तथा मद्यं, कशस्येदं निक्षेपणस्थानं कांश्यं पात्रं छान्दसत्वाद्बिन्दुयोगः ॥ १६ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[लक्षा०] स मामिह गतां दृष्ट्वा व्यवस्यति निराकृत इत्यत्र निराकृतः मया निराकृतोऽपि व्यवस्यति बलाद्ग्रहीतुं निश्चयं करिष्यति ॥ १४ ॥ सापिधानं हिरण्मयम् । या सुजाता सुगन्धा च तामानय सुरामित्यत्र 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अपिधानेन सहितं सापिधानम् । या सुरेत्यत्र जातमन्था सारोद्धाराय जातमथना ॥ १६ ॥ अन्तर्हितं तत इत्यत्र अन्तर्हितं रक्षः ॥ २० ॥ नावं लब्ध्वेव पारग इत्यत्र पारगः पारं गन्तुमिच्छन् ॥ २१ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

---

११ ज. तस्य कीचकस्य निवे° । ज त्वमेव देवि । १२ ज. वेश्मनि भाविनि । १६ व. नैवं त्वां । ज. ङ. व. ददौ कांस्यं । १७ च. ङ व. सुदती दैवं (सूर्य) । १८ व. यथाहं पाण्डवेभ्योऽन्यं; ज. यथाहमन्यं पाण्डुभ्यो । व. ज. कीचको मा वशेऽकरोत् । १९ व. अबला तदा । ग. ततस्याश्चिन्तितं स्तत्र सर्वं बुबोध ह । व. सूर्योन्ववुध्यत । २१ ज. कृष्णां सुशोभनाम् । उपातिष्ठन्मुदा सूतो । पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः १६.

कीचकेन द्रौपद्याः स्वशयनारोहणप्रार्थनामगृह्णन्त्याः प्रसह्य वस्त्राञ्चले ग्रहणम् ॥ १ ॥ तं समाक्षिप्य शरणार्थं राजसभां प्राप्तां तां पृष्ठतो धावता कीचकेन केशेष्वाकृष्य भूमौ पातयित्वा पदा हननम् ॥ २ ॥ सूर्यप्रेषितेन रक्षसाऽपवाहितस्य कीचकस्य मूर्च्छाप्राप्तिः ॥ ३ ॥ भीमस्य कीचकजिघांसयोत्थातुमुद्यमो युधिष्ठिरेण संज्ञया प्रतिषेधश्च । द्रौपद्या विलपनपूर्वकं सभ्यानधिक्षिपन्त्या युधिष्ठिरवचनात्सुदेष्णा-भवने गमनम् ॥ ४ ॥

**कीचक उवाच—**

स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ।
स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् ॥ १ ॥
सुवर्णमालाः कम्बूंश्च कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्नं च शोभनम् ॥ २ ॥
आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च ।
अस्ति मे शयनं दिव्यं त्वदर्थमुपकल्पितम् ।
एहि तत्र मया सार्धं पिबस्व मधुमाधवीम् ॥ ३ ॥

**द्रौपद्युवाच—**

अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् ।
पानमाहर मे क्षिप्रं पिपासा मेऽति चाब्रवीत् ॥ ४ ॥

**कीचक उवाच—**

अन्या भद्रे नयिष्यन्ति राजपुत्र्याः प्रतिश्रुतम् ।
इत्येतां दक्षिणे पाणौ सूतपुत्रः परामृशत् ॥ ५ ॥

**द्रौपद्युवाच—**

यथैवाहं नाभिचरे कदाचि-
त्पतीन्मदाद्वै मनसाऽपि जातु ।
तेनैव सत्येन वशीकृतं त्वां
द्रष्टास्मि पापं परिकृष्यमाणम् ॥ ६ ॥

**वैशम्पायन उवाच—**

स तामभिप्रेक्ष्य विशालनेत्रां
जिघृक्षमाणः परिभर्त्सयन्तीम् ।
जग्राह तामुत्तरवस्त्रदेशे
स कीचकस्तां सहसाऽऽक्षिपन्तीम् ॥ ७ ॥
प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री ।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ॥ ८ ॥

[ नील० ] परितो हाटके ययोस्ते परिहाटके कुण्डले ताटके इत्यर्थः ॥ २ ॥ माधवीं मधुपुष्पजां मदिराम् ॥ ३ ॥ सुराहारीं सुरामाहर्तुकामाम् । पिपासा मेऽति मे मम अति पिपासा ॥ ४ ॥

[ अर्जु० ] सुव्युष्टा सुप्रभाता ॥ १ ॥ कम्बून् शङ्खघटितवलयानि कुण्डले परिहाटके परि सर्वतोभावेन हाटकं सुवर्णं ययोः ते तथा भावना(?)देवबोधस्तु परिहाटके केयूरे शकुन्तलोपाख्याने व्याख्यातवान् । नानापत्तनजे नानापत्तनशिल्पिभिरैकमत्येन निर्मिते इत्यर्थः ॥ २ ॥ कौशेयानि कृमिकोषसंभवानि । मधुमाधवीमिति मधुनः सुरामित्यर्थः मधुरिकापरिस्रुन्मदिराद्याः ॥ ३ ॥ अप्रैषीदिति सोपसर्गात् प्रागडागमश्छान्दसः प्रैषप्रातिपदिकण्यन्तस्य लुङि वा रूपम् ॥ ४ ॥ सुदेष्णायाः संबन्धित्वेन परिस्रुतं सुरामित्यर्थः । 'सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा' इत्यमरः । वरुणात्मजा वारुणी ॥ ५ ॥

[ चतु० ] सुव्युष्टा सुप्रभाता ॥ १ ॥ आहरमाहृतवानस्मि । मधु क्षौद्रं पुष्परसं वा । माधवीं मद्यम् ॥ ३ ॥ परिस्रुतां मदिराम् । परामृशद्गृहीतवान् ॥ ५ ॥

[ सर्व० ] सुव्युष्टा सुप्रभाता ॥ १ ॥ परितो हाटके ययोः ॥ २ ॥ मधुमाधवीं मधुपुष्पजां मदिराम् ॥ ३ ॥

[ विरो० ] नानापत्तनजे नानापत्तनजानि अवयवत्वेन यत्र । नानाशिल्पिभिरैकमत्येन निर्मिते इति वा ॥ २ ॥ मधुमाधवीं मधुनिर्मितां सुराम् ॥ ३ ॥ अप्रैषीत् । उपसर्गात्प्रागट् छान्दसः प्रैषप्रातिपदिकस्य ण्यन्तस्य लुङि वा रूपम् । मेति मे मम अति पिपासा ॥ ४ ॥ तां सुदेष्णां भर्त्सयन्तीम् । विनिःश्वस्य भर्त्सयन्तीमित्यन्वयः ॥७–८॥

[ विष० ] सुव्युष्टा सुप्रभाता ॥ १ ॥ कम्बूः शङ्खघटितालङ्कारान् । परिहारके कङ्कणे अङ्गदरूपे । ॥ २॥ कृमिकोशसंभवानि दुकूलानि । नानाविधमृगचर्माणि । तथा च । 'चमूरुश्च समूरुश्च कदली कन्दली तथा । प्रियकैणकमूकाश्च मृगा अजिनयोनयः । एतेषां स्वच्छचर्माणि........'गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा । चतुर्थी स्त्री सुरा

२ व. ज. परिहारके । ज. नानापत्तनजं सुभ्रु । ३ ज. आभरणानि च; आहरं चैव । व. ज. कौशेयान्यजिनानि च । व. त्वदर्थमनुकल्पितम्; छ. त्वदर्थमपि । ४ व. पिपासामीति चाब्र°; ग. ज. मां प्रबाधत । ५ वि. पुत्र्याः परिस्रुतां; ग. सुरादिकं । ६ व. यथा हि नाहं व्यभिचारयुक्ता कदाचिदासं मनसापि राजन् । तेनैव सत्येन वशीकृतापि मुच्ये यथाऽनेन विमृ (कृ) ष्यमाणा । ७ ज. व. तामनुप्रेक्ष्य । व. कीचकश्चाञ्चलमुत्क्षिपन्तीम् । ८ उत्तरार्धस्थाने च. ज. चिक्षेप तं गाढमभृष्यमाणा प्रवेपमानातिरुषा शुभाङ्गी ।

सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ।
सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः ॥ ९ ॥
तां कीचकः प्रधावन्तीं केशपाशे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदाऽवधीत् ॥ १० ॥
तस्या योऽसौ तदार्केण राक्षसः संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ ११ ॥
स पपात तदा भूमौ रक्षोबलसमाहतः ।
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ १२ ॥
तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ ।
अमृष्यमाणौ कृष्णायाः कीचकेन पराभवम् ॥ १३ ॥
तस्य भीमो वधं प्रेप्सुः कीचकस्य दुरात्मनः ।
दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ १४ ॥
धूमच्छाया ह्यभजतां नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥ १५ ॥
हस्तेन ममृदे चैव ललाटं परवीरहा ।
भूयश्च त्वरितः क्रुद्धः सहसोत्थातुमैच्छत ॥ १६ ॥
अथावमृद्नादङ्गुष्ठमङ्गुष्ठेन युधिष्ठिरः ।
प्रबोधनभयाद्राजा भीमं तं प्रत्यषेधयत् ॥ १७ ॥
तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
स तमावारयामास भीमसेनं युधिष्ठिरः ॥ १८ ॥

युधिष्ठिर उवाच—

आलोकयसि किं वृक्षं सूद दारुकृतेन वै ।
यदि ते दारुभिः कृत्यं बहिर्वृक्षान्निगृह्यताम् ॥ १९ ॥
सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत् ।
अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ॥ २० ॥
आकारमभिरक्षन्ती प्रतिज्ञाधर्मसंहिता ।
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ २१ ॥

---

ज्ञेया ययेदं मोहितं जगत्' ॥ ३ ॥ परिस्रुतं मदिराम् । परामृशत् जग्राह ॥ ५ ॥ हे राजन् इति चन्द्रमुद्दिशति । सामो राजा मनसोऽधिपतिरिति मनोगतं चन्द्रो वेत्तीति । तमधिचिक्षेपेति शेषः ॥ ६ ॥

[नील०] विधुन्वाना कम्पमाना ॥ ९ ॥ अपोवाह दूरीचकार ॥ ११ ॥ धूमच्छायाः कर्म, नेत्रे कर्तृणी अभजताम् । छायामित्येकवचनान्तः पाठः स्वच्छः ॥ १५ ॥ अङ्गुष्ठं पादाङ्गुष्ठमङ्गुष्ठेन हस्ताङ्गुष्ठेन आचारादेवं ज्ञेयम् ॥ १७ ॥ अभिरक्षन्ती गूहमाना धर्मसंहिता धर्मबद्धा ॥ २१ ॥

[अर्जु०] केशपक्षे केशसमूहे । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः । परामृशत् स्पृष्टवान् ॥ १० ॥ आकारं द्रौपदीत्वव्यञ्जकं, धर्मसंहितं सत्यरूपेण धर्मेण कृतसंघटनम् ॥ २१ ॥

[चतु०] केशपक्षे केशसमूहे ॥ १० ॥ अपोवाह अपनीतवान् ॥ ११ ॥ सः कीचकः ॥ १२ ॥ वधं ताडनम् ॥ १४ ॥ आकारं स्वव्यञ्जकम् ॥ २१ ॥

[सर्व०] अपोवाह दूरीचकार ॥ ११ ॥

[विरो०] प्रतिज्ञाधर्मसंश्रयात्; प्रतिज्ञां धर्मसंहिताम् (दे) रौद्रेण रोषसहितेन चक्षुषाऽवेक्षमाणा ॥ २०–२१ ॥

[विष०] राज्ञो विराटस्य युधिष्ठिरस्य च ॥ १० ॥ अपोवाह दूरं निनाय ॥ ११ ॥ त्रिशङ्कोरिति त्रयः शङ्कवो वर्षस्य त्रीणि चातुर्मास्यानि । त्रिंशकद्वादशाङ्गस्येति पाठे त्रिंशद्दिनपरिमिता द्वादश मासा अङ्गानि तत्तथा । चतुर्विंशतिपर्वणः इति शुक्लपक्षकृष्णपक्षभेदेन चतुर्विंशतिपक्षाः पर्वाणि यस्य तत्तथा । त्रीणि शतानि षष्ट्यधिकानि दिनानि अरा यस्य तत्त्रिषष्टिशतारं वर्षचक्रम् । तस्य वर्षचक्रस्य एकांशं पक्षमात्रं पञ्चदशदिनपरिमितं कालं कथं न क्षमसे इत्यर्थः ॥ २० ॥ आकारं द्रौपदीरूपव्यञ्जकं युष्मदस्मद्योगादिकम् ॥ २१ ॥

[लक्षा०] अथाङ्गुष्ठेनेव गृह्णन्नित्यत्र अङ्गुष्ठेन स्वहस्ताङ्गुष्ठेन भीमस्य अङ्गुष्ठं गृह्णन्निव प्रत्यषेधयत् नखैः स्वया निषेधं कृतवान् ॥ १७ ॥ आकारं परिरक्षन्तीत्यत्र धर्मसंहितां प्रतिज्ञां आसंवत्सरमेवं स्थास्याम इति भर्तॄणां स्वस्याश्च प्रतिज्ञाम् । आकारं प्रतिज्ञानुगुणाकारं च परिरक्षन्ती ॥ २१ ॥

---

९ क. भूमौ निक्षिप्य भाजनम् । १० ज. केशपक्षे; व. केशमध्ये । ज. पदाहनत् । ११ व. ततो योऽसौ । १३ व. तत्रासीनौ; तं चासीनौ । वि. ग. ज. व. कीचकेन पदावधं; घ. पदाहतं । १४ ग. दन्तैर्दन्तान्तरान्स्पृष्ट्वा क्रोधाद्भ्रुकुटिमानयत् । १५ ज. छायामभजतां नेत्रे चोत्फुल्लपक्ष्मणी । १७ ज. वि. अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तस्य धर्मराट् । २० व. तौपती दीनचेतसौ । २१ घ. प्रतिज्ञां धर्मसंहिताम्; ज. धर्मज्ञा धर्मे । व. धर्मसंयुताम् । वि. ज. व. दहमनिव ।

१९ स्थाने ज. व. पुस्तकयोः—
त्रिशङ्कोर्द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
यंत्रिषष्टिशतारस्य एकांशं न क्षमी कथम् ॥
श्रुत्वा चाज्ञामग्रभ्रातुः प्रशशाम वृकोदरः ।

१ व. त्र्यंशक । २ ज. यत्रिष ।

द्रौपद्युवाच—

येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥२२॥
ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥२३॥
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥२४॥
ये च तेजस्विनो दान्ता बलवन्तोऽतिमानिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥२५॥
सर्वलोकमिमं हन्युर्धर्मपाशसितास्तु ये ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥२६॥
शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः ॥ २७ ॥
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः ॥ २८ ॥
क्व नु तेषाममर्षश्च वीर्यं तेजश्च वर्तते ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ २९ ॥
मयाऽत्र शक्यं किं कर्तुं विराटे धर्मदूषके ।
यः पश्यन्मां मर्षयति वध्यमानामनागसम् ॥ ३० ॥
न राजा राजवत्किंचित् समाचरति कीचके ।
दस्यूनामिव धर्मस्ते नहि संसदि शोभते ॥ ३१ ॥
नाहमेतेन युक्तं वै हन्तुं मत्स्य तवान्तिके ।
सभासदोऽत्र पश्यन्तु कीचकस्य व्यतिक्रमम् ॥ ३२ ॥

[ नील० ] षष्ठे विषये देशपञ्चकव्यवधानेऽपि न स्वपिति तेषां सार्वभौमत्वात् । यद्वा बाह्येन्द्रियग्राह्यपञ्चविषयापेक्षया षष्ठे मनोमात्रग्राह्ये स्वप्नमनोरथादिरूपेऽपि विषये न स्वपिति भयार्दितः सन् किमुत लोके न स्वपितीत्यर्थः ॥ २२ ॥ सिताः बद्धाः ॥ २६ ॥

[ अर्जु० ] येषां वैरी न स्वपिति सुखं भूमिमुपस्पृशन् भूमिमपीत्यर्थः । अन्येत्वेवं पठित्वा व्याचक्षते 'येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन् । तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् । येषां युष्माकं मद्भर्तॄणां पाण्डवानां वैरी शत्रुः क्रिययोपजातोऽरिर्द्वेषीति यावत् न केवलमात्मविषये वसन् सन् न स्वपिति न निद्राति पलायितः सन् षष्ठेऽपि विषये द्वादशमण्डलाभिप्रायेण उदासीनस्याप्युदासीनदेशे वसन् न स्वपिति तेषां एवंविधानां भार्यां मां कीचकः पदावधीत् । अस्मात्तु(?)परो राजा उदासीनः एवं गणनया उदासीनस्याप्युदासीनो गणनीयः तस्य विषयस्त्वेवं गणनया षष्ठ इति भावः ॥ २२ ॥ धर्मपाशसिताः प्रतिज्ञापालनरूपधर्म एव पाशो रज्जुः तेन सिता बद्धाः षिञ् बन्धने इति धातोः ॥ २६ ॥ शरणं भवन्तीत्यन्वयः ॥ २७ ॥ अमर्षः कोपः, वीर्यं फलनिष्पत्तिपर्यन्ता शक्तिः । तेजः शत्रुपराभवसामर्थ्यम् । न परीप्सन्ति न रक्षन्ति ॥ २९ ॥ संसदि सभायाम् ॥ ३१ ॥

[ चतु० ] षष्ठेऽपि विषयेऽरिमित्रलक्षणे विजिगीषोर्मित्ररिपुरात्मनः षष्ठो भवति (?) सुखं भूमिमुपस्पृशन्निति वा पाठः ॥ २२ ॥ दुन्दुभेर्निर्घोष इव निर्घोषो यस्य ॥ २४ ॥ प्रपन्नानां ये शरणं भवन्तीत्यन्वयः ॥ २७ ॥ क्लीबाः विक्रमहीनाः ॥ २८ ॥ न परीप्सन्ति न प्रतिकुर्वते ॥ २९ ॥

[ सर्व० ] बाह्येन्द्रियग्राह्यपञ्चविषयापेक्षया षष्ठे मनोमात्रग्राह्ये स्वप्नमनोरथादिरूपेऽपि विषये न स्वपिति भयार्दितः सन् किमुत लोके न स्वपितीत्यर्थः ॥ २२ ॥ सिताः बद्धाः ॥ २६ ॥

[ दुर्घ० ] 'येषामरिर्न स्वपिति षष्ठेऽपि विषये वसन् । तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत्' । भीमसेनं द्रौपद्युवाच । येषां युष्माकं पाण्डवानां अरिः क्रिययोपजातः शत्रुः षष्ठेऽपि विषये द्वादशराजमण्डलमध्ये अरिमित्रोदासिनपार्ष्णिग्राहाऽऽक्रन्दसाराणां राज्ञां गणनायां षष्ठे विषये स्थितोऽपि भयान्न स्वपिति । सूतपुत्रः कीचकः अन्यत्सुगमम् ॥२२॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[ विरा० ] सुखं न स्वपिति येषां भूमिमुपस्पृशन् परामृषन्; षष्ठेऽपि विषये वसन् ( च ) स्वाम्यमात्यादीनां षष्ठे दुर्गे । यद्वा स्वराज्यावधिकषष्ठराजराज्ये ॥ २२ ॥ सिता बद्धाः ॥ २६ ॥ धर्मदूषणोऽधर्मः ॥ ३० ॥ एतेन हन्तुं युक्ता ॥ ३२ ॥

[ विष० ] पुरोवर्तिष्वपि युधिष्ठिरादिषु आकारगोपनाय यच्छद्मेनाह । त्रयोदशवर्षस्य अज्ञातवासलक्षणम् । षष्ठेऽपि विषये वसन् 'अरिर्मित्रमरेर्मित्रमित्रमित्रमतः परम् । तथारिमित्रमित्रं च विजिगीषोः पुरःस्थिताः' अरिप्रभृतीन् पञ्च देशानतिक्रम्य ॥ २२ ॥ सिताः बद्धाः षिञ् बन्धने ॥ २६ ॥ तेजः शत्रुपराभवसामर्थ्यम् । यथा 'अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥' अमर्षः कोपः । वीर्यं फलनिष्पत्ति·

२२ श्लोकात्प्राक् ग. व. बि. येषामवध्यो नैवारिः पदा भूमिमुपस्पृशन् । २४ व. श्रूयते महान् । २५ ग. व. ये लोकपूज्याः सततं । ज. यज्वानो ये च दान्ताश्च बलवन्तोऽभिमानिनः । ३० स्थाने ग. व. धर्मवैतंसिको नूनमधर्ममपि पूजयेत् । पश्यन्तो मर्षयन्ते ये वध्यमानां निरागसम् । ज. धर्मदूषणम् ३१ व. राजवन्नित्यं । ३२ व. युक्ता वै वस्तुं

कीचको न च धर्मज्ञो न च मत्स्यः कथंचन ।
सभासदोऽप्यधर्मज्ञा य एनं पर्युपासते ॥ ३३ ॥

**वैशम्पायन उवाच—**

एवंविधैर्वचोभिः सा तदा कृष्णाऽश्रुलोचना ।
उपालभत राजानं मत्स्यानां वरवर्णिनी ॥ ३४ ॥

**विराट उवाच—**

परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं नु स्यात्कौशलं मम ॥ ३५ ॥

**वैशम्पायन उवाच—**

ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन् ।
साधु साध्विति चाप्याहुः कीचकं च व्यगर्हयन् ॥ ३६ ॥

**सभ्या ऊचुः—**

यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।
परो लाभस्तु तस्य स्यान्न च शोचेत्कथंचन ॥ ३७ ॥
न हीदृशी मनुष्येषु सुलभा वरवर्णिनी ।
नारी सर्वानवद्याङ्गी देवीं मन्यामहे वयम् ॥ ३८ ॥

**वैशम्पायन उवाच—**

एवं संपूजयन्तस्ते कृष्णां प्रेक्ष्य सभासदः ।
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आगमत् ॥ ३९ ॥
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।
गच्छ सैरन्ध्रि माऽत्र स्थाः सुदेष्णाया निवेशनम् ॥ ४० ॥
भर्तारमनुरुन्धन्त्यः क्लिश्यन्ते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ४१ ॥
मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव ।
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ॥ ४२ ॥
अकालज्ञाऽसि सैरन्ध्रि शैलूषीव विरोदिषि ।
विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि ॥ ४३ ॥
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ।
व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम् ॥ ४४ ॥

**सैरन्ध्र्युवाच—**

अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी ।
तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ ४५ ॥

---

पर्यन्ता शक्तिः ॥ २९ ॥ मा मां मर्षयति क्षमते । मृष क्षमायाम् ॥ ३० ॥ एतेन न्यायेन कीचकेन वा ॥ ३२ ॥

[ नील० ] कौशलं साध्वसाधुनिर्णये इति शेषः । किं नु कथं नु ॥ ३५ ॥ माऽत्र स्थाः अत्र मा स्थाः मा तिष्ठ ॥ ४० ॥ शैलूषीव नटीव निर्लज्जा ॥ ४३ ॥ दुःखं दुःखयितारं व्यपनेष्यन्ति जीवितादिति शेषः ॥ ४४ ॥ घृणिनां दयावतां तेषामर्थे । तस्य तस्य सर्वस्यैव ते वध्याः स्युः ॥ ४५ ॥

[ अर्जु० ] अवरुन्धन्त्यः अनुवर्तमानाः वीरपत्न्यः वीरपत्न्य इत्यर्थे छान्दसः ॥ ४१ ॥ मन्ये उत्प्रेक्षे ॥ ४२ ॥ शैलुषी नटी नटभार्या इत्यर्थः । तद्वन्निर्लज्जेत्यर्थः ॥ ४३ ॥ अतीव तेषां घृणिनां मन्येऽहं धर्मचारिणी । कस्य कस्यैव तेऽवध्या येषां श्रेष्ठोऽक्षदेविता । घृणिनां करुणावतामतीव अतिशयेन घृणाविशेषणम् । कस्य कस्य प्राणिनः प्राणिमात्रस्य ते अवध्या अपि तु प्राणिमात्रस्य सर्वस्य ते वध्याः । तस्य तस्यैव ते वध्या इति पाठे स एवार्थः । तेषां केषामित्याह येषामिति ॥ ४५ ॥

[ चतु० ] विग्रहं कलहम् ॥ ३५ ॥ भूयोऽत्यर्थम् ॥ ३६ ॥ अत्र मा स्थाः इत्यन्वयः ॥ ४० ॥ अनुरुन्धन्त्योऽनुवर्तमानाः । उत अनन्तरम् ॥ ४१ ॥ शैलूषी नटी ॥ ४३ ॥

घृणिनां विचिकित्सताम् । यस्य तस्य पृथग्जनस्यापि । तस्य तस्येति वा पाठः ॥ ४५ ॥

[ सर्व० ] कौशलं साध्वसाधुनिर्णये ॥ ३५ ॥ माऽत्र स्थाः अत्र मा तिष्ठ ॥ ४० ॥ गन्धर्वाः गन्धर्वतुल्याः ॥ ४२ ॥ शैलूषी नटी ॥ ४३ ॥ दुःखं दुःखयितारं व्यपनेष्यन्ति जीवितात् ॥ ४४ ॥ तस्य तस्य सर्वस्येत्यर्थः ॥ ४५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे वि. प. षोडशोऽध्यायः ॥ १६ ॥

[ विरो० ] पत्नयः पत्न्यः ॥ ४१ ॥ शैलूषी नटी ॥ ४३ ॥ विप्रियं कृतं तमपि ॥ ४४ ॥ तेषामतीवघृणिनां दयावतां अहं धर्मचारिणी पत्नीति मन्ये । अतस्तस्य तस्य कनिष्ठस्य । ते मम विप्रियकर्तारः ( २ ) यस्य तस्य । यद्वा तस्य तस्य धर्मचारिणी अहमिति मन्ये । घृणिनां तेषां तेऽवध्याः यदि वध्या अभविष्यन्निदानीमेवानङ्क्ष्यन् ॥ ४५ ॥

[ विष० ] अधर्मज्ञा अनवसरज्ञाश्च ॥ ३३ ॥ भूयः अतिशयेन ॥ ३६ ॥ पूजयन्तः संपूजयन्तः प्रशंसन्तः ॥ ३९ ॥ भर्तारं कामयन्त्यः क्लेशान् सहन्ते । दमयन्तीवद्वीरभार्या अपि भर्तुः कारणेन दुःखानि सहन्त इत्यर्थः ॥ ४१ ॥ शैलूषीव नटीव निर्लज्जेत्यर्थः ॥ ४३ ॥ अतीव घृणि...

---

३४ ग. एवंविधं विलपती वाचाभिः कटुकाक्षरैः । व. कृष्णा सुमध्यमा । ३५ व. विवादं युवयोरहम् । ग. कार्यस्यार्थमविज्ञाय । ३७ व. यस्येयमसितापाङ्गी । ४० ग. व. सैरन्ध्रि मुक्तासि । ४१ व. भर्तारमनुवर्तिन्यः । ४३ ग. घ. शैलूषीव प्रधावसि । ४४ ग. गच्छ गच्छेति । ४५ ज. घृणिनां मन्येऽहं । व. तस्यैव वध्याहं; यस्य कस्य न वध्यास्मि; कस्य कस्य न ते वध्याः ।

**वैशम्पायन उवाच—**

इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम् ।
केशान्मुक्त्वा च सुश्रोणी संरम्भाल्लोहितेक्षणा ॥ ४६ ॥
शुशुभे वदनं तस्या रुदत्याः सुचिरं तदा ।
मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ॥ ४७ ॥

**सुदेष्णोवाच—**

कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।
कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ॥ ४८ ॥

**द्रौपद्युवाच—**

कीचको माऽवधीत्तत्र सुराहारीं गतां तव ।
सभायां पश्यतो राज्ञो यथैव विजने वने ॥ ४९ ॥

**सुदेष्णोवाच—**

घातयामि सुकेशान्ते कीचकं यदि मन्यसे ।
योऽसौ त्वां कामसंमत्तो दुर्लभामवमन्यते ॥ ५० ॥

**सैरन्ध्र्युवाच—**

अन्ये चैनं वधिष्यन्ति येषामागः करोति सः ।
मन्ये चैवाद्य सुव्यक्तं यमलोकं गमिष्यति ॥ ५१ ॥

इति श्रीमहाभारते विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः १७

द्रौपद्या कीचकवधं चिन्तयन्त्या महानिशि महानसं गत्वा भीमस्य प्रबोधनम् ॥ १ ॥ भीमेन तांप्रति आगमनप्रयोजनस्य प्रश्नः ॥ २ ॥

**वैशम्पायन उवाच—**

सा हता सूतपुत्रेण राजपत्नी यशस्विनी ।
वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी ॥ १ ॥
जगामावासमेवाथ सा तदा द्रुपदात्मजा ।
कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा ॥ २ ॥
गात्राणि वाससी चैव प्रक्ष्याल्य सलिलेन सा ।
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ॥ ३ ॥

---

मिति करुणावतामतिशयेन उपहासो गम्यते । तस्य च फलमाह—तस्य तस्येत्यादिना । सर्वस्याप्युपद्रवणीया जटासुरजयद्रथकीचकादीनां वध्या ॥ ४५ ॥

[लक्षा०] मन्ये न काल इत्यत्र गन्धर्वाणां प्रायशो दिवा संचाराभावादिति बाह्यो भावः ।......... संभङ्गः स्याद्दतो रात्रावेव भविष्यतीत्यान्तरो भावः ॥ ४२ ॥ शैलूषं विद्धि मां पुनरित्यत्र 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यभिधानाच्छैलूषो बिल्वः । बिल्वफलस्य सज्जनायोग्यत्वादसमत्तोऽपि तत्र योग्यं फलमिदानीं नास्तीति सूचनाय शैलूषोपमा ॥ ४३ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[नील०] पश्यतो राज्ञ इत्यनादरे षष्ठी राजानं लक्षीकृत्येत्यर्थः ॥ ४९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[अर्जु०] विरतमवरतम् ॥ ४७ ॥ अवमन्यते प्रार्थयते ॥ ५० ॥ आगोऽपराधः ॥ ५१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० षोडशोऽध्यायः ॥ १६ ॥

[चतु०] त्वा त्वाम् ॥ ४८ ॥ मा माम् ॥ ४९ ॥ आगोऽपराधः ॥ ५१ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[विरो०] मेघलेखा विनिर्मुक्ता पिनद्धा यत्र । मेघलेखास्थाने केशाः ॥ ४७ ॥ योऽसौ त्वां कामसंमत्तः; यस्त्वानवरतं मत्तः (दे) । दुर्लभाममरवल्लभाम् । अभि(दे)मन्यते प्रार्थयते ॥ ५० ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[विष०] रुदिताद्विरतं रोदनान्निवृत्तम् ॥ ४७ ॥ आगो दारधर्षणलक्षणोऽपराधः ॥ ५१ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[नील०] सेनावाहस्य सेनापतेः कीचकस्य ॥ १ ॥

[चतु०] सेनावाहस्य सेनापतेः ॥ १ ॥ शौचमेव व्याचष्टे गात्राणीति ॥ ३ ॥

[विरो०] निर्णयं खण्डनम् ॥ ३ ॥

[विष०] समज्वलत् परपुरुषस्पर्शदूषितत्वात् ॥ १ ॥

---

४६ व. 'मुक्त्वा तु सैरन्ध्री संरमा' । ४७ व. तस्या रुदिताद्विरतं; ज. रुदितायाश्चिरं; ग. रुदत्याः साम्बकं तथा । ग. रविमण्डलम् । ५० ज. कामसंपन्नः व. दुर्लभाममभिमन्यते । व. गृहं गताया मद्वाक्याचेन ते विप्रियं कृतम् ।

५१ क. अद्यैव तं हनिष्यन्ति । व. ज. मन्ये चाद्यैव । षोडशोऽध्यायः ॥ १६ ॥
१ च. राजपुत्री सुदुःखिता; व. राजपुत्री सुमध्यमा; राजपुत्री समज्वलत् ।
३ व. दुःखस्य निष्कृतिम् ।

किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।
इत्येवं चिन्तयित्वा सा भीमं वै मनसाऽगमत् ॥ ४ ॥
नान्यः कर्ता ऋते भीमान्ममाद्य मनसः प्रियम् ।
तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ॥ ५ ॥
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती ।
भवनं भीमसेनस्य क्षिप्रमायतलोचना ॥ ६ ॥
दुःखेन महता युक्ता मानसेन मनस्विनी ॥ ७ ॥

**सैरन्ध्र्युवाच—**

तस्मिन् जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत्कर्म कृतवानद्य कथं निद्रां निषेवसे ॥ ८ ॥

**वैशम्पायन उवाच—**

एवमुक्त्वाऽथ तां शालां प्रविवेश मनस्विनी ।
यस्यां भीमस्तथा शेते मृगराज इव श्वसन् ॥ ९ ॥
तस्या रूपेण सा शाला भीमस्य च महात्मनः ।
संमूर्छितेव कौरव्य प्रजज्वाल च तेजसा ॥ १० ॥
सा वै महानसं प्राप्य भीमसेनं शुचिस्मिता ।
सर्वश्वेतेव माहेयी वने जाता त्रिहायणी ।
उपातिष्ठत पाञ्चाली वासितेव वरर्षभम् ॥ ११ ॥

[नील०] यः तत्कर्म पदाहतिरूपं कृतवान् तस्मिन् जीवति ॥ ८ ॥ संमूर्छितेव वृद्धिं शोभारूपां प्राप्तेव प्रजज्वाल अशोभत ॥ १० ॥ सर्वश्वेतेवेति । पाञ्चाली द्रौपदी वरर्षभं वरणीयं पतिं श्रेष्ठं भीमसेनमुपलक्ष्य वासितेव पुष्पिणीत्वेन कामातुरेव उपातिष्ठत समीपे स्थितवती वस्तुतो न कामातुरा किंतु द्वेषातुरैवेति भावः । तत्र दृष्टान्तद्वयम् इवशब्दः काकाक्षिवदुभयत्र संबध्यते सर्वश्वेतेव माहेयीव चेति । सर्वश्वेता बकी यथा कामातुरा वरर्षभं पतिमिति एकः । तस्याः कामातुरत्वे हेतुः वने जातेति जले जाता तेन जलसामीप्येन लब्धाहारत्वेन उन्मत्तत्वं सूच्यते । तथा माहेयी गौः साऽपि वासिता सती वरर्षभं साण्डं बलीवर्दम् । तस्या अपि वासितात्वे विशेषणं त्रिहायणीति त्रिवर्षा हि गौर्यौवनारूढा कामातुरा च भवति । अन्ये तु 'श्वेतः सिते राजहंसे कैलासे द्वीपभूपयोः' इति कोशमुदाहृत्य सर्वश्वेता हंसीति व्याचक्षते । तत्र सर्वपदं व्यर्थं हंसस्य लोहितलोचनास्यचरणत्वात्प्रतिकूलं च । यद्यपि 'त्रिहायणी त्रिवर्षा गौः' इति च कोशात्त्रिहायणापदेनैव गौर्लभ्यते तथापि तत्कामातुरत्वज्ञापनार्थमुपक्षीणं सद्विशेष्यसमर्पकं पदान्तरमपेक्षत एवेति न व्यर्थविशेषणत्वम् । अन्ये व्याख्यानप्रकाराः सर्वेऽनेनैव दोषेण ग्रस्ता इत्युपेक्षिताः ॥ ११ ॥

[अर्जु०] तस्या रूपेण सा शाला भीमस्य च महात्मनः संमूर्छितेव कौरव्य प्रजज्वाल च तेजसा ॥ तस्या द्रौपद्या भीमस्य रूपेण संमूर्छितेव व्याप्तेव सा शाला प्रजज्वालेति संबन्धः । संपूर्वो मूर्छिः व्याप्त्यर्थोऽपि 'संमूर्छनमभिव्याप्तिः' इति कोषः ॥१०॥ सा वै महानसे प्राप्येति । सा पाञ्चाली महानसे पाकस्थाने भीमं प्राप्य उपातिष्ठत, का कमिव वासिता हस्तिनी महागजमिव, कीदृशे महानसे सर्वश्वेते सर्वतो निर्मले, कीदृशी अवमाहेयी अवमो गर्ह्यः कुत्सित इति वर्तुलार्थः, अवमः परपुरुषत्वेन गर्ह्यः कीचकादिकामुकः आहेयवत्सर्पशरीरं सर्पविषमिव वा यस्याः सा तथा, पुनः कीदृशी वने जाता वनं जलं कार्ये कारणोपचाराद्वह्निरपि वनम्, अद्भ्योग्निर्वायुतः क्षत्रमिति दर्शनाज्जलानलयोः कार्यकारणता प्रसिद्धैव, वने वह्नौ याजोपयाजयोर्मन्त्रप्रभावाज्जातेति भावः । त्रिहायणी त्रीन् धर्मार्थकामान् हाययति वर्धयतीति तथा, हि गतौ वृद्धौ चेत्यस्य रूपम् । नारीणां त्रिवर्गमूलता प्रसिद्धैव सर्वशास्त्रेषु । अथवा सर्वश्वेतेव सर्वै रूपाभिजनकर्मभिः श्वेता निर्मला, इव एवार्थे, माहेयी महीचारिणी त्रिहायणी चत्वारिंशद्वर्षदेशीया मध्यवयस्केत्यर्थः । मनुष्याणामायुर्नियतं कलियुगे विंशत्यधिकशतवर्षाणि । समाः षष्टिर्द्विघ्ना इति वचनात् । यद्वा (?तः) पञ्चपञ्चाशतो वर्षाणामनन्तरं नारी न गम्या भवति प्रजननिषेधात् । ततश्च महावृषं महोक्षम् । यथोपदेशं यथामति च व्याख्यातं परमार्थं भगवान् व्यासो वेद ॥ ११ ॥

[चतु०] द्विषि रिपौ ॥ ७ ॥ संमूर्च्छितेव प्रतिबिम्बितेव ॥ १० ॥ पाञ्चाली भीमसेनमुपातिष्ठतेत्यन्वयः माहेयी गौः । वरर्षभं महावृषमित्युपमानम् । तत्र सर्वैर्जन्मकर्मभिश्च श्वेता विशुद्धा पाञ्चाली । पक्षे सर्वत्र शुद्धा । अथवा हिंस्रवचनोऽयं सर्वशब्दः । शृ हिंसायां दन्त्यादिर्वा । सर्वेण हिंस्रेण शुना इता परिगता अतः खिद्यमाना वने वह्नौ जाता । 'वनं स्त्रीहृदये योधे वह्नौ वारिणि कानने' इत्यभिधानात् वनेऽरण्ये । त्रिहायणी हायनशब्दो युगेऽपि । तथाच 'कृते युगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदी जाता तेन कृष्णा त्रिहायणी ॥' पक्षे त्रिवर्षजाता, गौर्हि त्रिवर्षजाता यौवनं भजते । वासिता कीचकवधवासनावती । महागजमिति वा पाठः । वासिता करिणी महागजमित्युपमानम् । महे यज्ञे जाता माहेयी । मही नाम काचिन्नदी तत्र जाता त्रिहायणीत्युपमानपक्षे व्याख्यातव्यः । त्रिहायणी तृतीये वयसि यौवने स्थिता समानमन्यत् ॥ ११ ॥

८ ज. कृतवत्यद्य कथं । ११ व. महानसे । क. च. ज. वासितेव महागजम्; घ. व. महर्षभम् ।

[सर्व०] सर्वश्वेता वकी, तथा माहेयी गौः । वासितेव कामातुरेव ॥ ११ ॥

इति सर्वज्ञनारायणकृतौ भारतार्थप्रकाशे वि. प. सप्तदशोऽध्यायः ॥ १७ ॥

[दुर्घ०] सर्वश्वेतेव माहेयी वने जाता त्रिहायनी इति सिंहवच्च नरर्षभम् । नृत्यशालायां द्रौपदीभीमसेनसमागमे पाञ्चाली द्रौपदी मध्यमं कुन्तीपुत्रापेक्षया भीमसेनं परि सर्वतोभावेन स्वजति आलिङ्गति । कतिचित्कालविच्छेदेन कामस्योत्कटत्वात् कार्याधिक्याच्च । मध्यमं मध्यमवयसं वा, युधिष्ठिरार्जुनयोर्वा कुन्तीपुत्रयोर्मध्ये जातम्, अथवा मध्ये मकारो यस्य स मध्यमः । पाण्डोः क्षेत्रजं पुत्रम् । किंभूता द्रौपदी सर्वशुक्ला सर्वै रूपाभिजनकर्मभिः [ श्वेतरूपा कुलद्रविणकर्मणातिनिर्मला ] शोभनाचारा इवशब्द एवार्थः । माहेयी महिचारिणी महनीयरूपा वा । वनेजाता वनमग्निस्तस्मिन्नुद्भूता त्रिहायनी पञ्चपञ्चाशतोऽब्दादूर्ध्वं नारी न गम्या भवती प्रजननिषेधात् ततश्च तृतीयभाग ऊनविंशतिवर्षाणि तत्र स्थिता त्रिहायनी । ननु युक्तिविरुद्धमेतत् । वन एव तावत्तस्याश्चतुर्दश वर्षाणि गतानि । पूर्वं तु जतुगृहान्निःसृत्य सा स्वयंवरात्प्राप्ता सयौवनैव, पुनरानीतया सह चतुर्दशवर्षाणि जुष्टानि पाण्डवैरतः कथमुच्यते सोनविंशतिवर्षेति तस्माज्जनमेजयव्याख्या न चोचिता । [अन्यथाव्याख्यानं तु–] त्रिहायनी मध्यमवयःस्था शतवर्षत्रिभागे विंशत्यधिकशतवर्षत्रिभागे वा द्वात्रिंशद्वर्षाभ्यन्तरे चत्वारिंशद्वर्षाभ्यन्तरे वा वर्तमाना । भोजस्त्वाह सर्वशुक्लेव राजहंसीव माहेयी महनीयतरा पक्षे मानससरसो महीं प्राप्ता वने वह्नौ जाता । पक्षे जले जाता । त्रिहायनी पतिपितृमातृसौभाग्येषु निःसीमाहंकारवती । हायनं व्रीहितेजसोरित्यभिधानात् । पक्षे त्रिवर्षीया । श्वेतशब्दश्च राजहंसे व्याख्यातः । उक्तं च 'श्वेतः सिते राजहंसे कैलासे द्वीपभूपयोः' इति । अथवाऽयमर्थः—महीभवा लक्ष्मीरिव सर्वाङ्गशोभना, वने जाता अब्धिभवा श्रीरिव त्रिहायनी त्रिषु लोकेषु पूज्यतमा एवंभूता लक्ष्मीरिव पाञ्चाली समालिङ्गितवती भीमम् । अथवा वह्निकुण्डोद्भवात्प्रभृति वर्षगणना न द्रौपद्याः किंतु स्वयंवरात्प्रभृति । तेन चोनविंशतिवर्षाण्येव प्राप्तानीत्यर्थः ॥११॥

[विरा०] एवमुक्त्वा मनसा ॥९॥ संमूर्छनमभिव्याप्तिः ॥ १० ॥ माहेयी गौः । वने चरणनिमित्तं याता त्रिहायणी वयःसंधौ वर्तमाना, वासिता कामवासनावती इव सादृश्ये स्वसदृशं महावृषम् २ महागजम् । महति पर्वते जातं तज्जातवृषस्यातिबलवत्तरत्वात् । करेणुपक्षे इव सदृशीं (मां ?) शोभा जिहीते गच्छति इवमाही करिणी तस्याः रूपपत्यं (इव ?)माहेयी, अत्रिहायनी किंतु तरुणी महान् वृषो मदवृष्टियस्मात्तम् । द्रौपदीपक्षे सर्वं कर्म श्वेतं सात्विकं यस्याः । माहेयी वेद्यां जातत्वात् । वनेऽग्नौ 'वनं स्त्रीहृदये योधे वह्नौ वारिणि कानने' । यद्वा (वने) वनवासनिमित्तं त्रीन् रागद्वेषमोहान् जहाति त्रिहो युधिष्ठिरः अयनं यस्याः । महान् वृषो धर्मोऽस्य तं भीमम् । महेन उत्सवेन अगजं पर्वतजम् । वासिता कीचकवधवासनावती ॥ ११ ॥

[विष०] द्रौपदी दुःखेन पादप्रहारलक्षणेन ॥ ७ ॥ संविवेश सुष्वाप ॥९॥ तस्या द्रौपद्याः ॥ १० ॥ सा द्रौपदी महानसं प्राप्य भीमसेनमुपातिष्ठत समीपमगात् । शुचिस्मितेति उत्तमस्त्रीलक्षणम् । यद्वा पराभवदुःखोद्धरणं वीरं भीमं प्राप्य शुचि स्मितं यस्यास्तथा सती । सर्वश्वेता सर्वेषु जन्मकर्मशरीरेषु श्वेता निर्मला दूषणाभावात् । तथा माहेयी पूज्या । महपूजायाम् । उत्सवयुक्ता वा । वन–षण संभक्तौ वन्यन्तेऽवदानैर्देवताः संविभज्यन्तेऽस्मिन्निति वनं, हवनं यज्ञकर्मेत्यर्थः । अत्र हकारवर्णागमः । वने हवनेऽत्र हकारवर्णलोपः । तत्र वने हवने यज्ञे जाता । माहेयी मही पृथ्वी तस्यां जाता माहेयी वेद्यां जातत्वात् । त्रिणि ह आयनानि आगमनानि यस्याः सा त्रिहायनी । तथा च 'कृते युगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदी जाता तेन कृष्णा त्रिहायनी ॥ वासिता स्याद्रतार्थिनी । कीचकवधकामातुरा । रात्रौ गमनात् । न पुनः कामसेवनाय । तस्य अज्ञातवासे निषिद्धत्वात् । वासितेव वस निवासे विराटभुवने स्थापिता । यद्वा वासिता वस आच्छादने वासिता सैरन्ध्रीवेषेणाऽऽच्छादिता । महांश्चाऽसौ ऋषभश्च महर्षभः महता श्रेष्ठस्तम् । यद्वा महावृषमिति पाठे महान्वृषः क्षात्रो धर्मो यस्य स महावृषः । वृषः स्यान्मैथुनेच्छाया । कीचकवधकामिनं भीममिति द्रौपदीपक्षे । यद्वा महता ऋषभेण स्यतीति (?) महर्षभो भीमः । महावृषं वा पाठः । अथ गोपक्षे माहेयी गौर्यथा महावृषमुपतिष्ठते । सर्वश्वेता सर्वशुक्ला । वने विपिने जाता त्रिहायणी सितवृषभोपगता । माहेयी पूज्या । वासिता शब्दायमानेति मुख्यपदम् । यद्वा सर्वत्र श्वेता श्वभिः शुना वा इता परीता श्वभिरुपद्रुता वासिता भम्भायमाना वृषभमुपतिष्ठते तथा कीचकोपद्रुता कृष्णा भीमसेनं सङ्गता । कीचकस्य शुना सहोपमानमित्यर्थः ॥ ११ ॥

[लक्षा०] प्रादुर्भूतक्षणा रात्रौ विहाय शयनं स्वकमित्यत्र रात्रौ प्रादुर्भूतक्षणा लब्धावसरा ॥ ५ ॥ तत्कर्म कृतवतीत्यत्र तत् मम पादघाताख्यं कर्म कृतवति तस्मिन् कीचके ॥ ८ ॥ वृषेन्द्रमिव माहेयीत्यत्र 'माहेयी सौरभेयी गौः' इत्यभिधानान्माहेयी गौः वने वृद्धा अभिवृद्धा । त्रिहायनी सुरभिकुमारी गौर्वृषेन्द्रमिवेति योजना ॥ ११ ॥

१ व्याख्यानमेवोचितमिति पाठान्तरम् ।

सा लतेव महाशालं फुल्लं गोमतितीरजम् ।
परिष्वजत पाञ्चाली मध्यमं पाण्डुनन्दनम् ॥ १२ ॥
बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता ।
सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ॥ १३ ॥
भीमसेनमुपाश्लिष्यद्धस्तिनीव महागजम् ।
वीणेव मधुरालापा गान्धारं साधु मूर्छती ॥
अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ १४ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ।
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ॥ १५ ॥
स संप्रहाय शयनं राजपुत्र्या प्रबोधितः ।
उपातिष्ठत मेघाभः पर्यङ्के सोपसंग्रहे ॥ १६ ॥

[नील०] मध्यमं पाण्डुनन्दनं भीमसेनम् । यमयोः सहजातत्वेन पौर्वापर्याभावात्तौ कनिष्ठावेव युधिष्ठिरो ज्येष्ठ एव । मध्यमत्वं भीमार्जुनयोरेव विश्रान्तं तत्रापि अत्र प्रकरणादर्जुनस्य संप्रति पुंस्त्वाभावाच्च मध्यमत्वं भीमसेने एव मुख्यमित्याशयेनैवैतदुक्तम् । परिष्वजत पर्यष्वजत आलिङ्गितवती ॥ १२ ॥ गान्धारं स्वरविशेषं मूर्छती मूर्छयन्ती ॥ १४ ॥ सोपसंग्रहे सतूलिके ॥ १६ ॥

[अर्जु०] सा लतेवेत्यादि । बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता । सा पाञ्चाली द्रौपदी परिष्वजति सर्वतोभावेनालिङ्गति । लतावेष्टितकमालिङ्गनविशेषः । कतिचित्कालविच्छेदेन कामस्योत्कटत्वात् कीचकवधकार्याधिक्याच्च लतेव कोमलत्वाच्च यथा लता महाशालं बृहच्छालवृक्षं फुल्लं बृहदवयवं गोमतितीरजं गोमती नदी तस्याः तीरजातं महाशालं तत्र जातत्वात्, भीमपक्षे गौः पृथिवी सास्यास्तीति गोमान् राजा पाण्डुरित्यर्थः तस्या भार्या गोमती तस्यास्तीरे कुक्षौ जातम् । यद्वा गौर्वाग् देवताह्वानसामर्थ्ययुक्ता वा शक्ता (?) इत्यर्थः। तीरः पवनः तरणयोगात् ताभ्यां जातम् 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः केचिदाहुः—गौर्वज्रं रश्मिर्वा विद्यतेऽस्य गोमानिन्द्रः सूर्यो वा 'पुंयोगादाख्यायाम्' स्त्रीप्रत्यये कुन्ती वाच्या । यद्वा फुल्लं पुलकितं परिरम्भात् स्त्रीपरिष्वङ्गेण प्रायः पुंसो लोमहर्षणं भवति । बाहुभ्यां परिरभ्य आलिङ्ग्य एनं भीमं प्राबोधयत् । ननु शयानं न प्रबोधयेदिति स्मृतिः ? कार्यगौरवात् शयानमपि प्रबोधयेत् । परिरभ्य इत्यनुरागसूचनम् । मध्यमं मध्यमवयस्कं, युधिष्ठिरार्जुनयोर्मध्ये जातं वा, मध्ये मकारो यस्येति वा, भीमसेनमित्यर्थः ॥ १२ ॥ वीणेव मधुराभाषा गान्धारं साधु मूर्छिता । निषादादीनां तन्त्रीकण्ठोत्थितानां स्वराणां तृतीयमित्यर्थः । साधुगान्धारमूर्छितेति पाठे गान्धारः सुकुमारः एव गीयते तस्य मूर्छितं मूर्छना यस्यां सा ॥ १४ ॥ सोपसंग्रहे सोपधाने ॥ १६ ॥

[चतु०] महाशालं महावृक्षं लतेव फुल्लमुद्रिक्तावयवं भीमम् । पक्षे पुष्पितम् । गोमती कुन्त्याः नामान्तरम् । तीरो वायुः । 'तीरो वाते तटे' इत्यभिधानात् । तयोर्जातं गोमत्यामधस्तीरे जातम् ॥ १२ ॥ गान्धारं स्वरविशेषं साधु मूर्च्छती ॥१४॥ सोपसंग्रहे सोपधाने ॥ १६ ॥

[दुर्घ०] 'सा लतेव महाशालं फुल्लं गोमतितीरजम् । बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता' इति, लतावेष्टितकमालिङ्गनविशेषः । तथा लता शालवने किलास्ति । सा द्रौपदी भीमसेनं प्राबोधयत् । सुप्तं न प्रबोधयेदित्याचारस्थितावपि कार्यगौरवादुपपन्नम्, बाहुभ्यां परिरभ्येत्यनुरागातिशयसूचनम् । यथा लता महाशालं महाशालवृक्षं फुल्लं पुष्पोपचितं पक्षे फुल्लं बृहदवयवं गोमतीनाम नदी तस्यास्तीरजमिति अत्र ङ्यापोरिति ह्रस्वः । तत्र किल बृहच्छालवनमस्ति । पक्षे गोमती कुन्ती तीरः पवनः पुष्पितत्वेन लोचनविकासो दर्शितः ताभ्यां जातम् । देवस्वामिमतमेतत् ॥ १२ ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[विरो०] गवा वेदवाण्या मतिर्यत्र गोमती गङ्गा । मध्यममवृद्धम् । पाण्डुना पक्वफलेन नन्दयति । भीमपक्षे महती शाला शयनीयत्वेन यस्य । फुल्लं विकसितं वदनम् । गवि स्वर्गे मतिर्यस्याः सा गोमतिः कुन्ती तस्यां तीरात् वाताज्जातं तीरो वाते । मध्यमं युवानम् ॥ १२ ॥ प्राबोधयत् आवश्यककार्यानुरोधात् ॥ १३ ॥ गान्धारं रागविशेषम् । मूर्च्छितां मच्छनां प्राप्ता वीणा । अथ च गन्धस्य निवासो गान्धश्चन्दनादिः तेषामारो गमनं यत्र चन्दनादिलिप्तं भीमं मूर्च्छिता दुःखिता ॥ १४ ॥ आलभ्य पीडयित्वा ॥ १५ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

१२ च. ङ. परिष्वजति । १३ च. ज. सुप्तं प्राबोधयत्पतिम् । १४ व. °लापा गान्धारस्वरमूर्छिता । व. भीमसेनममर्षिताः; °सेनमरिन्दमम् । १६ व. उपातिष्ठदमोघाशः; ज. उपातिष्ठत भीमोऽसौ ।

१४ श्लोत्तरम् च. ज.

परिसंस्पृश्य पाणिभ्यां सुप्तं प्राबोधयत्तदा ।
श्रीरिवेशं महोत्साहा कृष्णं सुप्तं महार्णवे ॥
श्यामा सुकेशी शयने शयानं मृषभेक्षणम् ।
सा शचीव सहस्राक्षं रुद्राणीव महेश्वरम् ॥
सावित्रीव च ब्रह्माणं गुहं षष्ठीव भामिनी ।
भीमं प्राबोधयत्कृष्णा लक्ष्मीर्दामोदरं यथा ।
देवगर्भसमाभासं प्रियं प्रियंवदा प्रिया ॥

अथाब्रवीद्राजपुत्रीं कौरव्यो महीषीं प्रियाम् ।
केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकम् ॥ १७ ॥
न ते प्रकृतिमान्वर्णः कृशा पाण्डुश्च लक्ष्यसे ।
आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा ॥ १८ ॥
सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
यथावत्सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत् क्षमम् ॥१९॥
अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ॥२०॥
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव पुरा नान्येन बुध्यते ॥ २१ ॥

इति श्रीमहाभारते विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः १८

द्रौपद्या भीमस्यामर्षजननाय द्यूतसभायामाकर्षणादिस्मारणपूर्वकं कीचककृतस्वाभिभवस्य कथनम् ॥ १ ॥ पूर्वविभवमनुस्मृत्य संप्रति पाण्डवान्प्रति शोचनं च ॥ २ ॥

**द्रौपद्युवाच—**

अशोच्यत्वं कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन्सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि॥१॥
यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् ।
सभापरिषदो मध्ये तन्मां दहति भारत ॥ २ ॥
पार्थिवस्य सुता नाम का नु जीवति मादृशी ।
अनुभूयेदृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ३ ॥
वनवासगतायाश्च सैन्धवेन दुरात्मना ।
परामर्शो द्वितीयो वै सोढुमुत्सहते तु का ॥ ४ ॥

---

[विष०] स्वभावाद्रोमतीतीरे तरवः सरसपल्लवोल्लासिनो भवन्तीत्यर्थः ॥ १२ ॥ गान्धारः स्वर्ग एव गीयते तस्य मूर्च्छितं मूर्च्छना यस्यां मूर्च्छनायां सा। द्रौपद्या मधुरभाषितं वीणोपमितम् । (तत् प्रार्थनालक्षणं पादतानलक्षणं च ?) ॥ १४ ॥ सोपधाने गण्डोपधानाऽऽच्छादनयुक्ते ॥ १६ ॥

[लक्षा०] मृगराजं यथा दृप्तमित्यत्र मृगराजं श्रेष्ठमृगम् । मण्डनी वनं मण्डयती मृगवधूरिव ॥ १३ ॥ दिशांगजसमाकारमित्यत्र दिशांगजो दिग्गजः । तस्य समः आकारो यस्य तं भीम् ॥ १४ ॥

इति श्रीमहाभारतव्याख्यानें वादिराजविरचिते लक्षालंकारे विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[नील०] विद्यां जानीयाम् ॥ १८ ॥ ज्ञास्यामि उपायं चिन्तयिष्यामि क्षमं योग्यम् ॥ १९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अर्जु०] परिशेषेण विद्यां जानीयाम् ॥ १८ ॥ विश्वास्य आश्वासस्थानम् ॥ २० ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[चतु०] द्वेष्यमप्रियम् ॥ १९ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[विष०] त्वरितेव उत्सुकेव । अर्थेन प्रयोजनेन ॥१७॥ न प्रकृतिमान् न स्वाभाविकः । 'विद्यां' विद्लृ लाभे लभाम ॥ १८ ॥ ज्ञास्यामि जानीमः तत्परं निश्चयं करणीयतामकरणीयतां वेत्यर्थः ॥१९॥ आपदो वैषम्यात् कष्टात् ॥२०॥ अन्योऽवबुध्यते अन्यो ज्ञास्यति । यावत्पुरानिपातयोर्लट् । इति भविष्यन्त्याः स्थाने वर्तमाना अवबुध्यत इति ॥२१॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[नील०] सभा शाला तस्यां परिषत् जनसमाजस्तस्य मध्ये तदा द्यूतकाले ॥ २ ॥ सैन्धवेन जयद्रथेन ॥ ४ ॥

[अर्जु०] परामर्षमभिभवम् ॥ ४ ॥

[चतु०] मा मां प्रातिकामी सुयोधनसूतः । परिषदो मध्ये सभामध्ये ॥ २ ॥ सैन्धवेन जयद्रथेन । परामर्श ग्रहणम् ॥ ४ ॥

[सर्व०] प्रातिकामी दुर्योधनसूतः सभा शाला तस्यां परिषत् जनसमाजः ॥ २ ॥ सैन्धवः जयद्रथः ॥ ४ ॥

[विष०] दासीप्रवादेन दासीसंबोधनेन प्रातिकामी दुर्योधनसारथिः स एव प्रथममाकारणाय दुर्योधनेन प्रहितः । अत एव अप्रहितत्वाद्दुःशासननाम न गृह्णाति । सभा द्यूतमिति परिसीदन्तीति परिषदः परिजनमध्य इत्यर्थः ॥ २ ॥ द्रौपदीम् अन्यत्र विना । नु प्रश्ने । अपि तु न काऽपि सहते ॥ ३ ॥

---

१९ ग. घ. व. शुभं वा यदि वाऽशुभम् । ज. श्रुत्वा ध्यास्यामि यत् । ग. घ. ब. ज. यत्परम् । २० ग. मोक्षयिष्याम्यसंशयम् । २१ व. पुरा नान्योऽवबुध्यते; पुरा त्वन्योऽवबुध्यते; क. ज. यावदन्यो न बुध्यते ॥सप्तदशोऽध्यायः ॥ १७ ॥

३. व. नु जीवेत मादृशी । ४ व. वनवासगतानां च । ग. घ. व. परामर्शो द्वितीयं च ।

मत्स्यराज्ञः समक्षं तु तस्य धूर्तस्य पश्यतः ।
कीचकेन परामृष्टा का नु जीवेत मादृशी ॥ ५ ॥
एवं बहुविधैः क्लेशैः क्लिश्यमानां च भारत ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥६॥
योऽयं राज्ञो विराटस्य कीचको नाम भारत ।
सेनानीः पुरुषव्याघ्र श्यालः परमदुर्मतिः ॥ ७ ॥
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥ ८ ॥
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ९ ॥
भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।
यस्याऽस्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥१०॥
को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह ।
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ॥ ११ ॥
यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनम् ।
सायंप्रातरदेविष्यदपि संवत्सरान्बहून् ॥ १२ ॥
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्वतरसंघांश्च न जातु क्षयमावहेत् ॥ १३ ॥
सोऽयं द्यूतप्रवादेन श्रियः प्रत्यवरोपितः ।
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् १४
दश नागसहस्राणि हयानां हेममालिनाम् ।
यं यान्तमानुयान्तीह सोऽयं द्यूतेन जीवति ॥ १५ ॥
रथाः शतसहस्राणि नृपाणाममितौजसाम् ।
उपासन्त महाराजमिन्द्रप्रस्थे युधिष्ठिरम् ॥ १६ ॥
शतं दासीसहस्राणां यस्य नित्यं महानसे ।
पात्रीहस्तं दिवारात्रमतिथीन् भोजयन्त्युत ॥ १७ ॥
एष निष्कसहस्राणि प्रदाय ददतां वरः ।
द्यूतजेन ह्यनर्थेन महता समुपाश्रितः ॥ १८ ॥

---

[नील०] प्रव्रज्यं प्रव्रजनम् । 'व्रजयजोर्भावे क्यप्' तस्मै प्रव्रज्याय ॥ ११ ॥ निष्कः सुवर्णपलं तेषां सहस्रेण ॥१२॥ रुक्मं स्वर्णरूपं हिरण्यम् । 'तस्माद्रजत हिरण्यमश्रुजम्' इति श्रुतौ हिरण्यशब्दस्य रजतेऽपि दर्शनात् । यानं गजादि । युग्यं युगोपेतं रथशकटादि । अश्वा वडवा ॥ १३ ॥

[अर्जु०] धूर्तस्य कितवस्य ॥ ५ ॥ दुर्द्यूतदेविनं गर्ह्यद्यूतेन व्यवहरन्तम् ॥ १० ॥ प्रव्रज्याय निजदेशं त्यक्त्वा वनवासाय अज्ञातवासाय ॥ ११ ॥ यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनम् । प्रातर्देयमदेविष्यदपि संवत्सरान् बहून् ॥ रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् । अश्वाश्वतरसंघाश्च न जातु क्षयमावहेत् ॥ निष्कसहस्रेण सुवर्णपलसहस्रेण सारवद्रत्नानि तेनेति शेषः । प्रातर्देयमिति समयेन यद्यदेविष्यत्तदा बहून् वत्सरान् अदेविष्यत् अपिः संभावनायाम् । निष्कसहस्राणीति पाठः सुवर्णपलसहस्राणि वेत्यर्थः । हिरण्यं घटिताघटितसुवर्णरजतादि भेदः । 'स्यात् कोषश्च हिरण्यं च हेमरूप्ये कृताकृते' इत्यमरः ॥ अथवा रुक्मं लौहं ताम्रादिकमित्यर्थः 'रुक्मं चले लौहमिति मेदिनी । हिरण्यं सुवर्णमित्यदोषः । यानं गजादि युगमर्हति युग्यो रथ इति भेदः । अश्वाश्वतर एडक इति यस्य प्रसिद्धिः । अश्वतरः सदश्वः । 'सदश्वेऽश्वतरो ज्ञेय एड्कः स्याच्च कर्णयोः' इति शब्दमहार्णवः । आवहेत् प्रापयेत् युधिष्ठिर इति शेषः ॥ १२ ॥ १३ ॥ द्यूतप्रवादेन द्यूतभावेन प्रत्यवरोपितस्त्यक्तः ॥ १४ ॥ दशनागसहस्राणि पद्मिनां हेममालिनामिति । पद्मिनामिति दशनागसहस्राणीत्यत्र नागानामित्यत्र समासान्तर्गतस्य विशेषणम् । पद्मकं विन्दुजालं तद्विद्यते एषामित्यर्थः बिन्दुमालिनामित्यर्थः ॥१५॥

[चतु०] यानं गजादि । युग्यं रथादि ॥१३॥ प्रत्यवरोपितः वियोजितः ॥ १४ ॥ पद्मिनां विन्दुजालकशालिनाम् ॥ १५ ॥

[सर्व०] हिरण्यं रजतं युग्यं युगोपेतं रथादि अश्वतरो गर्दभ्यामश्वादुत्पन्नः ॥ १३ ॥

[विरो०] फलं कर्कट्यादीनाम् ॥९॥ प्रकर्षेण व्रज्या यत्र प्रव्रज्यं वनम् ॥११॥ सायंप्रातः; प्रातर्देयम् ( अ ) ॥ १२ ॥ हिरण्यं रजतम् । अश्वतर एडकः ( अ ) आवहेत् प्रापयेत् युधिष्ठिरः (शे) ॥ १३ ॥ पद्मिनां संख्याविशेषविशिष्टानां मध्ये दश ॥ १५ ॥

[विष०] धूर्तस्य कितवस्य युधिष्ठिरस्य ॥ ५ ॥ यदि सुवर्णपलसहस्रेणाऽदेविष्यत् प्रतिदिनं ततः बहून्संवत्सरानदेविष्यत् । क्रियातिपत्तिपठनम् । सारवद्धनं रत्नसमूहादि । इदं सायं देयम्, इदं प्रातर्देयमिति । अपिः संभावनायाम् ॥ १२ ॥ अघटितं रुक्मं, हितरमणत्वाद्धिरण्यं

---

५ क. व. कीचकेन पदा स्पृष्टा । ६ व. एवं बहुविधं क्लिष्टां क्लिश्यमानां च । ७ व. योऽयं राष्ट्रो विरा° । ग. व. कीचको नाम नामतः । ८ व. चरन्तीं राजवेश्मनि । १३ ग. दासीदासमजाविकम् । व. न जातु क्षयमानयेत् । १४ व. द्यूतप्रसादेन । १५ ज. ङ. ग. घ. च. पद्मिनां हेममालिनाम्; व. बलिनां हेम° । १६ व. ज. तथा शत°; घ. व. यथा शतसहस्राणि । व. नृणाममिततेजसाम् । व. उपातिष्ठन्त राजान° । १७ ग. घ. व. शतं दासीसहस्राणि । १८ घ. हेमनिष्कसहस्राणि । व. समुपावृतः ।

एनं हि स्वरसंपन्ना बहवः सूतमागधाः ।
सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः ॥ १९ ॥
सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
तपःश्रुतोपसंपन्नाः सर्वकामैरुपस्थिताः ॥ २० ॥
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ २१ ॥
अप्रतिग्राहिणां चैव यतीनामूर्ध्वरेतसाम् ।
दश चापि सहस्राणि सोऽयमास्ते नरेश्वरः ॥ २२ ॥
आनृशंस्यमनुक्रोशं संविभागस्तथैव च ।
यस्मिन्नेतानि सर्वाणि सोऽयमास्ते नरेश्वरः ॥ २३ ॥
अन्धान्वृद्धांस्तथाऽनाथान्बालान् राष्ट्रेषु दुर्गतान् ।
बिभर्ति विविधान् राजा धृतिमान्सत्यविक्रमः ।
संविभागमना नित्यमानृशंस्याद्युधिष्ठिरः ॥ २४ ॥
स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः ॥२५॥
इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन्बलिभृतः सर्वे सोऽद्यान्यैर्भृतिमिच्छति ॥ २६ ॥
पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः ।
स वशे विवशो राजा परेषामद्य वर्तते ॥ २७ ॥
प्रताप्य पृथिवीं सर्वां रश्मिवानिव तेजसा ।
सोऽयं राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥२८॥
यमुपासन्त राजानः सभायामृषिभिः सह ।
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ २९ ॥
सदस्यं समुपासीनं परस्य प्रियवादिनम् ।
दृष्ट्वा युधिष्ठिरं कोपो वर्धते मामसंशयम् ॥ ३० ॥
अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंस्थितम् ।
दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मानं युधिष्ठिरम् ॥ ३१ ॥
उपास्ते स्म सभायां यं कृत्स्ना वीर वसुन्धरा ।
तमुपासीनमप्यन्यं पश्य भारत भारतम् ॥ ३२ ॥
एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ३३ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

---

घटितम् ॥ १३ ॥ श्रियो राज्यलक्ष्म्याः प्रत्यवरोपितः पातितः ॥ १४ ॥ 'पद्मा लक्ष्मीर्निधिः पद्मः पद्मानि गजबिन्दवः ॥ १५ ॥ विद्रुममालिनाम् ॥ १५ ॥ द्यूतजेन द्यूतलब्धेनाऽनर्थेन (? नार्थेन) जीवतीत्यर्थः । समुपावृतः; समुपाश्रितः ॥ १८ ॥

[ लक्षा० ] सारवद्धनमित्यत्र दिने दिने पणाय अभविष्यदिति योग्यक्रियाध्याहारः ॥ १२ ॥ न जातु क्षयमाव्रजेदित्यस्य तर्ह्यदेविष्यदिति पूर्वेणान्वयः ॥ १३ ॥

[ नील० ] यतीनां दशसहस्राणि बिभर्तीति पूर्वेणान्वयः ॥ २२ ॥ आनृशंस्यम् अनैष्ठुर्यम् । अनुक्रोशं दयाम् ॥ २३ ॥ निरयं पारतन्त्र्यं, कङ्कोऽहमिति युधिष्ठिरो ब्रूते । कङ्कव्रतयुधिष्ठिर इति पाठे कङ्कव्रतश्चासौ युधिष्ठिरश्चेति समासः ॥ २५ ॥ सदस्यं सभासदम् ॥ ३० ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ अर्जु० ] निरयं पातकम् ॥२५॥ पार्थिवाः पृथिवीपालाः इति । पार्थिवाः पृथिव्यां विदिताः, पृथिवीपाला राजानः कृताभिषेका इति भेदः ॥ २७ ॥ सदस्यं समुपासीनमिति । सदः सभा तत्र भवमवस्थितमित्यर्थः तत्र साधुर्वा ॥ ३० ॥ कृत्स्ना वीर वसुन्धरा इति वसुन्धरा तात्स्थ्यात् तत्स्थो जनो वा ॥ ३२ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ चतु० ] स्नातकाः वेदव्रतस्नातकाः ॥ २१ ॥ संविभागो दानम् ॥ २३ ॥ संविभज्य उचितमर्थं प्रदाय बिभर्तीत्यन्वयः ॥ २४ ॥ समये निदेशे । बलिभृतः उपनीतोपहाराः । भृतिः पोषणम् ॥२६॥ पार्थिवाः पृथिवीसंबन्धिनः ॥ २७ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ सर्व० ] निरयं दुःखम् ॥ २५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ विरो० ] स्नातका आसन्नित्यनु ॥ २१ ॥ दश चापि सहस्राणि बिभर्तीत्यनु ॥ २२ ॥ समये निदेशे ॥ २६ ॥ पार्थिवाः पृथिव्यां विदिताः । विवशोऽरिष्टदुष्टधीः ॥ २७ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ विष० ] निरयमिव निरयं सेवानरकम् ॥२५॥ सोऽन्येभ्यो बहुभ्यो द्यूतकारेभ्यः ॥२६॥ उपासीनं सेवमानम् ॥३०॥

इति श्रीमहाभारतविषमपदविवरणे वि० प० अष्टादशोऽध्यायः ॥ १८ ॥

---

१९ घ. यस्य सुस्वरसंपन्ना व° । २० ग. व. सर्वकामैस्तु पूजिताः । २१ ज. त्रिंशद्दासीकमेकैकं । २३ व. °मनुक्रोशः सत्यं त्यागस्तथै° । २४ व. बिभर्ति विधवा राजा धृतिमान्सत्यविक्रमः । अन्धान्वृद्धाननाथांश्च बालान्राष्ट्रे सुदुर्बलान् । बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः । ग. घ. बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः । २५ क. ग. एष निलयं प्राप्तो । २६ व. सोऽन्येभ्यो भृतिमिच्छति । २७ व. पृथिव्यां पृथिवीपाला । ३१ जीवितार्थे समाश्रितम् । ३० ग. तमुपासीनं मत्स्यस्य । ३२ व. °सीनमद्यान्यं ॥ इति विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः १९

भीमस्यामर्षजननाय द्रौपद्या पाण्डवान्प्रति शोचनम् ॥ १ ॥

द्रौपद्युवाच--

इदं तु ते महद्दुःखं यत्प्रवक्ष्यामि भारत ।
न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ १ ॥
सूदकर्मणि हीने त्वमसमे भरतर्षभ ।
ब्रुवन्बल्लवजातीयः कस्य शोकं न वर्धयेः ॥ २ ॥
सूपकारं विराटस्य बल्लवं त्वां विदुर्जनाः ।
प्रेष्यत्वं समनुप्राप्तं ततो दुःखतरं नु किम् ॥ ३ ॥
यदा महानसे सिद्धे विराटमुपतिष्ठसि ।
ब्रुवाणो बल्लवः सूदस्तदा सीदति मे मनः ॥ ४ ॥
यदा प्रहृष्टः सम्राट् त्वां संयोधयति कुञ्जरैः ।
हसन्त्यन्तःपुरे नार्यो मम तूद्विजते मनः ॥ ५ ॥
शार्दूलैर्महिषैः सिंहैरागारे योध्यसे यदा ।
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलं भवेत् ॥ ६ ॥
तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।
प्रेष्याः समुत्थिताश्चापि कैकेयीं ताः स्त्रियोऽब्रुवन् ७
प्रेक्ष्य मामनवद्याङ्गीं कश्मलोपहतामिव ।
स्नेहात्संवासजाद्धर्मात्सूदमेषा शुचिस्मिता ॥ ८ ॥
योध्यमानं महावीर्यमिमं समनुशोचति ।
कल्याणरूपा सैरन्ध्री बल्लवश्चापि सुन्दरः ॥ ९ ॥
स्त्रीणां चित्तं च दुर्ज्ञेयं युक्तरूपौ च मे मतौ ।
सैरन्ध्री प्रियसंवासान्नित्यं करुणवादिनी ॥ १० ॥
अस्मिन् राजकुले चेमौ तुल्यकालनिवासिनौ ।
इति ब्रुवाणा वाक्यानि सा मां नित्यमतर्जयत् ॥ ११ ॥
क्रुध्यन्तीं मां च संप्रेक्ष्य समशङ्कत मां त्वयि ।
तस्यां तथा ब्रुवत्यां तु दुःखं मां महदाविशत् ॥ १२ ॥
त्वय्येवं निरयं प्राप्ते भीमे भीमपराक्रमे ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ १३ ॥
यः सदेवान्मनुष्यांश्च सर्वांश्चैकरथोऽजयत् ।
सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ॥ १४ ॥
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ १५ ॥
यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनञ्जयः ॥ १६ ॥

---

[ लक्षा० ] जीवितार्थेन संवृतमित्यत्र जीवितार्थेन जीवनाख्यप्रयोजनेन संवृतं यतिवेषेणच्छन्नम् ॥ ३१ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ नील० ] इदमिति ॥ १ ॥ हीने नीचे असमे विषमे ॥ २ ॥ प्रियसंवासात् प्रियस्य भीमसेनस्य संवासः सहवासः संबन्धस्तस्मात् तस्मिन् हस्त्यादिभिः सह योध्यमाने सति करुणवादिनी दीनवादिनी भवति ॥ १० ॥ संवासमेवाह अस्मिन्निति ॥ ११ ॥ निरयं दुःखम् ॥ १३ ॥ लोके परिभूतेन निन्दितेन ॥ १६ ॥

[ अर्जु० ] कश्मलो मोहः ॥ ६ ॥ कल्याणरूपा प्रशस्तरूपा ॥ ९ ॥ निरयं प्राप्ते दुर्गतिं प्राप्ते ॥ १३ ॥ लोकपरिभूतेन लोकगर्हितेन ॥ १६ ॥

[ चतु० ] कश्मलं मोहः ॥ ६ ॥ प्रेक्षाः प्रेक्षिकाः ॥ ७ ॥ अखेदयत् दुःखितां कृतवती ॥ ११ ॥

[ सर्व० ] कश्मलं मोहः ॥ ६ ॥ अत्र भीमस्य संवासः संबन्धः तस्मात्तस्मिन्हस्त्यादिभिः सह योध्यमाने सति करुणवादिनी भवति ॥ १० ॥

[ विरो० ] बल्लवजातीयः वल्लवः 'जात्यन्ताच्छ बन्धुनि' ॥ २ ॥ प्रेष्याः २ प्रेक्षाः (च) । प्रेक्षिकाः समुत्थिता अकर्मपराः ॥ ७ ॥ सूदे स्नेहं मन्ये ॥ १० ॥ अखेदयत्; अतेजयत् तेज पालनकोपनयोः ॥ ११ ॥

[ विष० ] असमे तवासदृशे ॥ २ ॥ वल वल्ल संवरणार्थः । वल्लति शत्रुषु पतितं कोपं ज्येष्ठानुरोधात्संयच्छतीति वल्लवः । नरेन्द्रान्नृपतीन् वैरिरूपान्सूदतीति सूदः ॥ ४ ॥ करुणवादिनी स्नेहपरा ॥ १० ॥ अवेक्षते त्वदः

---

१ व. तु मे । २ च. ज. द्वितीयश्लोकात्प्राक्–सर्वेषां बलिनां श्रेष्ठस्त्वं च भीम महाबलः । च. ज. भीम त्व° । व. सूदकर्म विकुर्वंस्त्वमस° । ग. द्वितीयार्धस्थाने–ब्रुवन्मे बल्लवो नाम तेन मे शुष्यते मनः । व. बल्लवनामेति; बल्लव इत्येवं । ३ ज. समनुप्राप्तस्त° । ४ ज. °मुपतिष्ठसे । ङ. करालो बल्लवः; व. यदाह बल्लवो नाम तदा । ५ ज. प्रहृष्यति सम्राट् त्वां योधयिष्यति । व. मम तद्वेपते मनः । ६ व. कुञ्जरैः सिंहैरगारे । ज. युध्यते यदा । ७ ङ. व. ग. घ. प्रेक्ष्याः स° । व. समुदिता वापि । व. ज. कैकेयी ताः । व. ऽब्रवीत्; ज. ऽवदन् । ८ व. संवासजान्मन्ये सू° । व. °षा सुविस्मिता । च. ज. ङ. उत्तरार्धात्परम्–एकान्तार्पितभावेन बल्लवं चारुहासिनी । ९ व. महावीर्यैरिमं; ज. महावीरैरिमं । १० व. स्त्रीणां चरित्रं दु० । व. हि प्रियवादिनी । ११ व. °कुले रम्ये । ङ. नित्यमतोदयत्; ङ. ज. नित्यमखेदयत्; ग. घ. नित्यमन्वेक्ष्य च ।

यस्य ज्याक्षेपकठिनौ बाहू परिघसन्निभौ ।
स शङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनञ्जयः ॥ १७ ॥
यस्य ज्यातलनिर्घोषात्समकम्पन्त शत्रवः ।
स्त्रियो गीतस्वनं तस्य मुदिताः पर्युपासते ॥ १८ ॥
किरीटं सूर्यसंकाशं यस्य मूर्धन्यशोभत ।
वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः ॥ १९ ॥
तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः ॥ २० ॥
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।
आधारः सर्वविद्यानां स धारयति कुण्डले ॥ २१ ॥
स्प्रष्टुं राजसहस्राणि तेजसाऽप्रतिमानि वै ।
समरे नाभ्यवर्तन्त वेलामिव महार्णवः ॥ २२ ॥
सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥२३॥
यस्य स्म रथघोषेण समकम्पत मेदिनी ।
सपर्वतवना भीम सहस्थावरजङ्गमा ॥ २४ ॥
यस्मिन् जाते महाभागे कुन्त्या शोको व्यनश्यत ।
स शोचयति मामद्य भीमसेन तवानुजः ॥ २५ ॥
भूषितं तमलङ्कारैः कुण्डलैः परिहाटकैः ।
कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः ॥ २६ ॥
यस्य नास्ति समो वीर्ये कश्चिदुर्व्यां धनुर्धरः ।
सोऽद्य कन्यापरिवृतो गायन्नास्ते धनञ्जयः ॥ २७ ॥
धर्मे शौर्ये च सत्ये च जीवलोकस्य संमतम् ।
स्त्रीवेषविकृतं पार्थं दृष्ट्वा सीदति मे मनः ॥ २८ ॥
यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।
प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः ॥ २९ ॥
मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितम् ।
पश्यामि तूर्यमध्यस्थं दिशो नश्यन्ति मे तदा ॥३०॥
नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयम् ।
अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनम् ॥ ३१ ॥
तथा दृष्ट्वा यवीयांसं सहदेवं गवां पतिम् ।
गोषु गोवेषमायान्तं पाण्डुभूताऽस्मि भारत ॥ ३२ ॥
सहदेवस्य वृत्तानि चिन्तयन्ती पुनः पुनः ।
न निद्रामभिगच्छामि भीमसेन कुतो रतिम् ॥३३॥
न विन्दामि महाबाहो सहदेवस्य दुष्कृतम् ।
यस्मिन्नेवंविधं दुःखं प्राप्नुयात्सत्यविक्रमः ॥ ३४ ॥

---

नुगां वेत्ति ॥ ११ ॥ यौधिष्ठिरे युधिष्ठिरकृते शोके ॥१३॥ लोकपरिभूतेन लोकनिन्द्येन ॥ १६ ॥

[लक्षा०] तत उत्थायेत्यत्र ततः युद्धदर्शनार्थमुपविष्टमञ्चात् । सर्वास्ता युद्धदर्शनार्थमागताः सर्वा नारीः ॥ ७ ॥

[नील०] शङ्खपरिपूर्णाभ्यां बाहुभ्याम् ॥ १७ ॥ स्प्रष्टुम् आकलयितुं यमिति शेषः यस्येत्यपि पठन्ति । अप्रतिमानीतिच्छेदः ॥ २२ ॥ दिशो नश्यन्ति शोकेन आन्ध्यमायातीत्यर्थः ॥ ३० ॥ आर्या श्वश्रूः ॥ ३१ ॥ गोवेषं महोक्षसदृशम् ॥ ३२ ॥

[अर्जु०] वेलामिव सीमामिव ॥ २२ ॥ वेशप्रतिच्छन्नः नपुंसकत्वाऽऽच्छादितः ॥ २३ ॥ प्रभिन्नं मत्तम् ॥ २९ ॥ आर्या श्वश्रूः कुन्तीत्यर्थः ॥ ३१ ॥ गोविन्दं गवाधिकृतं पाण्डुभूता पाण्डुवर्णा ॥३२॥ यस्मिन्कृते सतीत्यर्थः ॥३४॥

[चतु०] स्त्रीवेषेण नटवेषेण विकृतं प्राप्तविकारम् ॥ २८ ॥ प्रभिन्नं मत्तम् ॥ २९ ॥ आर्या कुन्ती ॥ ३१ ॥

गोषु मध्ये गोविन्दं गवाध्यक्षम् । गोपालवेषमिति पाठः । पाण्डुभूता व्यपेतशोभा ॥ ३२ ॥ रतिं प्रीतिम् ॥ ३३ ॥

[सर्व०] तूर्यं वाद्यादि ॥ ३० ॥ आर्या श्वश्रूः ॥ ३१ ॥ गोवेषं महोक्षसदृशम् ॥ ३२ ॥

[विरो०] सीदतीति शोकावेगात् ॥ २६ ॥ गोपालवेशं २ गोषु गोविन्दं ( च ) गोचारकं ॥ ३२ ॥

[विष०] मणिबन्धकूर्परान्तशङ्खवलयाभ्यामुपलक्षितः । ज्याकिणावरणहेतुत्वात् ॥१७॥ वेला नाम जलोद्रेकः ॥२२॥ व्यनश्यत नष्टवान् ॥ २५ ॥ परिहारके कङ्कणे । कम्बुपाणिनं शङ्खवलयधारिणम् ॥ २६ ॥ मग्नं व्यसनसागरे, कौरव्ये युधिष्ठिरे ॥ ३१ ॥ गोविन्दं गोष्वधिकृतम् ॥ ३२ ॥

[लक्षा०] स धारयति कुण्डले इत्यत्र कुण्डले ताटङ्कौ । ॥ २१ ॥ कम्बुपाणिमथायान्तमित्यत्र कम्बुपाणिं शङ्खमयकङ्कणालंकृतपाणिम् ॥ २६ ॥ मात्स्यं पार्थं चेत्यत्र मात्स्यं

---

१७ ज. बाहू कृतकिणावुभौ । १९ व. ज. मूर्धनि शोभते । २१ ग. द्वितीयार्धस्थाने—सर्वसत्वाकरः श्रीमान्सर्वविद्यासु निश्चितः । २२ ग. घ. च. ज. यस्य रा°; व. यं स्म रा° । व. संगरे नातिवर्तन्ते वे° । २३ ग. व.°न्नः पश्य दैवविपर्ययम् । २४ ग. व. द्वितीयार्धात्परं—आपतन्तं रणे दृष्ट्वा शात्रवा यान्ति संभ्रमम् । २५ व. प्रथमार्धस्थाने—एवंविधमिमं श्रुत्वा कुन्त्याः शोको भविष्यति । घ. स षण्ढवद्व्रजत्यत्र; व. स शोषयति । २६ ग. कुण्डलैरुपशोभितं । ग. वेत्रपाणिनमा°; ज. कम्बुपाणिं समायान्तं । २७ ग. द्वितीयार्धात्प्राक्—यः स्वराष्ट्रं समासाद्य सादितोग्रारिरस्तुवीत । परं हर्षमुपातिष्ठत्स्वसैन्यमभिनन्दयन् । ३० व. मत्स्यमर्थयितुं । ग. व. परिषन्मध्ये । घ. दृष्टिर्नश्यति मे तदा; व. दिशो मुह्यन्ति । ३१ व. अजातशत्रौ कौरव्ये मग्नं दुर्द्यूतदेविनि । ३२ व. सहदेवं युधां° । ग. घ. ज. च. गोविन्दमा° । ३३ ज. निद्रामुपगच्छामि । ग. द्वितीयार्धात्परं—युवानमृषभं राज्ञां सर्वशास्त्रविशारदम् । दृष्ट्वा गोपालवेषं तं भृशं मुह्यति मे मनः ॥

दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।
गोषु गोवृषसंकाशं मत्स्येनाभिनिवेशितम् ॥ ३५ ॥
संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमम् ।
विराटमभिनन्दन्तमथ मे भवति ज्वरः ॥ ३६ ॥
सहदेवं हि मे वीरं नित्यमार्या प्रशंसति ।
महाभिजनसंपन्नः शीलवान् वृत्तवानिति ॥ ३७ ॥
ह्रीनिषेवो मधुरवाक् धार्मिकश्च प्रियश्च मे ।
स तेऽरण्येषु वोढव्यो याज्ञसेनि क्षपास्वपि ॥ ३८ ॥
सुकुमारश्च शूरश्च राजानं चाप्यनुव्रतः ।
ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः ॥३९॥
इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी ।
प्रव्रजन्तं महारण्यं तं परिष्वज्य तिष्ठती ॥ ४० ॥
तं दृष्ट्वा व्यापृतं गोषु वत्सचर्मक्षपाशयम् ।
सहदेवं युधां श्रेष्ठं किंनु जीवामि पाण्डव ॥ ४१ ॥
यस्त्रिभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया ।
सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम्॥४२॥
अभ्यकीर्यन्त वृन्दानि दामग्रन्थिमुदीक्ष्य तम् ।
विनयन्तं जवेनाश्वान्महाराजस्य पश्यतः ॥ ४३ ॥

विराटं गायन्तं पार्थम् ॥ ३० ॥ कृच्छ्रं प्राप्तं धनंजयमित्यत्र कृच्छ्रं शिखण्डिनीरूपादिसंकटम् ॥ ३१ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे वि. प. एकोनविंशोऽध्यायः ॥ १९ ॥

[ नील० ] दूयामि खेदं प्राप्नोमि ॥ ३५ ॥ रक्तनेपथ्यं रक्तं गैरिकादिधातुमयं नेपथ्यमलङ्कारो यस्य तम् ॥ ३६ ॥ ज्येष्ठापचायिनं ज्येष्ठपूजकम् ॥ ३९ ॥ वत्सचर्मणि क्षपायां शेते इति तं वत्सचर्मक्षपाशयम् ॥ ४१ ॥ अभ्यकीर्यन्त व्यशीर्यन्त वृन्दानि शत्रूणामिति शेषः दामग्रन्थिं ग्रन्थिकम् ॥ ४३ ॥

[ अर्जु० ] संरब्धं व्यग्रम् । रक्तनेपथ्यं रक्तवस्त्रालंकारादिपरिदधानं रक्तवेशमित्यर्थः । 'आकल्पवेशौ नेपथ्यम्' इत्यमरः ॥३६॥ महाभिजनसंपन्नः महाख्यातिसंपन्नः । 'भवेदभिजनः ख्यातौ' इति मेदिनीकारः ॥३७॥ लज्जैवाकार्यप्रवृत्तौ निषेधो यस्य स तथा । ह्रीनिषेव इति केचित् । वोढव्यो विषीदन् धारयितव्यः ॥ ३८ ॥ अनुव्रतोऽनुगतः ज्येष्ठानुयायिनम् ज्येष्ठपूजनम् ॥ ३९ ॥ व्यापृतं कृतव्यापारं वत्सचर्मक्षपाशयं वत्सचर्मणि रात्रौ शयानम् ॥ ४१ ॥ दामग्रन्थिं बन्धनरज्जुयुतम् उदीक्षतां पश्यतामश्वानामिति शेषः वृन्दानि समूहा अभ्याकीर्यन्त अभि आभिमुख्येन आकीर्यन्त तान् विनयन्तं शिक्षयन्तं जवेन वेगेन महाराजस्य... ॥ ४३ ॥

[ चतु० ] दूये उपतप्ये ॥३५॥ संरब्धं सावज्ञम् । रक्तनेपथ्यं लोहिताभरणम् । ज्वरस्तापः ॥३६॥ अभिजनः कुलम् । विनीताध्वसेवनं वृत्तम् ॥ ३७ ॥ वोढव्यो नेतव्यः ॥३८॥ ज्येष्ठापचायिनं अग्रजानुरोधिनम् ॥ ३९ ॥ तं सहदेवं । व्यापृतं विषक्तं वत्सचर्मक्षपाशयं वत्सचर्मणि क्षपायां शेते इति ॥ ४१ ॥ पर्ययं वैपरीत्यम् ॥ ४२ ॥ दामग्रन्थिं नकुलमश्वान्विनयन्तमुदीक्षतामुदीक्षमाणानां जनानां वृन्दानि अभ्यकीर्यन्त सर्वत्र विनिक्षिप्तानि भिन्नानि चेत्यन्वयः ॥ ४३ ॥

[ सर्व० ] दूयामि खेदं प्राप्नोमि ॥ ३५ ॥ रक्तं गैरिकादिधातुमयं नेपथ्यमलंकारो यस्य ॥ ३६ ॥ ज्येष्ठापचायिनं ज्येष्ठपूजकम् ॥ ३९ ॥ वत्सचर्मणि क्षपायां शेते सः ॥ ४१ ॥ अभ्यकीर्यन्त व्यशीर्यन्त । वृन्दानि शत्रूणाम् । दामग्रन्थिं ग्रन्थिकम् ॥ ४३ ॥

[ विरो० ] रक्तनेपथ्यं रक्ताम्बरम् ॥ ३६ ॥ 'भवेदभिजनः ख्यातौ' वृत्तमाचारः ॥ ३७ ॥ ह्रीनिषेवो २ षेधो ( दे ) ह्रिया विकर्मनिषेधो यस्य ॥३८॥ अनुयायिनम्; अपचायिनं (च) अपचितिः पूजा ॥ ३९ ॥ उदीक्ष्य तं; उदीक्षताम् ( दे ) जनानां वृन्दानि ॥ ४३ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ विष० ] संरब्धं कर्मणा व्यग्रम् । रक्तनेपथ्यं रक्तकम्बलादिपरिधानात् ॥ ३६ ॥ शीलवान् सलज्ज इव ॥ ३७ ॥ अकर्तव्यप्रवृत्तौ ह्रिया निषेधो यस्य ॥ ३८ ॥ ज्येष्ठापचायिनं ज्येष्ठपूजकम् ॥ ३९ ॥ वत्सचर्मणि क्षपासु शेते ॥ ४१ ॥ 'अतीतार्थे स्मृतिर्मेधा बुद्धिस्तात्कालिकी स्मृता । शुभाशुभविचारज्ञा सा प्राज्ञैर्धीरुदाहृता' ॥ ४२ ॥ दामग्रथिं बन्धनरज्जुमुदीक्षतां पश्यतामश्वानां वृन्दानि समूहा अभ्यकीर्यन्त विक्षिप्तान्यभवन् । दामग्रन्थिं नकुलमश्वानां वृन्दानि विनयन्तं शिक्षयन्तम् ॥ ४३ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

३५ ज. ड. ग. घ. दूयेऽहं । ३६ डं. संरम्भं । ३७ ग. वीरं दृष्ट्वा कुन्तीत्युवाच माम् । डं. कुलवान्वृ° । ग. व. द्वितीयार्धात्परं—त्वया सदैव रक्ष्योऽयं कृष्णे मद्वाक्यगौरवात् । कथं मया विहीनो हि वने दुःखं निवत्स्यति ॥ ३८ व. ह्रीनिषेधो । ग. द्वितीयार्धस्थाने—सुप्तेनैतेन वोढव्यं पाञ्चालि निषमेष्वपि । व. वोढव्यो या° । ३९ व. °चायिनमिमं । ४० ग. कुन्ती प्रस्थितं हास्तिनापुरात् । व. प्रव्रजत्सु । ४३ ग. वृन्दानि हयानां वातरंहसाम् । क. ज. मुदीक्ष्य तान्; ग. डं. व. मुदीक्षताम् । ग. द्वितीयार्धस्थाने—विनयन्तं जवेनाशु अश्वानां वेगमुत्तमम् ।

अपश्यमेनं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम् ।
विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ॥ ४४ ॥
किं नु मां मन्यसे पार्थ सुखिनीति परन्तप ।
एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥ ४५ ॥

अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत ।
वर्तन्ते मयि कौन्तेय वक्ष्यामि शृणु तान्यपि ॥४६॥
युष्मासु म्रियमाणेषु दुःखानि विविधान्युत ।
शोषयन्ति शरीरं मे किं नु दुःखमतः परम् ॥ ४७ ॥

इति श्रीमहाभारते विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः २०

पूर्वविभवमनुस्मृत्य संप्रति दासीभूतामात्मानं परिशोचन्त्या द्रौपद्याः किणवन्तौ पाणी सुखमानीय भीमस्य रोदनम् ॥ १ ॥

**द्रौपद्युवाच—**

अहं सैरन्ध्रिवेषेण चरन्ती राजवेश्मनि ।
शौचदाऽस्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥१॥
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप ।
आत्मकालमुदीक्षन्ती सर्वं दुःखं किलान्तवत् ॥ २ ॥
अनित्या किल मर्त्यानामर्थसिद्धिर्जयाजयौ ।
इतिकृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३ ॥

चक्रवत्परिवर्तन्ते ह्यर्थाश्च व्यसनानि च ।
इतिकृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ४ ॥
य एव हेतुर्भवति पुरुषस्य जयावहः ।
पराजये च हेतुश्च स इति प्रतिपालये ॥
किं मां न प्रति जानीषे भीमसेन मृतामिव ॥ ५ ॥
दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ॥ ६ ॥

---

[नील०] एनं नकुलं वाजिनोऽश्वान् दर्शयन्तं विराटं विराटाय ॥ ४४ ॥ म्रियमाणेषु जीवत्सु ॥ ४७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि ऊनविंशोऽध्यायः ॥ १९ ॥

[अर्जु०] एनं सहदेवम् ॥ ४४ ॥ म्रियमाणेषु वर्तमानेषु ॥ ४७ ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां विराटपर्वणि ऊनविंशोऽध्यायः ॥ १९ ॥

[चतु०] प्रतिविशिष्टानि अधिकानि ॥ ४६ ॥ तत् प्रत्यक्षम् ॥ ४७ ॥

इति श्रीमहाभारतव्याख्यायां चतुर्भुजमिश्रकृतायां विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[सर्व०] म्रियमाणेषु जीवत्सु ॥ ४७ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[नील०] सैरन्ध्र्या वेषेण सैरन्ध्रीवेषेण शौचदा मृज्जलादिशौचसाधनप्रदा ॥ १ ॥ पुरुषस्य दुर्योधनादेः यः कालः स एव काल एव । प्रतिपालये कालमिति शेषः ॥ ५ ॥ काल एव सर्वं विपरीतं करोतीत्याह—दत्त्वेति । ये स्वयं दातारस्त एव कालेन दरिद्राः सन्तो याचका भवन्तीत्यर्थः । तथा अन्यान्हत्वा परैरपि वध्यन्ति वध्यन्ते । पातयित्वा अन्यान् त एवान्यैः पात्यन्त इति ॥ ६ ॥

[अर्जु०] आसे तिष्ठामि तत्र हेतुः सर्वमिति । कालमागामिनं सुखकालमुपासीना प्रतीक्षमाणा ॥२॥ अर्थः पुरुषार्थः भ्रंशनं भ्रंशः ॥ ४ ॥ य एव जयहेतुः कालभेदेन तस्मादन्वयव्यतिरेकाभ्यां कालो हेतुः ॥ ५ ॥ दत्त्वा याचन्तीत्यादि कालभेदाभिप्रायेण ॥ ६ ॥

[चतु०] विक्रियां विगतां क्रियामधितिष्ठामि । कालं सुखसमयमुपासीना प्रतीक्षमाणा किल प्रसिद्धौ ॥२॥ व्यसनानि विपदः ॥ ४ ॥ यः कालः प्रतिपालये प्रतीक्षये ॥ ५ ॥

[सर्व०] शौचदा मृज्जलादिशौचसाधनपरा ॥ १ ॥

[विरो०] वशगा २; शौचदा शौचार्यदं मृदादि ॥ १ ॥ विक्रियां विगतां क्रियाम् । उदीक्षन्ती; उपासीना ॥ २ ॥ य एव २ स एव (दे) कालः ॥ ५ ॥

[विष०] सैरन्ध्री केशप्रसाधनादिशरीरसंस्कारकारिका ॥१॥ आसे तिष्ठामि कालमुपासीना कालं प्रतीक्षमाणा । दुःखं सर्वमन्तवत् । अवसानयुक्तम् । तथा चोक्तम् । 'सुखस्यानन्तरं दुःखं दुःखस्याऽनन्तरं सुखम् इति ॥२॥ अनित्या दैवाधीनत्वात् ॥ ३ ॥ अर्थाः पुरुषार्थाः व्यसनानि च

---

४४ ग. प्रधावमानं भीमं च; व. अवश्यमेनं पश्यन्तं मत्स्यं । व. मत्स्यवाजिष्वनुत्तमम् । ज. दमयन्तं च वा० । ४५ ग. घ. व. सुखितेति । ४६ व. अतस्तु प्रविशिष्टानि । ४७ यच्च दासी सुदेष्णायाः किं । एकोनविंशोऽध्यायः । १ ज. सैरन्ध्रिरूपेण । क. घ. च. ज. वशगाऽस्मि; व. किंकरीव सुदे° ।

२ ग. घ. व. द्वितीयार्धस्थाने—आसे कालमुपासीना सर्वं दुःखं किलार्तवत् । ज. मपेक्षन्ती । व. तिष्ठे कालं प्रतीक्षन्ती सहे दुःखं । ४ ग. घ. व. ज. चक्रवत्किलमर्त्यानां । ६ घ. व. याचयित्वा च याच्यन्ते प° ।

न दैवस्यातिभारोऽस्ति न चैवास्यातिवर्तनम् ।
इति चाप्यागमं भूयो दैवस्य प्रतिपालये ॥ ७ ॥
स्थितं पूर्वं जलं यत्र पुनस्तत्रैव गच्छति ।
इति पर्यायमिच्छन्ती प्रतीक्षे उदयं पुनः ॥ ८ ॥
दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।
दैवस्य चागमे यत्नस्तेन कार्यो विजानता ॥ ९ ॥
यत्तु मे वचनस्यास्य कथितस्य प्रयोजनम् ।
पृच्छ मां दुःखितां तत्त्वं पृष्टा चात्र ब्रवीमि ते॥१०॥
महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां संप्राप्ता मदन्या का जिजीविषेत्॥ ११ ॥
कुरून्परिभवेत्सर्वान्पाञ्चालानपि भारत ।
पाण्डवेयांश्च संप्राप्तो मम क्लेशो ह्यरिन्दम ॥ १२ ॥

भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ।
एवं समुदिता नारी का त्वन्या दुःखिता भवेत् १३
नूनं हि बालया धातुर्मया वै विप्रियं कृतम् ।
यस्य प्रसादाद्दुर्नीतं प्राप्तास्मि भरतर्षभ ॥ १४ ॥
वर्णावकाशमपि मे पश्य पाण्डव यादृशम् ।
तादृशो मे न तत्रासीद्दुःखे परमके तदा ॥ १५ ॥
त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।
साऽहं दासीत्वमापन्ना न शान्तिमवशा लभे ॥१६॥
नादैविकमहं मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महाबाहुरास्ते छन्न इवानलः ॥ १७ ॥
अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं मन्ये युष्माकं ह्यविचिन्तितम् ॥ १८ ॥

पुरुषार्थभ्रंशाः चक्रवद्भ्रमन्ति ॥ ४ ॥ य एव कालो जयहेतुः स एव कालः पराजयहेतुः ॥ ५ ॥

[ नील० ] अतिभारो दुष्करं दैवस्य किमपि नास्ति । अस्य दैवस्य अतिवर्तनमतिक्रमणं च नास्ति केनचित्कृतमिति शेषः । दैवस्य प्राधान्यप्रतिपादकमागमं प्रतिपालये मानये । दैवाधीनाऽस्मीति मत्वा न शोचामीत्यर्थः ॥ ७ ॥ स्थितमिति यथा रिक्तं सरः पुनः कालेन पूर्यत एवमहमपि पुनः श्रियं प्राप्स्याम्येवेति निश्चयेन पर्यायं कालवैपरीत्यमिच्छन्ती ॥ ८ ॥ यस्य पुंसोऽर्थो दैवेन विपद्यते नश्यति तेन दैवस्यैव आगमे आनुकूल्ये यत्नः कार्यः दैवान्नष्टोऽर्थः पुनर्जपहोमादिना आहर्तव्य इत्यर्थः ॥ ९ ॥ कुरूनिति । मम मत्संबन्धी मन्निमित्तकः कचग्रहादिरयं क्लेशः पाण्डवेयान् पाण्डोः स्त्री पाण्डवी कुन्ती तस्याः पुत्रान् युष्मान् प्राप्तः सन् कुरून् भीष्मादीन् पञ्चालान् द्रुपदादींश्च परिभवेत् नाशयेदित्यर्थः ॥ १२ ॥ समुदिता सम्यगुदयवत्यपि एवं काऽन्या दुःखिता भवेन्न काऽपि श्रीमतामापदो न दृष्टा एव मम तु दृष्टा इति महदाश्चर्यमिति भावः ॥ १३ ॥ बालया न तु प्रौढया तं बाल्ये कृतमपराधं न स्मरामि यस्य प्रसादादिदं दुर्नीतं दुरवस्थां प्राप्तास्मि ॥ १४ ॥ वर्णावकाशो दीप्तिसंकोचः । वन्यान्नवल्कलधारणयुक्तास्वातन्त्र्यादिव्यान्नवस्त्रसंयुक्तं पारतन्त्र्यमतिदुःखदमिति भावः । तत्र वने इदानीं यथा दीप्तिसंकोचोऽस्ति न तथा वने आसीदित्यर्थः ॥ १५ ॥ अवशा पराधीना ॥ १६ ॥ अदैविकं न किं तु दैविकमेव ॥ १७ ॥ विनिपातं पराभवम् ॥ १८ ॥

[ अर्जु० ] अतिभारः कर्तव्यगौरवमिहामुत्राधीनत्वात् सर्वकार्यस्य, निवर्तनं करणादिति शेषः ॥ ७ ॥ पर्यायं कालक्रमम् ॥ ८ ॥ वर्णावकाशं वर्णान्तरम् ॥ १५ ॥ गतिः कर्मविपाकः ॥ १८ ॥

[ चतु० ] अतिभारोऽसाध्यम् ॥ ७ ॥ जिजीविषेज्जीवितुमिच्छेत् ॥ ११ ॥ वर्णविकारं वर्णभेदम् ॥ १५ ॥ गतिर्दशा । विनिपातं व्यसनम् ॥ १८ ॥

[ सर्व० ] दैवस्य चागमे दैवस्यैव आगमे आनुकूल्ये ॥ ९ ॥ मम क्लेशः मन्निमित्तकः क्लेशः युष्मान्प्राप्तः सन्कुरून्भीष्मादीनपि परिभवेन्नाशयेत् ॥ १२ ॥ वर्णावकाशः दीप्तिसंकोचः । दुःखे वनवासजे ॥ १५ ॥ अवशा पराधीना ॥ १६ ॥ विनिपातं पराभवम् ॥ १८ ॥

[ विरो० ] वर्णावकाशं वर्णस्यावमरुतः (? ऊनः) प्रकाशो वैवर्ण्यम् ॥ १५ ॥

[ विष० ] अतिभारः कर्तव्यतागौरवम् । निवर्तनमुपायप्रतीकारः ॥ ७ ॥ सुनीतोऽपि नीतिशास्त्रानुगतया बुद्ध्या विचार्य कृतोऽपि विनश्यति ॥ ९ ॥ वर्णावकाशं देहे वर्णान्तरम् । तत्र इन्द्रप्रस्थे पुरे । तदा द्यूतसमये हस्तिनापुरे परमके महति दुःखे ॥ १५ ॥ अवशा दैवाधीना ॥१६॥ न अदैविकमपि तु दैवाधीनमेव दैवविहितमेव॥१७॥ गतिः कर्मविपाकभवा हानिवृद्धिलक्षणा ॥ १८ ॥

[ लक्षा० ] स्थितं पूर्वं जलमित्यत्र यत्र तटाके पूर्वं पूर्वसंवत्सरे जलं स्थितं पुनः संवत्सरान्तरे वर्षाकाले तत्रैव तिष्ठति । इति अनेन प्रकारेण पर्यायं पुनः संपदागमनमिच्छ-

७ घ. न चैवास्ति निवर्तनम् । ९ व. दैवेनाक्रुष्य । व. तद्दैवस्यागमे यत्नः कार्यस्तेन; ज. दैवस्योपगमे । १० व. °तामेवमपृष्टा वा ब्रवीमि; ज. तत्त्वमपृष्टा वात्र । १३ व. भर्तृभिः सुस्वरैः पु° । ग. परवीरहन् । १४ ज. प्रसादात्संमानं । १५ ज. वर्णविकारम° । ज. व. यादृशो मे वने नासी° ।

१६ ग. दीनत्वमापन्ना । च. ज. द्वितियार्धात्परम्—का प्रीतिर्जीवितेनात्र ममानेन वृकोदर । १७ व. ज. शान्त इवा; क. वि. च. शान्त इवापरः । १८ ग. घ. विपरीतमिदं ।

यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ।
सा प्रेक्षे मुखमन्यासामवराणां वरा सती ॥ १९ ॥
पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु म्रियमाणेषु पश्य कालस्य पर्ययम् ॥२०॥
यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत्साऽद्य सुदेष्णाया भीताऽहं वशवर्तिनी ॥२१॥
यस्या पुरःसरा आसन् पृष्ठतश्चानुगामिनः ।
साऽहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी ॥ २२ ॥
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् ।
या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः ॥
अन्यत्र कुन्त्या भद्रं ते सा पिनष्म्यद्य चन्दनम् २३
पश्य कौन्तेय पाणी मे नैवाऽभूतां हि यौ पुरा ।
इत्यस्य दर्शयामास किणवन्तौ करावुभौ ॥ २४ ॥
बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन ।
साऽद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी ॥२५॥
किं नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा ।
नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते ॥२६॥

**वैशम्पायन उवाच--**

सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती ॥ २७ ॥
सा बाष्पकलया वाचा निःश्वसन्ती पुनः पुनः ।
हृदयं भीमसेनस्य घट्टयन्तीदमब्रवीत् ॥ २८ ॥
नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या यत्र जीवामि कर्तव्ये सति पाण्डव ॥२९॥

**वैशम्पायन उवाच—**

ततस्तस्याः करौ सूक्ष्मौ किणबद्धौ वृकोदरः ।
मुखमानीय वै पत्न्या रुरोद परवीरहा ॥ ३० ॥
तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ३१ ॥

इति श्रीमहाभारते विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

न्ती अहमुदयं भवतामभ्युदयं प्रतीक्षामीति योजना । यद्वा निम्नस्थलात् कराभ्या परितो निक्षिप्तं जलं शनैर्निम्नस्थले यथा गच्छति इति तेन प्रकारेण शेषं पूर्ववत् ॥ ८ ॥ दैवस्यैवागमे यत्न इत्यत्र आगमे स्वानुकूल्येनागमने ॥ ९ ॥ नं दैविकमिदमित्यत्र दैविकं केवलदैवनिमित्तं न किंतु धर्मराजस्य दुर्द्यूताख्यदुष्प्रयत्नकृतं च भवति ॥ १७ ॥

[नील०] पुरा किणवन्तौ नैवाऽभूतां किं त्विदानीमेव जातावित्यर्थः ॥ २४ ॥ वर्णको विलेपनम् । ‘ वर्णकश्चारणेऽस्त्री तु चन्दने च विलेपने ’ इति मेदिनी । ‘ वर्णकोऽस्त्री विलेपनम् ’ इत्यमरः ॥ २६ ॥ बाष्पकलया बाष्पेण गद्गदया मञ्जुलया वाचा घट्टयन्ती कम्पयन्तीव ॥ २८ ॥ कर्तव्ये मर्तव्ये कृ हिंसायामित्यस्य रूपम् ॥ २९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[अर्जु०] पर्ययं विपर्ययम् ॥ २० ॥ भवतः स्तः किणवन्तौ क्षतवन्तौ ॥ २४ ॥ वर्णकोऽनुलेपनं चन्दनं वा सुकृतः सुपिष्टो न वेति किं मां सम्राट् विराटो वक्ष्यतीति योज्यम् । ‘ वर्णकश्चारणेऽस्त्री तु चन्दने च विलेपने ’ इति मेदिनी ॥ २६ ॥ कलया अव्यक्तमधुरया घट्टयन्ती विलोडयन्ती ॥ २८ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि विंशोध्यायः ॥ २० ॥

[चतु०] कुन्त्या अन्यत्र कुन्तीं विहाय ॥ २३ ॥ किणो घर्षणकाठिन्यं तद्वन्तौ ॥ २४ ॥ वर्णकोऽनुलेपनम् ॥ २६ ॥ घट्टयन्ती प्रहरन्ती ॥ २८ ॥

इति श्रीमहाभारतटीकायां चतुर्भुजमिश्रकृतायां विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[सर्व०] वर्णको विलेपनम् ॥ २६ ॥ बाष्पकलया बाष्पेण मञ्जुलया । घट्टयन्ती कम्पयन्ती ॥ २८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[विरो०] नार्हामि २ नार्हन्ति (?)॥२०॥ अन्यत्र विना ॥२३॥ वर्णकश्चन्दनम् ॥२६॥ शून्यौ; शूनौ उच्छूनौ॥३०॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[विष०] यस्या मम मुखमनु वारंवारं प्रेक्षा अवलोकनपरा

---

१९ व. मम सुखप्रेक्ष्या । ग. सहामि दुःखमन्यासा° ।२१ व. पाञ्चाली वश° । २२ ग. आसन्दासाश्चैवाग्रतः स्थिताः । २३ ग. व. निमित्तं हि सुदेष्णायाः सा । २४ व. नैव स्म भवतः पुरा । व. किणबद्धौ । २५ व. श्लोकमध्ये— यथा नित्यं सुदेष्णाया भीता तिष्ठामि किंकरी । २६ ज. वक्ष्यत्यसावद्य; व. वक्ष्यत्यसौ राजा । २७ क. कृष्णा भीमस्योरस्समाश्रिता । २८ व. घट्टयन्तीव चाब्रवीत् । २९ व. मर्तव्ये संति । ३० दे. ग. घ. व. शून्यौ तस्याः करौ । व. शूनौ किणबद्धौ । क. घ. व. ज. वेपन्त्या रुरोद । ज. रुदन्त्याः पर° । ३१ व. हृदि कृत्वा च कौ° । व. °ज्य वेगवान् । इति विंशोऽध्यायः ॥

१ तद्दैविकमिदं मन्ये इति पाठो दृश्यते ।

## एकविंशोऽध्यायः २१

भीमेन सुकन्यादिदृष्टान्तैः परिसान्त्वितया द्रौपद्या कीचककृतं स्वाभिभवस्पवर्ण्य भीमस्य कीचकवधे चोदनम् ।

**भीमसेन उवाच—**

धिगस्तु मे बाहुबलं गाण्डीवं फाल्गुनस्य च ।
यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ॥ १ ॥
सभायां तु विराटस्य करोमि कदनं महत् ।
तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते ॥ २ ॥
अथवा कीचकस्याहं पोथयामि पदा शिरः ।
ऐश्वर्यमदमत्तस्य क्रीडन्निव महाद्विपः ॥ ३ ॥
अपश्यं त्वां यदा कृष्णे कीचकेन पदा हताम् ।
तदैवाहं चिकीर्षामि मत्स्यानां कदनं महत् ॥ ४ ॥
तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ।
तदहं तस्य विज्ञाय स्थित एवास्मि भामिनि ॥ ५ ॥
यच्च राष्ट्रात्प्रच्यवनं कुरूणामवधश्च यः ।
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ६ ॥
दुःशासनस्य पापस्य यन्मया नाहृतं शिरः ।
तन्मे दहति गात्राणि हृदि शल्यमिवार्दितम् ।
मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ॥ ७ ॥
इमं तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्वाऽपि कल्याणि कृत्स्नं जह्यात्स जीवितम् ॥ ८ ॥
धनञ्जयो वा सुश्रोणि यमौ वा तनुमध्यमे ।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ॥ ९ ॥
पुरा सुकन्या भार्या च भार्गवं च्यवनं वने ।
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ॥ १० ॥
नारायणी चेन्द्रसेना रूपेण यदि ते श्रुता ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणम् ॥ ११ ॥
दुहिता जनकस्यापि वैदेही यदि ते श्रुता ।
पतिमन्वचरत्सीता महारण्यनिवासिनम् ॥ १२ ॥
रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया ।
क्लिश्यमानाऽपि सुश्रोणि राममेवान्वपद्यत ॥ १३ ॥
लोपामुद्रा तथा भीरु वयोरूपसमन्विता ।
अगस्तिमन्वयाद्धित्वा कामान्सर्वानमानुषान् ॥ १४ ॥

---

यूयम् ॥ १९ ॥ शनकैः लोकश्रवणभयान्मन्दं मन्दम् ॥ २७ ॥ बाष्पैः श्लेष्माश्रुभिः कलयाऽव्यक्तमधुरया । घट्टयन्ती घर्षयन्ती विलोडयन्ती ॥ २८ ॥ किल्बिषमपराधरूपं पातकं कृतम् ॥ २९ ॥ शूनौ शोफयुक्तौ । चन्दनघर्षणजकिणबद्धौ ॥ ३० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[लक्षा०] वर्णकः सुकरो न वेत्यत्र वर्णकः कुङ्कुमादिभिः चन्दने कृतवर्णविशेषः ॥ २६ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

[नील०] धिगिति ॥ १ ॥ सभायामिति । कारणं प्राकट्यं मा भूदिति हेतुः प्रतीक्षते तदेव सूचयन् मामवेक्षते । अन्यथा तदानीमेव कदनं करोमि कृतं स्यादित्यर्थः ॥ २ ॥ पोथयामि चूर्णीकरोमि ॥ ३ ॥ नाहृतं छित्त्वा नानीतम् ॥ ७ ॥ अन्वपद्यत अनुसृतवती ॥ १० ॥

[अर्जु०] कदनं युद्धं प्रतीक्षते कालमिति शेषः ॥ २ ॥

पोथयामि चूर्णयामि ॥ ३ ॥ स्थितः कर्तव्यादुपरतः ॥ ५ ॥ शाम्यन्तं विषयेभ्यो निवर्तमानम् ॥ १० ॥

[चतु०] पोथयामि प्रमाथयामि ॥ ३ ॥ रक्षसा रावणेन ॥ १३ ॥

[सर्व०] कारणं प्राकट्यं मा भूदिति हेतुः प्रतीक्षते तदेव सूचयन्मामवेक्षते ॥ २ ॥ शाम्यन्तं सुकन्या वल्मीकभूतं वल्मीकेन व्याप्तदेहं शाम्यन्तं शमपरायणम् अन्वपद्यत अनुसृतवती ॥ १० ॥

[विरो०] नूनं कृत्स्नं जह्यात् ॥ ८ ॥

[विष०] पोथयामि चूर्णयामि ॥ ३ ॥ शार्याती शर्यातेः राज्ञः सुता । शाम्यन्तं विषयेभ्यो निवर्तमानं दमपरम् । शमदम उपशमे ॥ १० ॥ डलयोरैक्येन नाडायनी नलस्य सुता ॥ ११ ॥

[लक्षा०] यत्ते रक्ताविव्यत्र यद्यस्मात् ते रक्तौ उभौ पाणी पराभूत्वा परसेवकौ भूत्वा कृतकिणौ तस्माद्बाहुबलं धिगिति पूर्वेणान्वयः ॥ १ ॥ तदहं तस्येत्यत्र तत् संज्ञया कृतं धर्मराजस्य शासनं, तस्य कृते अस्मि तूष्णीमस्मि ॥ ५ ॥ वल्मीकभूतमित्यत्र शाम्यन् शमवान् ॥ १० ॥

---

१ व. रक्ताविमौ भूत्वा । ज. व. छ. °किणावुभौ । ३ ग. उत्तरार्धस्थाने नागो बिलमिवाक्रम्य नो चेद्राजा न्यवारयत् । ७ व. दहति कल्याणि हृदि । ग. जहि शुचिस्मिते; व. जहि सुमध्यमे । ९ व. यमौ चानुत्तमावुभौ । १० घ. व. सुकन्या नाम शार्याती । ११ क. नालायनी चेन्द्रसेना; ग. दाक्षायणी चेन्द्र°; घ. व. नाडायणी चेन्द्र° । १२ व °ण्यनिवासिनी । १३ ग. अयोनिजा महाभागा रामस्य ।

द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता ।
सावित्र्यनुचचारैका यमलोकं मनस्विनी ॥ १५ ॥
यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः ॥१६॥
मादीर्घं क्षम कालं त्वं मासमर्धं च संमितम् ।
पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि ॥ १७ ॥

द्रौपद्युवाच—

आर्तयैतन्मया भीम कृतं बाष्पप्रमोचनम् ।
अपारयन्त्या दुःखानि न राजानमुपालभे ॥ १८ ॥
किमुक्तेन व्यतीतेन भीमसेन महाबल ।
प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव ॥ १९ ॥
ममेह भीम कैकेयी रूपाभिभवशङ्कया ।
नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ २० ॥
तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोऽयं सुदुष्टात्मा सदा प्रार्थयते हि माम् ॥२१॥

[नील०] मादीर्घम् अदीर्घम् अल्पमित्यर्थः । सुप्सुपेति समासः । क्षम क्षमस्व मासमर्धं चेति सार्धं मासमित्यर्थः ॥ १७ ॥ अनन्तरः आसन्नः सन्नद्धो भवेति यावत् ॥ १९ ॥ कैकेयी सुदेष्णा । नेयात् न गच्छेत् ॥ २० ॥ तं भावं राजाऽस्यां कीचकहतायां विरक्तः स्यादित्येवंरूपमभिप्रायम् ॥ २१ ॥ क्षणं स्वीकारम् ॥ २५ ॥ वध्यन्तं वध्यमानम् ॥ २७ ॥

[अर्जु०] साऽदीर्घं क्षम कालं त्वं मासमध्यर्धसंमितमिति । सा त्वमदीर्घकालं क्षमस्व । कियन्तं कालमित्यत आह अध्यर्धसंमितं मासामिति, अधिकरूपेणार्धेन कियदधिकपक्षेण न्यूनमिति तात्पर्यार्थः । अध्यधिकरूपमीषदधिकपक्ष इत्यर्थः । तत्संमितं सम्यक् प्रक्षिप्तं यस्मान्मासादिति व्युत्पत्त्या । एतेनैकदिवसाधिकपक्षशून्यमासं सहस्वेति एकरात्रादधिकचतुर्दश दिनान्येव सन्तीति भावः । अधिकमर्धं यस्मादिति वा अध्यर्धम् । कश्चिदाह 'मासमध्यर्धसंमितं सार्धमासम् । 'अतोऽध्यर्धशतं भूयः' इत्यादौ सार्धपर्यायस्याध्यर्धशब्दस्य दर्शनात्' तन्न शोभनम् । तत्रैव द्रौपदीभीमसंवादानन्तरदिवसस्यैव रात्रौ कीचकवधे निर्वृत्ते विराटस्त्रिया सुदेष्णया प्रोक्ता द्रौपदी प्रोक्तवती 'त्रयोदशाहोरात्रं मे राजा क्षाम्यतु भाविनि' इत्यनेनाटमानत्वात् (?) ॥१७॥ अनन्तरोऽविद्यमानव्यवधानः ॥ १९ ॥ नेयात् न गच्छेत् ॥ २० ॥ तस्याः

तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रवं कामसंमूढमात्मानं रक्ष कीचक ॥ २२ ॥
गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युः कुपिताः शूराः साहसकारिणः ॥२३॥
एवमुक्तः सुदुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ॥२४॥
शतं शतसहस्राणि गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ॥२५॥
इत्युक्ते चाब्रवं मत्तं कामातुरमहं पुनः ।
न त्वं प्रतिबलश्चैषां गन्धर्वाणां यशस्विनाम् ॥ २६ ॥
धर्मे स्थिताऽस्मि सततं कुलशीलसमन्विता ।
नेच्छामि कंचिद्वध्यन्तं तेन जीवसि कीचक ॥ २७ ॥
एवमुक्तः स दुष्टात्मा प्राहसत्स्वनवत्तदा ।
अथ मां तत्र कैकेयी प्रेषयत्प्रणयेन तु ॥ २८ ॥

कैकेय्याः अनृतदर्शनोऽकर्तव्यबुद्धिमान् ॥ २१ ॥ क्षणमवसरम् ॥ २५ ॥ किंचित् वध्यं वध्यमानम् ॥ २७ ॥

[चतु०] अपारयन्ती सोढुमिति शेषः ॥ १८ ॥ अनन्तरोऽवहितः ॥ १९ ॥ नेयान्नोपगच्छेत् ॥ २० ॥ क्षणमवसरम् ॥ २५ ॥

[सर्व०] मादीर्घम् अदीर्घम् अल्पमित्यर्थः । क्षम क्षमस्व मासमर्धं चेति सार्धं मासमित्यर्थः ॥ १७ ॥ अनन्तरः सन्निहितः सन्नद्ध इत्यर्थः ॥ १९ ॥ नेयात् न गच्छेत् ॥ २० ॥ तं भावं राजाऽस्यां कीचकहतायां विरक्तः स्यादित्यभिप्रायम् ॥ २१ ॥ क्षणं स्वीकारम् ॥ २५ ॥

[विरो०] मासं कालम् । अधिकार्धसहितम् ॥ १७ ॥ किंचित् सत्त्वम् ॥ २७ ॥ प्रणयेन प्रैषयत् ॥ २८ ॥

[विष०] मासमप्यर्धसंमितम् । अर्धेन संमितं मासं मासार्धं पञ्चदशादिनलक्षणम् ॥ १७ ॥ प्रत्युपस्थितः अविद्यमानव्यवधानः कालः समयो यत्र तत्र क्षिप्रकारी भवेत्यर्थः । तत्रान्तरं न कार्यम् । 'शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः । तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥१९॥ कथं नेयादिमामिति । राजा विराटः कथमिमां नेयान्न गच्छेत् । 'कथं तर्के च संशये' ॥ २० ॥ तस्याः सुदेष्णायास्तं भावमनृतदर्शनोऽकर्तव्ये बुद्धिमान् कीचक इति शेषः ॥२१॥

[लक्षा०] आवृतदर्शनः आवृतं दर्शनं ज्ञानं यस्य

१७ ग. व. किंचित्कालं समाश्वस्य मासमप्यर्धसं°; सुदीर्घः क्षमितः कालो मासार्धं सह सांप्रतम् । १८ व. ज. बाष्पविमोक्षणम् । २१ व. नाहं स्वस्था कथंचन । २२ व. अब्रुवं तमहं मूर्खमात्मा° । २३ व. °नां सततं प्रिया । ग. निहन्युर्दुर्धर्षाः शू° । २६ व. ज. चाब्रवं सुतं कामा° ।

तेनैव देशिता पूर्वं भ्रातृप्रियचिकीर्षया ।
सुरामानय कल्याणि कीचकस्य निवेशनात् ॥२९॥
सूतपुत्रस्तु मां दृष्ट्वा महत्सान्त्वमवर्तयत् ।
सान्त्वे प्रतिहते क्रुद्धः परामर्शमनाऽभवत् ॥ ३० ॥
विदित्वा तस्य संकल्पं कीचकस्य दुरात्मनः ।
तथाऽहं राजशरणं जवेनैव प्रधाविता ॥ ३१ ॥
संदर्शने तु मां राज्ञः सूतपुत्रः परामृशत् ।
पातयित्वा तु दुष्टात्मा पदाऽहं तेन ताडिता ॥३२॥
प्रेक्षते स्म विराटस्तु कङ्कस्तु बहवो जनाः ।
रथिनः पीठमर्दाश्च हस्त्यारोहाश्च नैगमाः ॥ ३३ ॥
उपालब्धो मया राजा कङ्कश्चापि पुनः पुनः ।
ततो न वारितो राज्ञा न तस्याविनयः कृतः ॥३४॥
योऽयं राज्ञो विराटस्य कीचको नाम सारथिः ।
त्यक्तधर्मा नृशंसश्च नरस्त्रीसंमतः प्रियः ॥ ३५ ॥
शूरोऽभिमानी पापात्मा सर्वार्थेषु च मुग्धवान् ।
दारामर्शी महाभाग लभतेऽर्थान्बहूनपि ॥ ३६ ॥
आहरेदपि वित्तानि परेषां क्रोशतामपि ।
न तिष्ठते स्म सन्मार्गे न च धर्मं बुभूषति ॥ ३७ ॥
पापात्मा पापभावश्च कामबाणवशानुगः ।
अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनः पुनः ॥३८॥
दर्शने दर्शने हन्याद्यदि जह्यां च जीवितम् ।
तद्धर्मे यतमानानां महान् धर्मो शिष्यति ॥ ३९ ॥
समयं रक्षमाणानां भार्या वो नभविष्यति ।
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ॥ ४० ॥

---

सः मिथ्याज्ञानीत्यर्थः ॥ २१ ॥ कुरु मे क्षणमित्यत्र क्षणमवसरम् ॥ २५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[नील०] अवर्तयत् कृतवान् सान्त्वं प्रियवादम् ॥३०॥ राजशरणं राजाधिष्ठितं स्थानम् ॥ ३१ ॥ संदर्शने प्रत्यक्षम् ॥ ३२ ॥ पीठमर्दाः राजप्रियाः । 'पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च ' इति मेदिनी । नैगमाः नागराः वणिजो वा । ' नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च ' इति मेदिनी ॥ ३३ ॥ तस्य कीचकस्याविनयः न कृतः न नाशितः ॥ ३४ ॥ सारथिर्युद्धे सहायः नरस्य राज्ञः स्त्रियः सुदेष्णायाश्च संमतः संबन्धित्वात् ॥ ३५ ॥ तर्हि कथं तयोर्विप्रियं तद्वधेन कर्तव्यमित्याशङ्क्याह–शूर इति । मुग्धवान् मौढ्यं गतवान् दारामर्शी तवैव स्त्रियं मां स्पृष्टवान् ॥ ३६ ॥ तिष्ठते स्थिरो भवति बुभूषति प्राप्तुमिच्छति ॥ ३७ ॥ दर्शने दर्शने प्रतिदर्शनं स एवं राजवल्लभः कामात्मा च यदि मां हन्यात्ताडयेत् ताडनभयाद्वाऽहं यदि जीवितं जह्यां तत्तर्हि धर्मे यतमानानां भवतां धर्मो नाशिष्यति शौर्यं व्यर्थं स्यादित्यर्थः ॥ ३९ ॥ एतदेवाह–समयमिति । समयं मर्यादां त्रयोदशवर्षरूपां, भार्या पोषणीया नभविष्यति ॥ ४० ॥

[अर्जु०] पीठमर्दा अतिधृष्टा नायकस्यातिप्रिया वा । ' पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च ' इति मेदिनी । नैगमा वणिजः नागरिका वा । 'नैगमः स्याद्वाणिजिके नैगमो नगरोद्भवे' इति कोशः ॥ ३३ ॥ विनयो दण्डः ॥ ३४ ॥ मुग्धवान् मुग्धः ॥ ३६ ॥ परेषां क्रोशतां क्रन्दताम् । न च धर्मं बुभूषति नानुभवितुमिच्छति ॥ ३७ ॥ कामरागवशानुग इति । कामः स्त्रीविषयेच्छा स एवातिविद्यमानगुणाभिनिवेशः (?) (रागः ?) ॥ ३८ ॥ नशिष्यते नङ्क्ष्यति ॥ ३९ ॥

[चतु०] पीठमर्दा धृष्टाः । नैगमाः पौरा वणिजो वा ॥ ३३ ॥ मुग्धवान्मूढः ॥ ३६ ॥

[सर्व०] राजशरणं राजाधिष्ठितस्थानम् ॥ ३१ ॥ पीठमर्दा राजप्रियाः । नैगमाः वणिजः ॥ ३३ ॥ न कृतः न नाशितः ॥ ३४ ॥ सारथिः सहायः । नरस्य राज्ञः ॥ ३५ ॥ मुग्धवान् मौढ्यं गतवान् ॥ ३६ ॥ दारामर्शी स्त्रियं स्पृष्टवान् ॥ ३७ ॥ दर्शने दर्शने प्रतिदर्शनं स एव यदि मां हन्यात्तदाऽहं यदि जीवितं जह्याम् ॥ ३९ ॥ समयं त्रयोदशवर्षरूपां मर्यादाम् । नभविष्यति मरिष्यति ॥ ४० ॥

[विरो०] प्रेषणमाह–सुरामिति ॥ २९ ॥ 'पीठमर्दो...नायकप्रिये' इति मेदिनी । नैगमा वणिजः ॥३३॥ विनयो दण्डः ॥ ३४ ॥ लोभवान्; मुग्धवान्; मुख्यवान् (दे) मुग्ध... ॥ ३६ ॥ चिकीर्षति[२] बुभूषति (दे) बुभूर्षति ॥ ३७ ॥

इति श्रीमहाभारतव्याख्यायां विरोधार्थभञ्जन्यां विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[विष०] क्रुद्धः; क्षुद्रः ॥ ३० ॥ न बुभूषति नानुभवितुमिच्छति ॥ ३७ ॥ स मां पश्यति तदा तदा हन्ति तथा हन्याद्यथाऽहं जीवितं जह्यां त्यजेयम् ॥ ३९ ॥

---

२९ ज. ङ. तथैवं चोदिता पूर्वं । ज. °नय सैरन्ध्रि कीच° । ३१ ज. तस्य संभाषं कीचकस्य । ३२ ज. स तदा मां पदाऽवधीत् । ३४ वि. ण. उपलब्धो महाराज शङ्क° । ३५ ज. नृशंसश्च तरस्वी संम° । ३७ ज. व. न तिष्ठति स्म । ३८ घ. व. मोहात्मा मोहभावश्च । ३९ ग. एवं मे धर्मे व. स्वधर्मे यत° । व. धर्मो न सिध्यति; धर्मो विनङ्क्ष्यति ।

१ न तस्य विनयः कृत इति पाठः स्यात् ।

प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ।
आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः॥४१
भर्ता तु भार्यया रक्ष्यः कथं जायान्ममोदरे ।
वदतां वर्णधर्मश्च ब्राह्मणानामिति श्रुतः ॥ ४२ ॥
क्षत्रियस्य सदा धर्मो नान्यः शत्रुनिबर्हणात् ।
पश्यतो धर्मराजस्य कीचको मां पदाऽवधीत् ॥४३॥
तव चैव समक्षं वै भीमसेन महाबल ।
त्वया ह्यहं परित्राता तस्माद्घोराज्जटासुरात् ॥ ४४॥
जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ।
जहीममपि पापिष्ठं योऽयं मामवमन्यते ॥ ४५ ॥
कीचको राजवाल्लभ्याच्छोककृन्मम भारत ।
तमेवं कामसंमत्तं भिन्धि कुम्भमिवाश्मनि ॥ ४६ ॥
यो निमित्तमनर्थानां बहूनां मम भारत ।
तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ॥ ४७ ॥
विषमालोड्य पास्यामि मा कीचकवशं गमम् ।
श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ॥ ४८ ॥

**वैशम्पायन उवाच—**

इत्युक्त्वा मारुदत्कृष्णा भीमस्योरः समाश्रिता ।
भीमश्च तां परिष्वज्य महत्सान्त्वं प्रयुज्य च ॥४९॥
आश्वासयित्वा बहुशो भृशमार्तां सुमध्यमाम् ।
हेतुतत्त्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥ ५० ॥
प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलम् ।
कीचकं मनसाऽगच्छत् सृक्किणी परिसंलिहन् ॥
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ॥५१॥

इति श्रीमहाभारते विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः २२

भीमेन कीचकवधप्रतिज्ञानपूर्वकं द्रौपदीं प्रति नर्तनागारे कीचकेनसह संकेतकरणचोदनम् ॥ १ ॥ द्रौपद्यास्तथाकरणम् ॥ २ ॥ कीचकागमनात्प्रागेव गत्वा भीमेन तत्रावस्थाय पाञ्चालीसंगमाशयाऽऽगतस्य कीचकस्य बाहुयुद्धेन वधः ॥ ३ ॥ द्रौपद्या रक्षिण आहूय तस्य प्रदर्शनम् ॥ ४ ॥

**भीमसेन उवाच—**

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अद्य तं सूदयिष्यामि कीचकं सहबान्धवम् ॥ १ ॥
अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन सङ्गतम् ।
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते ॥ २ ॥
यैषा नर्तनशालेह मत्स्यराजेन कारिता ।
दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम्॥३॥
तत्रास्ति शयनं दिव्यं दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रास्य दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ॥ ४ ॥

---

[नील०] जायात् आविर्भवेत् वदतां कथयतां ब्राह्मणानां मुखात् वर्णधर्मश्च श्रुतः ॥ ४२ ॥ अभ्युदयिष्यति अभ्युदेष्यति ॥ ४७ ॥ कीचकवशं मा गमं न गच्छेयम् ॥ ४८ ॥ हेतुभिर्युक्तिभिः तत्त्वार्थैः यथार्थभूतैश्चार्थैः संयुक्तानि तैः ॥ ५० ॥ अगच्छत् स्मृतवान् सृक्किणी गल्लयोरभ्यन्तरे परिसंलिहन् जिह्वया परामृशन् ॥ ५१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[अर्जु०] जनयत्यात्मानं तस्यामिति जाया "स एव पुरुषः तस्यां सत्त्वाज्जायते" इति श्रुतेः ॥ ४१ ॥ तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यतीति । छन्दसि व्यवहिताश्चेति तं जीवन्तमित्यत्राभिशब्दः संबन्धनीयः । अभिशब्दस्य कर्मप्रवचनीयत्वात् जीवन्तमिति द्वितीया ॥ ४७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० एकविंशोऽध्यायः ॥ २१ ॥

[चतु०] जीवन्तं सन्तं तस्मिञ्जीवतीत्यर्थः ॥ ४७ ॥ उरो हृदयम् ॥ ४९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि एकविंशतितमोऽध्यायः ॥ २१ ॥

[सर्व०] जायात् आविर्भवेत् ॥ ४२ ॥ मा गमं न गच्छेयम् ॥ ४८ ॥ अगच्छत् स्मृतवान् । सृक्किणी ओष्ठप्रान्तौ ॥ ५१ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[विष०] निमित्तं कारणम् ॥ ४७ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[नील०] तथेति ॥ १ ॥ प्रदोषे रजनीमुखे । सङ्गतं संभाषणम् । निर्धूय अप्रकाश्य ॥ २ ॥ दृढाङ्गं काष्ठफलकमयम् ॥ ४ ॥

[अर्जु०] तत्र नर्तनागारे ॥ ४ ॥

---

४२ ग. घ. व. वदतां वर्णधर्मांश्च ब्राह्मणानां च मे श्रुतम् । ४६ व. तदेनं कामसंतप्तं । ४७ व. मम पापकृत् ॥ इति एकविंशोऽध्यायः ॥

२ क. अनेन संविदम् ; व. संगमम् । ३ व. यदेतन्नर्तनागारं मत्स्यराजेन कारितम् ; ४ ग. भीरु दृढसन्धि प्रतिष्ठितम्; घ. भीरु सुगाढं सुपरिष्कृतम् ।

यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम् ।
कुर्यास्तथा त्वं कल्याणि यथा सन्निहितो भवेत् ॥५॥

**वैशम्पायन उवाच—**

तथा तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।
रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ ६ ॥
तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ ७ ॥
सभायां पश्यतो राज्ञः पातयित्वा पदाऽहनम् ।
न चैवालभसे त्राणमभिपन्ना बलीयसा ॥ ८ ॥
प्रवादेनेह मत्स्यानां राजा नाम्नाऽयमुच्यते ।
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः ॥ ९ ॥
मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
अह्नाय तव सुश्रोणि शतं निष्कान् ददाम्यहम् ॥१०॥
दासीशतं च ते दद्यां दासानामपि चापरम् ।
रथांश्चाश्वतरीयुक्तानस्तु नौ भीरु सङ्गमः ॥ ११ ॥

**द्रौपद्युवाच—**

एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक ।
न त्वां सखा वा भ्राता वा जानीयात्संगतं मया १२
अनुप्रवादाद्भीताऽस्मि गन्धर्वाणां यशस्विनाम् ।
एवं मे प्रतिजानीहि ततोऽहं वशगा तव ॥ १३ ॥

**कीचक उवाच—**

एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे ।
एको भद्रे गमिष्यामि शून्यमावसथं तव ॥ १४ ॥
समागमार्थं रम्भोरु त्वया मदनमोहितः ।
यथा त्वां नैव पश्येयुर्गन्धर्वाः सूर्यवर्चसः ॥ १५ ॥

**द्रौपद्युवाच—**

यदेतन्नर्तनागारं मत्स्यराजेन कारितम् ।
दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् १६
तमिस्रे तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ॥ १७ ॥

**वैशम्पायन उवाच—**

तमर्थमपि जल्पन्त्याः कृष्णायाः कीचकेन ह ।
दिवसार्धं समभवन्मासेनैव समं नृप ॥ १८ ॥
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरन्ध्रीरूपिणं मूढो मृत्युं तं नावबुद्धवान् ॥ १९ ॥
गन्धाभरणमाल्येषु व्यासक्तः सविशेषतः ।
अलञ्चक्रे तदात्मानं सत्वरः काममोहितः ॥ २० ॥

---

[ चतु० ] प्रदोषे आरम्भे संविदं संकेतम् ॥ २ ॥

[ सर्व० ] सङ्गतं संभाषणम् ॥ २ ॥ दृढाङ्गं काष्ठफलकमयम् । प्रेतान् मृतान् ॥ ४ ॥

[ विष० ] संगमं समयम् । दुःखं शोकमिति पादप्रहारादिपराभवजनितं मानसम् ॥ २ ॥ दृढानि भारसहानि अङ्गानि पादेपाप्रभृतीनि यस्य तत् दृढाङ्गम् ॥ ४ ॥

[ लक्षा० ] दृढाङ्गं सुप्रतिष्ठितमित्यत्र दृढानि पट्टपश्चपादाद्यङ्गानि यस्य तत् दृढाङ्गम् ॥ ४ ॥

[ नील० ] अहनं हतवान् ॥ ८ ॥ नौ आवयोः ॥११॥ समयं संकेतं प्रतिपद्यस्व स्वीकुरु ॥ १२ ॥ दिवसार्धम् अहोरात्रार्धं दिनमेकमपि मासेन सममौत्कण्ठ्यादभूत्॥१८॥

[ अर्जु० ] संविदं समयं संकेतमित्यर्थः । ' संवित् क्रियाप्रतिज्ञायामाचारे ज्ञानगह्वरे । संभाषणे क्रियाकारे संकेते नाम्नि भाष्यते ॥ ' इति मेदिनी ॥ ५ ॥ धारयामासतुः भारमिवोढवन्तौ ॥ ६ ॥ नाम प्राकाश्ये ॥ ९ ॥ अह्नाय झटिति ॥ १० ॥ नौ आवयोः ॥ ११ ॥ समयं नियमम् ॥ १२ ॥ नावभोत्स्यन्ति न ज्ञास्यन्ति ॥ १५ ॥ तमिस्रे अन्धकारे ॥ १७ ॥ व्यासक्तो रागी ॥ २० ॥

[ चतु० ] धारयामासतुः हारमिवोढवन्तौ ॥ ६ ॥ अभिपन्ना परिभूता ॥ ८ ॥ प्रवादेन वचनमात्रेण । अयं विराटः ॥ ९ ॥ अह्नाय झटिति ॥ १० ॥ नौ आवयोः ॥ ११ ॥ तमिस्रेऽन्धकारे ॥ १७ ॥

[ विरो० ] प्रगतो वादः शब्दार्थज्ञानं यस्य तेन प्रवादेन सामान्यलोकेन । अयं विराटः राजा नाम्ना; नाम(दे) ॥९॥

[ विष० ] संगमं संगमविचारम् । यथा संनिहितो भवेत् । त्वत्समीपेऽवश्यमायाति ॥ ५ ॥ मया बलीयसा । अभिपन्ना त्वं पराभूता सती कुतोऽपि त्राणमात्मरक्षां न प्राप्तवती ॥ ८ ॥ प्रवादेन लोकवचनेन ॥ ९ ॥ अह्नाय अद्यैव ॥ १० ॥ नावभोत्स्यन्ते बुध अवगमने इत्यस्य लृटि रूपम् ॥ १५ ॥

[लक्षा०] अह्नाय तवेत्यत्र अह्नाय शीघ्रम् ॥ १० ॥ तत्र दोषः परिहृत इत्यत्र दोषः परस्त्रीगमनाख्यदोषः ॥१७॥

---

५ व.न बुध्येयुः कुर्वाणां तेन संगमम् । ८ व.पदा हता । व.न चैवालभथाः। ११ व. तेऽद्यास्तु । १२ व. एकं मे । ग. समयं सत्यं । १३ ग. घ. व. अनु (व)बोधाद्धि(द्रि)भीतास्मि । १५ ज. मदनदर्पितः । ज. नैव वेत्स्यन्ति; व. नावभोत्स्यन्ते; नाभिवेत्स्यन्ति । १८ ज. न. तमर्थं प्रतिजल्पन्त्याः । ज. समं तदा । १९ श्लोकारम्भेऽधिकं ज. ततः सा भीमसेनस्य तमर्थं प्रत्यवेदयत् । व. सैरन्ध्रीरूपसंमूढो मृत्युं तां ।

तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिन्तयतश्चापि तामेवायतलोचनाम् ॥ २१ ॥
आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ॥ २२ ॥
कृतसंप्रत्ययस्तस्याः कीचकः काममोहितः ।
नाजानादिवसं यान्तं चिन्तयानः समागमम् ॥ २३ ॥
ततस्तु द्रौपदी गत्वा तदा भीमं महानसे ।
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकम् ॥ २४ ॥
तमुवाच सुकेशान्ता कीचकस्य मया कृतः ।
सङ्गमो नर्तनागारे यथाऽवोचः परन्तप ॥ २५ ॥
शून्यं स नर्तनागारमागमिष्यति कीचकः ।
एको निशि महाबाहो कीचकं तं निषूदय ॥ २६ ॥
तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।
गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव ॥ २७ ॥
दर्पाच्च सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
तं त्वं प्रहरतां श्रेष्ठ ह्रदान्नागमिवोद्धर ॥ २८ ॥
अश्रु दुःखाभिभूताया मम मार्जस्व भारत ।
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च ॥ २९ ॥

भीमसेन उवाच—

स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम् ।
न ह्यन्यं कंचिदिच्छामि सहायं वरवर्णिनि ॥ ३० ॥
या मे प्रीतिस्त्वयाऽऽख्याता कीचकस्य समागमे ।
हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वरवर्णिनि ॥ ३१ ॥
सत्यं भ्रातॄंश्च धर्मं च पुरस्कृत्य ब्रवीमि ते ।
कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ॥ ३२ ॥
तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकम् ।
अथ चेदपि योत्स्यन्ति हिंस्ये मत्स्यानपि ध्रुवम् ३३
ततो दुर्योधनं हत्वा प्रतिपत्स्ये वसुन्धराम् ।
कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ॥ ३४ ॥

द्रौपद्युवाच—

यथा न संत्यजेथास्त्वं सत्यं वै मत्कृते विभो ।
निगूढस्त्वं तथा पार्थ कीचकं तं निषूदय ॥ ३५ ॥

भीमसेन उवाच—

एवमेतत्करिष्यामि यथा त्वं भीरु भाषसे ।
अद्य तं सूदयिष्यामि कीचकं सह बान्धवैः ॥ ३६ ॥
अदृश्यमानस्तस्याथ तमस्विन्यामनिन्दिते ।
नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ ३७ ॥

वैशम्पायन उवाच—

भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् ।
मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत कीचकम् ॥ ३८ ॥
कीचकश्चाप्यलंकृत्य यथाकाममुपागमत् ।
तां वेलां नर्तनागारं पाञ्चालीसङ्गमाशया ॥ ३९ ॥
मन्यमानः स सङ्केतमागारं प्राविशच्च तत् ।
प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ॥ ४० ॥

---

[नील०] कृतसंप्रत्ययः कृतविश्वासः नाजानात् न ज्ञातवान् ॥ २३ ॥ ह्रदात् यमुनाह्रदान्नागं कालियं कृष्णो यथा उद्धृतवांस्तद्वत्त्वमेनमिहलोकाद्दूरे पातयेति भावः ॥२८॥ तस्य तेनादृश्यमानः नागो हस्ती अलभ्यां त्वाम् ॥ ३७ ॥

[अर्जु०] यान्तं दिवसं नाजानादित्यन्वयः अक्ष(म)तया दर्शनात् सप्तसप्तित्वं सप्ताश्वत्वम् (?) ॥ २३ ॥ कन्दं पद्मादिमूलम् ॥ २८ ॥ यन्मां वेदयसि यत् कीचकस्य मारणम् अस्य मारणस्य साहाय्यं सहायसंपादनम् ॥ ३० ॥ गह्वरे गुप्ते प्रकाशे प्रकटे पोथयिष्यामि अट्टं कूटं (?) चूर्णयिष्यामि । भोत्स्यन्ति ज्ञास्यन्ति ॥ ३३ ॥

[चतु०] कन्दं मृणालम् ॥ २८ ॥ गह्वरे गुप्ते । योत्स्यन्ति उपैष्यन्ति ॥ ३३ ॥ कामम् इच्छातः ॥ ३४ ॥

तमस्विन्यां रात्रौ ॥३७॥ छन्नो निगूढः । हरिः सिंहः॥३८॥ तां संकेतितां वेलामवसरम् ॥ ३९ ॥

[सर्व०] कृतसंप्रत्ययः कृतविश्वासः ॥ २३ ॥ यमुनाया ह्रदान्नागं कालियम् । इहलोकाद्दूरे पातयेति भावः ॥ २८ ॥ हरिः सिंहः ॥ ३८ ॥

[विरो०] नाजानादिवसं यान्तं ध्यायमानः २ नाभ्यजानात् सप्तसप्तिं यान्तं ध्यायन् (दे) ॥ २३ ॥ साहाय्यं सहायकृतं रक्षणम् ॥ ३० ॥ पुरस्कृत्य मनसा ॥ ३२ ॥ अवभोत्स्यन्ति ॥ ३३ ॥

[विष०] गह्वरे रहसि एकान्ते पोथयिष्यामि; योधयिष्यामि ॥ ३३ ॥

[लक्षा०] नाग इवारुज इत्यत्र अरुजः नाशय ॥२८॥

---

२२ ज. चास्य श्रीः । २३ व. ज. प्रत्ययस्तत्र । २५ ग. तव वाक्यात्परन्तप । २८ ज. दर्पाच्च । क. नालं नाग इव; ङ. कन्दं नाग इव ।३० श्लोकादावधिकं ज. एवं करोम्यहं भद्रे यथा त्वं भीरु भाषसे । ग. घ. व. नह्यस्य कंचि° । ३२ क. शपामि ते । ३३ व. अथ योत्स्यन्ति मत्स्या वै निहनिष्यामि तानपि । ३५ ज. तथा वीर । ३८ ग. दृश्यः क्रुद्धस्तत्र विनिश्वसन् । ३९ श्लोकादावधिकं ग. व. एतस्मिन्नन्तरे सूतस्तदा चास्तं गते रवौ । व. पाञ्चाली यामभाषत । ४० व. मागारं प्राद्रवत्त्वरन् ।

पूर्वागतं ततस्तत्र भीममप्रतिमौजसम् ।
एकान्तावस्थितं चैनमाससाद स दुर्मतिः ॥ ४१ ॥
शयानं शयने तत्र सूतपुत्रः परामृशत् ।
जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ॥ ४२ ॥
उपसङ्गम्य चैवैनं कीचकः काममोहितः ।
हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥ ४३ ॥
प्रापितं ते मया वित्तं बहुरूपमनन्तकम् ।
यत्कृतं धनरत्नाढ्यं दासीशतपरिच्छदम् ॥ ४४ ॥
रूपलावण्ययुक्ताभिर्युवतीभिरलंकृतम् ।
गृहं चान्तःपुरं सुभ्रु क्रीडारतिविराजितम् ।
तत्सर्वं त्वां समुद्दिश्य सहसाऽहमुपागतः ॥ ४५ ॥
अकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।
सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ४६

**भीमसेन उवाच—**

दिष्ट्या त्वं दर्शनीयोऽथ दिष्ट्याऽऽत्मानं प्रशंससि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥४७॥
स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥४८॥

**वैशम्पायन उवाच—**

इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।
सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ॥ ४९ ॥
अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि ।
द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजम् ॥ ५० ॥
निराबाधा त्वयि हते सैरन्ध्री विचरिष्यति ।
सुखमेव चरिष्यन्ति सैरन्ध्र्याः पतयः सदा ॥५१॥
ततो जग्राह केशेषु माल्यवत्सु सुगन्धिषु ।
स केशेषु परामृष्टो बलेन बलिनां वरः ॥ ५२ ॥
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् ।
बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः ॥ ५३ ॥
वसन्ते वासिताहेतोर्बलवद्गजयोरिव ।
कीचकानां तु मुख्यस्य नराणामुत्तमस्य च ॥५४॥
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ।
अन्योन्यमभिसंरब्धौ परस्परजयैषिणौ ॥ ५५ ॥
ततः समुद्यम्य भुजौ पञ्चशीर्षाविवोरगौ ।
नखदंष्ट्राभिरन्योन्यं घ्नतः क्रोधविषोद्धतौ ॥ ५६ ॥
वेगेनाभिहतो भीमः कीचकेन बलीयसा ।
स्थिरप्रतिज्ञः स रणे पदान्न चलितः पदम् ॥५७॥
तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।
उभावपि प्रकाशेते प्रवृद्धौ वृषभाविव ॥ ५८ ॥
तयोर्ह्यासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदन्तायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५९ ॥
अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखम् ॥ ६० ॥

---

[ नील० ] यत्कृतं यदर्जितं धनादि तत्सर्वं ते तुभ्यं प्रापितं दत्तमिति संबन्धः ॥ ४४ ॥ अतः परं त्वां समुद्दिश्याहमत्रागतोऽस्मि ॥ ४५ ॥ प्रशंसन्ति त्वयाऽहं वृत इति हेतोरित्यभिप्रायः ॥ ४६ ॥ वासिताहेतोर्हस्तिनीनिमित्तम् ॥ ५४ ॥ करटामुखं गण्डस्थलस्थं मदनिर्गमस्थानम् । 'करटो गजगण्डे स्यात्' इति मेदिनी ॥ ६० ॥

[ अर्जु० ] तामखिलां रात्रिम् ॥(?)॥ हर्षोन्मथितचित्तात्मा हर्षेण उन्मथितं मन आत्मा शरीरं यस्य ॥ ४३ ॥ प्रकर्षन्तौ प्रोत्साहयन्तौ ॥ ५८ ॥ प्रभिन्नकरटामुखम् उद्गलितकरटस्थलच्छिद्रं प्रभिन्ने उद्भिन्ने इव करटामुखे गण्डवदने यस्य इति विग्रहः 'काकेभगण्डौ करटौ' इत्यमरः । छान्दसत्वाद् दीर्घः ॥ ६० ॥

[ चतु० ] हर्षेणोन्मथितौ चित्तात्मानौ मनोबुद्धी यस्य ॥ ४३ ॥ निराबाधा अप्रतिबन्धम् ॥ ५१ ॥ नखा एव दंष्ट्रास्ताभिः । ततः संहत्य मुष्टिं च पञ्चशीर्षमिवोरगमिति पाठः ॥ ५६ ॥

[ सर्व० ] प्रशंसन्ति त्वयाहं वृत इति हेतोः ॥ ४६ ॥ वासिताहेतोर्हस्तिनीनिमित्तम् ॥ ५४ ॥ करटामुखं गण्डस्थलस्थं मदनिर्गमस्थानम् ॥ ६० ॥

[ विरो० ] रत्नाढ्यं रत्नाद्यं (दे) ॥ ४४ ॥ कूटं (दे?) भगिनी सुदेष्णा प्रक्षेति(?) ॥५०॥ बलेनाक्षिप्य ॥५२–५३॥ पदात्स्थानात् पदमपि ॥ ५७ ॥ प्रभिन्नं जातं करटे गण्डे आ सर्वसामान्यलोके सम्यक्(?)मुखं छिद्रं यस्य ॥ ६० ॥

[ विष० ] दीर्घध्वनिरविज्ञातस्तुमुलः परिकीर्तितः ॥५९॥ करटामुखं प्रस्फुटितगण्डस्थलच्छिद्रं मदवशात् ॥ ६० ॥

---

४२ व. ज. मुत्युं सूतः परामृ° । ४३ क. कालचोदितः । ४४ व. यत्कृते धनरत्नाद्यं; घ. च. ज. त्वत्कृते । ४६ व. नाकस्मान्मां । श्लोकान्तेऽधिकं ग. एवंरूपसमायुक्तं मां कथं न प्रशंससि । ४९ च. ज. प्रहस्योवाच कीचकम् । ५२ च. बलिना । ५५ उत्तरार्धस्थाने ज. बाहुभिः समसज्जेतामः यसैः परिघैरिव । व. संरम्भात्…वधैषिणोः । ५६ व. ततः संवर्त(संहत्य)मुष्टिं च पञ्चशीर्षमिवोरगम् । वेगेना° । ज. जघ्नतुः क्रोधमूर्च्छितौ ।

स चाप्येनं तदा भीमः प्रतिजग्राह वीर्यवान् ।
तमाक्षिपत्कीचकोऽथ बलेन बलिनां वरः ॥ ६१ ॥
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ६२ ॥
अथैनमाक्षिप्य बलाद्गृहमध्ये वृकोदरः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ६३ ॥
भीमेन च परामृष्टो दुर्बलो बलिना रणे ।
प्रास्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ६४ ॥
ईषदाकलितं चापि क्रोधाद्द्रुतपदं स्थितम् ।
कीचको बलवान् भीमं जानुभ्यामाक्षिपद्भुवि ॥ ६५ ॥
पातितो भुवि भीमस्तु कीचकेन बलीयसा ।
उत्पपाताथ वेगेन दण्डपाणिरिवान्तकः ॥ ६६ ॥
स्पर्धया च बलोन्मत्तौ तावुभौ सूतपाण्डवौ ।
निशीथे पर्यकर्षेतां बलिनौ निर्जने स्थले ॥ ६७ ॥
ततस्तद्भवनं श्रेष्ठं प्राकम्पत मुहुर्मुहुः ।
बलवच्चापि संक्रुद्धावन्योन्यं प्रतिगर्जतः ॥ ६८ ॥
तलाभ्यां स तु भीमेन वक्षस्यभिहतो बली ।
कीचको रोषसंतप्तः पदान्न चलितः पदम् ॥ ६९ ॥
मुहूर्तं तु स तं वेगं सहित्वा भुवि दुःसहम् ।
बलादहीयत तदा सूतो भीमबलार्दितः ॥ ७० ॥
तं हीयमानं विज्ञाय भीमसेनो महाबलः ।
वक्षस्यानीय वेगेन ममर्दैनं विचेतसम् ॥ ७१ ॥
क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः ।
जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् ॥ ७२ ॥
गृहीत्वा कीचकं भीमो विरराज महाबलः ।
शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् ॥ ७३ ॥
तत एनं परिश्रान्तमुपलभ्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ७४ ॥
नदन्तं च महानादं भिन्नभेरीसमस्वनम् ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ७५ ॥
प्रगृह्य तरसा दोर्भ्यां कण्ठं तस्य वृकोदरः ।
अपीडयत कृष्णायास्तदा कोपोपशान्तये ॥ ७६ ॥
अथ तं भग्नसर्वाङ्गं व्याविद्धनयनाम्बरम् ।
आक्रम्य च कटीदेशे जानुना कीचकाधमम् ।
अपीडयत बाहुभ्यां पशुमारममारयत् ॥ ७७ ॥

[नील०] आकलितमाक्रान्तं द्रुतपदं चलितस्थानं यथा स्यात्तथा स्थितम् ॥ ६५ ॥ सहित्वा सोढ्वा बलादहीयत बलहीनोऽभूत् ॥ ७० ॥ वक्षस्यानीयानतं भुग्नं कृत्वा तन्नाभिना तच्छिरः संयोज्येत्यर्थः ॥ ७१ ॥ गृहीत्वा चेति पाठे इवार्थे चः ॥ ७३ ॥ योक्त्रयामास बबन्ध रशनया रज्ज्वा ॥ ७४ ॥ दोर्भ्यां पाणिभ्याम् ॥ ७६ ॥ व्याविद्धे अतिपीडनात् अधःक्षिप्ते नयने नयनगोलके अम्बरं वस्त्रं च यस्य नयनाकाशो वा । पशुमारं पशुं मारयित्वेवेति यज्ञियपशुवदित्यर्थः ॥ ७७ ॥

[अर्जु०] आक्षिप्य आकृष्य धूनयामास कम्पयामास ॥ ६३ ॥ व्यकम्पत विविधं पदमकरोत् ॥ ६४ ॥ ईषदागलितमनवधानात् । चलपदे अस्थिरपदे ॥ ६५ ॥ विररास शब्दं कृतवान् ॥ ७३ ॥ योक्त्रयामास रसनया रज्ज्वा स्वदनेच्छया । 'बन्धने स्वदने ध्वाने रसनोऽञ्जलिजिह्वयोः (?)' इति कोशः ॥ ७४ ॥

[चतु०] आगलितं भ्रष्टम् ॥ ६५ ॥ निशीथेऽर्धरात्रे ॥ ६७ ॥ योक्त्रयामास वेष्टितवान् । रशनया रज्ज्वा ॥ ७४ ॥ बाहुभ्याम् दोर्भ्याम् । 'विधृत्य हस्तौ पादौ च युगपत्पृथगेव वा । यथास्फालनमुत्फाल्य पशुमारं तदुच्यते पशुमारो नाम घातकैः सर्वतः पीडाकरणम् ॥ ७७ ॥

[सर्व०] सहित्वा सोढ्वा । अहीयत बलहीनोऽभूत् ॥ ७० ॥ वक्षस्यानीयानतं भुग्नं कृत्वा तन्नाभिना तच्छिरः संयोज्येत्यर्थः ॥ ७१ ॥ योक्त्रयामास बबन्ध । रशनया रज्ज्वा ॥ ७४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

[विरो०] आगलितं भ्रष्टं (च) ॥ ६५ ॥ निशि प्राकम्पत ॥ ६७ ॥ ममन्थ अस्थीनि विसंधीनि चकार ॥ ७१ ॥ योजया; योक्त्रया (दे च) ॥ ७४ ॥ 'विधृत्य हस्तैः पादैश्च युगपत् पृथगेव वा । यदास्फालनमुत्पात्य पशुमारं तदुच्यते' । अमारयत् प्राहरत् ॥ ७७ ॥

[विष०] व्यस्पन्दत विविधं स्पन्दनमकरोत् । स्पदि किंचिच्चलने । यथाप्राणं यथाबलम् ॥ ६४ ॥ विरराम विराममकरोत् ॥ ७३ ॥ व्याविद्धनयनाम्बरं परित्यक्तनेत्राभिधानदुकूलवसनम् ॥ ७७ ॥

६१ व. संप्राप्यैनं । ६३ व. ज. बलाद्गृह्य मध्ये । ६४ व. व्यस्पन्दत । ६५ व. ज. ईषदागलितं चापि क्रोधाच्चलपदं स्थितम् । ६६ व. भीमेन कीचकश्च । क. दण्डाहत इवोरगः । ६७ व. निःशब्दं पर्यकर्षेतां बलिनौ निशि निर्जने । ६८ व.ज. तावगर्जताम् । ७० व. श्रान्तो भीम° । ७१ व. ममन्थैनं । च. विचेतनम् । ७२ व. क्रोधाविष्टं । ७३ व. विननाद; ज. विरराव मह° । ७४ घ. व. पीडयामास ।

तं विषीदन्तमाज्ञाय कीचकं पाण्डुनन्दनः ।
भूतले भ्रामयामास वाक्यं चेदमुवाच ह ।। ७८ ।।
अद्याहमनृणो भूत्वा भ्रातुर्भार्यापहारिणम् ।
शान्तिं लब्धास्मि परमां हत्वा सैरन्ध्रिकण्टकम् ७९
इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसरागनेत्रः ।
आस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज।।
निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटं बली ।
समाक्रम्य च संक्रुद्धो बलेन बलिनां वरः ।।८१।।
तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः ।
काये प्रवेशयामास पशोरिव पिनाकधृक् ।। ८२ ।।
तं संमथितसर्वाङ्गं मांसपिण्डोपमं कृतम् ।
कृष्णाया दर्शयामास भीमसेनो महाबलः ।।८३।।
उवाच च महातेजा द्रौपदीं योषितां वराम् ।
पश्यैनमेहि पाञ्चालि कामुकोऽयं यथा कृतः ।।८४।।
एवमुक्त्वा महाराज भीमो भीमपराक्रमः ।
पादेन पीडयामास तस्य कायं दुरात्मनः ।। ८५ ।।
ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् ।
पाञ्चालीं स तदा वीर इदं वचनमब्रवीत् ।। ८६ ।।

प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्विताम् ।
एवं ते भीरु वध्यन्ते कीचकः शोभते यथा ।। ८७।।
तत्कृत्वा दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् ।
तथा स कीचकं हत्वा गत्वा रोषस्य वै शमम् ।।८८।।
आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम् ।
कीचकं घातयित्वा तु द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंतापा सभापालानुवाच ह ।। ८९ ।।
कीचकोऽयं हतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसंमत्तस्तत्रागच्छत पश्यत ।। ९० ।।
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव समाजग्मुरादायोल्काः सहस्रशः ।। ९१ ।।
ततो गत्वाऽथ तद्वेश्म कीचकं विनिपातितम् ।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ।। ९२ ।।
पाणिपादविहीनं तु दृष्ट्वा च व्यथिताऽभवन् ।
निरीक्षन्ति ततः सर्वे परं विस्मयमागताः ।। ९३ ।।
अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ।
इति स्म तं परीक्षन्ते गन्धर्वेण हतं तदा ।। ९४।।

इति श्रीमहाभारते विराटपर्वणि द्वाविंशोऽध्यायः ।। २२ ।।

---

[ नील० ] सैरन्ध्रिकण्टकं ह्रस्वत्वं समासनिमित्तम् ।। ७९ ।। तस्य पादौ चेति । काये देहमध्यभागे तत्तन्निर्गममार्गेणैवाङ्गान्यन्तः प्रवेश्य । 'यो अस्मै रेवान्न सुनोति सोमं निररत्नौ मघवा तं दधाति' इति श्रुतमरत्नौ निर्धानमेतदेव ज्ञेयम् । रेवान् धनवान् निर्धानं निष्कृष्य स्थापनम् ।। ८२ ।। कृष्णायाः द्रौपद्यै ।। ८३ ।। सुकेशान्ते सुष्ठु कौटिल्येन विराजमानाः केशान्ता यस्याः । शोभत इत्युपहासः। एवमेव धार्तराष्ट्रान्मारयिष्यामीति भावः ।।८७।। रोषस्य शमम् अन्तं फलस्य जातत्वात् ।। ८८ ।।

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. द्वाविंशोऽध्यायः ।। २२ ।।

[ अर्जु० ] व्यसुं विगतप्राणम् ।। ८० ।।

इति श्रीमहा० मर्जुनमिश्रकृतायां वि.प. द्वाविंशोऽध्यायः ।। २२ ।।

[ चतु० ] व्यसुं मृतम् ।। ८० ।। पादाष्ठीलैः पदाघातैः ।। ८२ ।। शमं शान्तिम् ।। ८८ ।।

इति श्रीचतु० महाभारतटीकायां वि.प. द्वाविंशोऽध्यायः ।। २२ ।।

[ विरो० ] अष्ठीलैः शून्यैः ( ? ) पशोर्मृगाकारयज्ञस्य। पादेन पीडयामास; पादाष्ठीलैर्जघानाथ ( दे ) ।। ८२ ।। शोभते; शोभने ( च दे ) ।। ८७ ।।

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्वाविंशोऽध्यायः ।। २२ ।।

[ विष० ] एतेन वचनेन उषाया रात्रेरधिष्ठात्रीदेवतायाः पिशितस्य पिण्डमिव । यद्वा उषा प्रभातेऽधिदेव्याश्चामुण्डायाः दत्तं मांसपिण्डमिव । उषाशब्देन रात्रिरपि ।। ९४।।

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि द्वाविंशोऽध्यायः ।। २२ ।।

[ लक्षा० ] काये निवेशयामासेत्यत्र गुदरन्ध्रद्वारा प्रवेशयामास ।। ८२ ।।

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि द्वाविंशोऽध्यायः ।। २२ ।।

---

७९ व. भार्याप्रहारिणं । ग. सौख्यं प्राप्स्यामि परमं ८० ज. विस्रस्त; अ. अस्रस्तभर° । ग. घ. °भ्रान्तचित्तं । ८२ श्लोकात्प्रागधिकं च. ज. ङ. अभ्याहनन्महाबाहुः पादाष्ठीलैः सुदारुणैः । ८३ व. कृष्णायै । ८४ ग. घ. ज. व. द्रौपदीं पाण्डुनन्दनः । ८५ ज. °मुक्त्वा महाबाहुः । ज. घट्टयामास । व. तस्य कण्ठं । ८६ ज. दर्शयामास । ८७ व. ज. शोभने । ८८ ग. रोषस्य निष्कृतिं; व. वैशसम् । ८९ ग. द्रौपदीं भूयः । ९३ पूर्वार्धात्परं च. ज. ततो भीता ययुः सर्वे सायुधा भरतर्षभ । अथैनं हृष्टरोमाणो विस्मिताः प्रेक्ष्य कीचकम् । ९४ ज. इति स्म तं निरीक्षन्ते गन्धर्वैर्निहतं तथा । अवसानेऽधिकः ग.घ.व. हतं हि दृष्ट्वा निशि सैन्यनाथं राज्ञो विराटस्य बलाभिमुख्याः । कीलालमिश्रं पिशितस्य पिण्डं ते मेनिरे दत्तमुपाधिदेव्याः ।। द्वाविंशोऽध्यायः ।।

## त्रयोविंशोऽध्यायः २३

कीचकमन्त्यसंस्कारेण संस्कर्तुं बहिर्नयन्तः उपकीचकास्तत्र स्तम्भमालिङ्ग्य तिष्ठन्तीं द्रौपदीं दृष्ट्वा अस्याः कृते कीचको हत इति रोषात्तामपि तेन सह दग्धुमिच्छन्तस्तस्मिन्नेव याने तां निबध्य श्मशानाभिमुखं जग्मुः ॥ १ ॥ ततो द्रौपद्या आक्रोशश्रवणेन भीमेनामार्गेण वेषं परिवर्त्य गत्वा श्मशानस्थं महान्तं वृक्षमुत्पाट्य तेनोपकीचकानां द्रौपदीं त्यक्त्वा प्रद्रवतां हननम् ॥ २ ॥ ततो द्रौपद्या बन्धनं विमुच्य सुदेष्णाभवने प्रेषणं मार्गान्तरेण स्वस्थाने गमनं च ॥ ३ ॥

**वैशम्पायन उवाच—**

तस्मिन्काले समागम्य सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्य समन्ततः ॥ १ ॥
सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम् ।
तथासंभिन्नसर्वाङ्गं कूर्मं स्थल इवोद्धृतम् ॥ २ ॥
पोथितं भीमसेनेन तमिन्द्रेणेव दानवम् ।
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ॥ ३ ॥
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ।
अदूराच्चानवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥४॥
समवेतेषु सर्वेषु तामूचुरुपकीचकाः ।
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ॥ ५ ॥
अथवा नैव हन्तव्या दह्यतां कामिना सह ।
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ॥ ६ ॥
ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः ।
सहानेनाद्य दह्येम तदनुज्ञातुमर्हसि ॥ ७ ॥
पराक्रमं तु सूतानां मत्वा राजाऽन्वमोदत ।
सैरन्ध्र्याः सूतपुत्रेण सह दाहं विशाम्पतिः ॥ ८ ॥
तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् ।
मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ ९ ॥
ततस्तु तां समारोप्य निबध्य च सुमध्यमाम् ।
जग्मुरुद्यम्य ते सर्वे श्मशानाभिमुखास्तदा ॥ १० ॥
ह्रियमाणा तु सा राजन् सूतपुत्रैरनिन्दिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती॥११॥

**द्रौपद्युवाच—**

जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥१२॥
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।
व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम् ॥ १३ ॥
रथघोषश्च बलवान् गन्धर्वाणां तरस्विनाम् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १४ ॥

**वैशम्पायन उवाच—**

तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेवितम् ।
श्रुत्वैवाभ्यापतद्भीमः शयनादविचारयन् ॥ १५ ॥

**भीमसेन उवाच—**

अहं शृणोमि ते वाचं त्वया सैरन्ध्रि भाषिताम् ।
तस्मात्ते सूतपुत्रेभ्यो भयं भीरु न विद्यते ॥ १६ ॥

**वैशम्पायन उवाच—**

इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया ।
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ॥ १७ ॥
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ।
स भीमसेनः प्राकारादारुह्य तरसा द्रुमम् ॥ १८ ॥

---

[ नील० ] व्यायतं व्यापारं यत्नं कृत्वा वेषं च विपरिवर्त्य गन्धर्ववेषसदृशं कृत्वा ॥ १७ ॥ अभ्यवस्कन्द्य निपत्य द्रुममारुह्य ततश्च द्रौपदीनयनप्रदेशं द्रष्टुमित्यर्थः ॥१८॥

[ अर्जु० ] पोक्षितं प्रोथितम् ॥ ३ ॥ कृते निमित्तम् ॥ ७ ॥ विजजृम्भे प्रसूतवान् ॥ १७ ॥ सव्यायनं दक्षिणमार्गम् । स व्यायतं कृत्वेति पाठे स भीमो व्यायतं व्यायामं शिक्षाविशेष इति कृत्वा इति केचित् । सव्यस्य वामस्य आयतं दीर्घं कृत्वा दक्षिणस्य संकोचमित्यर्थादन्ये । वेशं सूदालंकारं परिवर्त्य गन्धर्ववेशेन ॥ १७ ॥ अभ्यवस्कन्द्य लङ्घयित्वा आरुज्य भङ्क्त्वा ॥ १८ ॥

[ चतु० ] उपकीचकाः कीचकावरजाः ॥ ५ ॥ ततो हेतोः ॥ ७ ॥ मोमुह्यमानां मोहितवतीम् ॥ ९ ॥ उद्यम्यादाय ॥ १० ॥ विजजृम्भे गात्रनियाममकरोत् । सव्यायतं वामम् ॥ १७ ॥ अवस्कन्द्य निपत्येत्यर्थः । आरुज्य भङ्क्त्वा ॥ १८ ॥

[ सर्व० ] जयप्रभृतीनि पाण्डवादीनां गुप्तनामानि ॥ १२ ॥ विकृतमायतं विशालं गन्धर्ववेषमिति यावत् ॥ १७ ॥ वृक्षमारुह्य द्रौपदीनयनप्रदेशं द्रष्टुमित्यर्थः ॥ १८ ॥

[ विरो० ] पोथितं; प्रोक्षितम् ( दे ) ॥ ३ ॥ उपकीचकाः कीचकावरजाः (च) ॥ ५ ॥ समारोप्य याने (शे) ॥ १० ॥

---

१ व. ततः कालं । २ व. तथा सर्वाङ्गसंभग्नं । व. ज. स्थलमिवो° । ५ व. समवेक्ष्यैव ते सर्वे; ग. घ. समवेक्षेत; समवेतेषु सूतेषु । ६ व. अथवा नेह । ७ व. सहानेनानुदह्येत; सहानेनाद्य गच्छेत । ८ पूर्वार्धस्थाने च. ज. निहतं कीचकं दृष्ट्वा विराटोऽतीव दुःखितः । ग. घ. व. सैरन्ध्र्याः प्रेक्षमाणायाः । ग. घ. व. विशांपते । ९ घ. व. रोरूयमाणां ते । १० व. जहुरुद्यम्य । १३ व. भीमो घोरः । १४ ग. घ. च. यशस्विनाम् । १५ ज. ग. घ. व. परिदेविताः । क. श्रुत्वैवाभ्युत्थितो; श्रुत्वोत्तस्थौ तदा । १८ घ. च. व. अद्वारेण विनिष्क्रम्य; स लङ्घयित्वा प्राकारमा°; व. प्रस्कन्द्य भीमः प्राका°; आरुज्य तरसा ।

श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः ।
स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात् ।
जवेन पतितो भीमः सूतानामग्रतस्तदा ॥ १९ ॥
चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम् ।
तालमात्रं महास्कन्धं मूर्धशुष्कं विशाम्पते ॥ २० ॥
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ॥ २१ ॥
स तं वृक्षं दशव्यामं सस्कन्धविटपं बली ।
प्रगृह्याभ्यद्रवत्सूतान् दण्डपाणिरिवान्तकः ॥ २२ ॥
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षाः संघशस्तत्र शेरते ॥ २३ ॥
तं सिंहमिव संक्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुः सर्वशः सूता विषादभयकम्पिताः ॥ २४ ॥
गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।
सैरन्ध्री मुच्यतां शीघ्रं यतो नो भयमागतम् ॥२५॥

वैशम्पायन उवाच—

ते तु दृष्ट्वा तदाऽऽविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ २६ ॥
द्रवतस्तांस्तु संप्रेक्ष्य स वज्री दानवानिव ।
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥२७॥
वृक्षेणैतेन राजेन्द्र प्रभञ्जनसुतो बली ।
तत आश्वासयत्कृष्णां स विमुच्य विशाम्पते ॥२८॥
उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीम् ।
अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः ॥ २९॥
एवं ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसम् ।
प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ३० ॥
अन्येनाहं गमिष्यामि विराटस्य महानसम् ॥ ३१ ॥

---

जृभी गात्रविनामे । व्यायतं व्यामं २ व्यायनं दक्षिणं (दे) ॥ १७ ॥ आरुह्य; आरुज्य (दे) ॥ १८ ॥

[ विष० ] काल्यं कालवशंगतम् ॥ १ ॥ मां कोऽपि ज्ञास्यति ततः समयलोपः स्यादिति चिन्तयन् रोषान्महाकाय इवाऽभवत् । यद्वा जृम्भाञ्चकार तान्कीचकान्भक्षयितुमिव जिघत्सया । सङ्व्यो नाम सङ्ग्रामस्तस्य आयतिं सामग्रीं कृत्वा गन्धर्ववेषेण पालट्य (?) ॥ १७ ॥ तरसा बलेनारुज्य भङ्क्त्वा । रुजो भङ्गे ॥ १८ ॥

[ लक्षा० ] तमेव पर्यङ्कतले शुभाङ्गीत्यत्र तमेव कीचकहन्तारमेव प्राक्रोशादित्युत्तरेणान्वयः ॥ ११ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[नील०] मूर्ध्नि शुष्कमिति शोषणोन्मुखत्वेनातिपक्वत्वं सूच्यते ॥ २० ॥ परिरभ्य उपक्रम्य उत्पाटनार्थं यत्नं कृत्वा उत्पाटितं च तं स्कन्धे आरोपयामास ॥२१॥ व्यामं प्रसारितयोर्बाह्वोरन्तरम् ॥ २२ ॥ विमुच्य मोचयित्वा ॥ २६ ॥ अन्येन मार्गेण ॥ ३१ ॥

[ अर्जु० ] तालमात्रं चत्वारिंशद्धस्तप्रमाणम् । अग्रे दशव्याममिति वचनात् तालवृक्षप्रमाणं वा ॥ २० ॥ नागवत् हस्तिवत् ॥ २१ ॥ दशव्यामम् व्यामो हस्तचतुष्टयम् ॥ २२ ॥ दिधक्षन्तः दग्धुमिच्छन्तः ॥ २४ ॥ आविद्धं गृहीतम् ॥ २६ ॥

[ चतु० ] आविद्धं भ्रामितम् ॥ २६ ॥ प्रैहि प्रविश ॥ ३० ॥ अन्येन पथा ॥ ३१ ॥

[ सर्व० ] व्यामं प्रसारितयोर्बाह्वोरन्तरम् ॥ २२ ॥ विमुच्य मोचयित्वा ॥ २६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[ विरो० ] उपक्रम्य उत्पाट्य ॥ २१ ॥ आविद्धं भ्रामितम् ॥ २६ ॥ अन्येन पथा ॥ ३१ ॥

[ विष० ] दशव्यामं चत्वारिंशद्धस्तपरिमितम् ॥ २३ ॥ कीचकवधाद्विषादः सैरन्ध्रीसहानयनलक्षणादकार्यकरणाद्भयम् ॥ २४ ॥

इति श्रीमहाभारतविषमपदविवरणे वि० प० त्रयोविंशोऽध्यायः ॥ २३ ॥

---

२२ क. व्यामं निष्पत्रमकरोत्तदा २५ ग. घ. च. ज. व. महन्नो । २८ व. प्रविमुच्य; ज. प्रतिमुच्य । ३० व. त्वां सत्यनिन्दिते । ३१ व. अन्येनाहं पथा यामि । त्रयोविंशोऽध्यायः ॥

२४ श्लादुत्तरमधिकं क. ग. घ. च. वि. ण. म. व.

तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा ।
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः ॥
परस्परमथोचुस्ते विषादभयकम्पिताः ॥ १ ॥

३१ श्लात्परमधिकं ग. घ. व.

इत्युक्ता भीमसेनेन अदृश्या सा च तत्क्षणात् ।
अपासर्पत मा कश्चित्पश्येदित्यभिशङ्कया ॥ १ ॥
पञ्चाधिकं शतं हत्वा वृक्षेण स महाभुजः ।
जगाम नगरं भूयः सिंहो हत्वा मृगानिव ॥ २ ॥

---

१ घ. वक्रुद्धं । २ व. कीचकं तदा । ३ व. पश्य पश्यत कीचकाः ।

**वैशम्पायन उवाच—**

पञ्चाधिकं शतं तच्च निहतं तेन भारत ।
महावनमिवच्छिन्नं शिश्ये विगलितद्रुमम् ॥ ३२ ॥
एवं ते निहता राजन् शतं पञ्च च कीचकाः ।
स च सेनापतिः पूर्वमित्येतत्सूतषट्शतम् ॥ ३३ ॥
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च सङ्गताः ।
विस्मयं परमं गत्वा नोचुः किंचन भारत ॥ ३४ ॥

इति श्रीमहाभारते विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः २४

सैरन्ध्रीनिमित्तः सूतानामिव पौराणां नाशो माभूदिति पौरप्रार्थितेन राज्ञा सुदेष्णामुखेनेतो गच्छेति द्रौपदीं प्रति चोदनम् ॥ १ ॥ त्रयोदशाहमात्रं मे राजा क्षाम्य त्विति द्रौपद्या सुदेष्णायाः प्रार्थनम् ॥ २ ॥

**वैशम्पायन उवाच—**

ते दृष्ट्वा निहतान्सूतान् राज्ञे गत्वा न्यवेदयन् ।
गन्धर्वैर्निहता राजन् सूतपुत्रा महाबलाः ॥ १ ॥
यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः ।
व्यतिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले ॥ २ ॥
सैरन्ध्री च विमुक्ताऽसौ पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ३ ॥
यथारूपा च सैरन्ध्री गन्धर्वाश्च महाबलाः ।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४ ॥
यथा सैरन्ध्रिदोषेण न ते राजन्निदं पुरम् ।
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ॥ ५ ॥
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्क्रियतामेषां सूतानां परमाः क्रियाः ॥ ६ ॥
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्वशः ॥ ७ ॥
इत्युक्त्वा परमोद्विग्नः प्रविश्यान्तःपुरं शुभम् ।
सुदेष्णामब्रवीद्राजा महिषीं ज.तसाध्वसः ।
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ ८ ॥
गच्छ सैरन्ध्रि भद्रं ते यथाकामं वरानने ।
बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ ९ ॥
न हित्वामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।
स्त्रियास्त्वदोषस्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ १० ॥

**वैशम्पायन उवाच—**

अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ११ ॥
त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ १२ ॥
तां दृष्ट्वा पुरुषा राजन् प्राद्रवन्त दिशो दश ।
गन्धर्वाणां भयत्रस्ताः केचिद्दृष्टीर्न्यमीलयन् ॥ १३ ॥
ततो महानसद्वारि भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ १४ ॥

---

[नील०] शिश्ये शयितम् ॥ ३२ ॥ षट्शतं षडधिकं शतम् ॥ ३३ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. त्रयोविंशोऽध्यायः ॥ २३ ॥

[अर्जु०] शिश्ये शयितम् ॥ ३२ ॥

इति श्रीमदर्जुनमिश्रविरचितायां महाभारतव्याख्यायां विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[चतु०] सूतानां षट्शतं षडधिकं शतमित्यर्थः ॥ ३३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[विरो०] षट्शतं षडधिकं शतम् ॥ ३३ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[नील०] त इति ॥ १ ॥ न हित्वामिति । हित्वां हातुं योग्याम् । "कृत्यार्थे तवैकेन्केन्यत्वनः" इति त्वन् जहातेश्चेति हित्वमक्त्वायामपि छान्दसम् । पित्वो भिक्षेतेत्यादिवत् त्वां सैरन्ध्रीं हित्वां त्यक्तुं योग्यामप्यहं राजा गच्छेति वक्तुं नोत्सहे स्त्रियास्तु सुदेष्णायास्तव तां (त्वां) प्रत्येतद्वक्तुमदोष इति राजवाक्यानुवादः । यस्मादेवं राजा मामाज्ञापितवान् तस्मादेवं त्वां प्रति प्रब्रवीम्यहमिति सुदेष्णावचनम् ॥ १० ॥

[अर्जु०] मृतानां चरमक्रिया दाहः ॥ ६ ॥ जातसाध्वसः जातभयः ॥ ८ ॥

[चतु०] विनिकीर्णाः विक्षिप्ताः ॥ २ ॥ चरमक्रिया प्रेतकृत्यम् ॥ ६ ॥ अबले हे ॥ ९ ॥

---

१ ग. ज. च. सूतपुत्राः परंशताः; त्राः परंतपाः । २ च. विनिकीर्णाः प्रदृश्यन्ते; व. विनिकीर्णं प्रदृश्येत । ५ ज. ड. सैरन्ध्रिरोपेण । ६ ज. चरमा क्रिया । ७ व. वस्त्रैर्गन्धैश्च स° । ९ व. भद्रं ते यथां कामयसे गतिम्; ग. घ. च. ज. यथाकामं चराबले । १० व. स्त्रियस्त्वशेषास्त्वां वक्तुं°; च. छ. °षस्त्वां । ११ वं अथ मुक्तभया कृष्णा । १२ व. शार्दूलेन तपस्विनी । १३ व. प्राद्रवन्तो दिशो । अ. छ. केचिद्दृष्ट्वा न्यमीलयन् ।

तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत् ।
गन्धर्वराजाय नमो येनास्मि परिमोचिता ॥ १५ ॥

**भीमसेन उवाच—**

ये पुरा विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा ह्यनृणा विहरन्त्वतः ॥ १६ ॥

**वैशम्पायन उवाच—**

ततः सा नर्तनागारे धनञ्जयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् ॥ १७ ॥
ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः ।
कन्या ददृशुरायान्तीं क्लिष्टां कृष्णामनागसम् ॥ १८ ॥

**कन्या ऊचुः—**

दिष्ट्या सैरन्ध्रि मुक्तासि दिष्ट्याऽसि पुनरागता ।
दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् १९

**बृहन्नलोवाच—**

कथं सैरन्ध्रि मुक्ताऽसि कथं पापाश्च ते हताः ।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ २० ॥

**सैरन्ध्युवाच—**

बृहन्नले किं नु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् २१
नहि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव ॥ २२ ॥

**बृहन्नलोवाच—**

बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनुत्तमम् ।
तिर्यग्योनिगता बाले न चैनामवबुद्ध्यसे ॥ २३ ॥
त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता ।
क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न चिन्तयेत् २४
न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित् ।
वेदितुं शक्यते नूनं तेन मां नावबुद्ध्यसे ॥ २५ ॥

**वैशम्पायन उवाच—**

ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायाः समीपमुपगामिनी ॥ २६ ॥

---

[ सर्व० ] स्त्रियास्तु सुदेष्णायास्तव तां प्रत्येतद्वक्तुमदोषः ॥ १० ॥

[ विरो० ] विषयः सुरूपस्त्रीरूपः ॥ ४ ॥

[ विष० ] विनिकीर्णे शतधा गतम् ॥ २ ॥ संशयितं मरणसंदेहयुक्तम् ॥ ३ ॥ नहि त्वेति । मम स्त्रीत्वात्त्वया सह वक्तुं न दोष इत्यर्थः ॥ १० ॥

[ नील० ] पुरुषा यस्याः वशवर्तिन आज्ञाकारिणः । इह विराटपुरे पुरा वर्षमात्रं विहरन्ति ते तस्याः वचनं गन्धर्वराजाय नम इत्यादिरूपं श्रुत्वाऽतः परं अनृणास्तदाज्ञासंपादनेन अज्ञातवाससमाप्त्या वा कृतकृत्याः सन्तो विहरन्तु ॥ १६ ॥ प्रहसन्निवेति पूर्वसंस्कारात्पुँल्लिङ्गप्रयोगः । प्रहसन्तीवेत्यर्थः ॥ २२ ॥ तिर्यक् नीचं क्लीबत्वं तन्मयी योनिः शरीरं तत्र गता ॥ २३ ॥

[ अर्जु० ] संज्ञाभिः संकेतवचनैः ॥ १५ ॥ तिर्यग्योनिगता वाले दाशब्द इवार्थे । आले हे सखि । अथवा वाले हे अङ्ग(? ज्ञा)नें अत एवाह न चैनामिति ॥ २३ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ चतु० ] संज्ञाभिः संकेतवाक्यैः ॥ १५ ॥ गन्धर्वा वशर्तिनस्तवेति शेषः ॥ १६ ॥ वालेऽनभिज्ञे हे मा माम् ॥ २३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[सर्व०] ये पुरुषाः यस्याः वशवर्तिनः आज्ञाकारिणः । इह विराटपुरे पुरा वर्षमात्रं विहरन्ति ते तस्याः वचनं गन्धर्वराजाय नम इत्यादिरूपं श्रुत्वाऽतः परमनृणास्तदाज्ञासंपादनेन कृतकृत्याः सन्तो विहरन्तु ॥ १६ ॥ पूर्वसंस्कारात्प्रहसन्निवेति पुंस्त्वम् ॥ २२ ॥

इति श्रीभारतार्थप्रकाशे सर्वज्ञनारायणकृतौ विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ विरो० ] पुरा विचरन्ति अग्रे विचरिष्यन्ति वचनं गन्धर्वराजाय नम इत्यादि ॥ १६ ॥ प्रहसन्निति पुंस्त्वाभिप्रायेण ॥ २२ ॥ न चैनामव २ नचैना माव (च) ॥ २३ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ विष० ] सर्वेषु कालेष्वदूषिता दूषणं न प्राप्ता । 'आत्मानमात्मना सत्यो गोपायन्ति कुलस्त्रियः' ॥ २४ ॥ अपि तु सुदेष्णासहोदराणां वधादपि न पलायनशीला । तत्राऽऽयाता निर्भयत्वात् ॥ २६ ॥

---

१५ घ. येनास्मि परिरक्षिता; व. परिमोक्षिता । १६ व. ये यस्या विचरन्तीह । ग. घ. व. ह्यनृणा विचरन्त्युत । १८ अस्मादुत्तरम् व. घ. दृष्ट्वा तामेत्य सर्वांस्ता इदमुचुः सहर्षिताः इत्यधिकम् । २४ ग. घ. व. त्वं च सर्वेष्वदूषिता (का) २५ व. शक्यते भद्रे तेन मां । २६ ज. ङं. वि. राजवेश्मनि । क. समीपमनसूयिनी; ग. घ. वि. ज. ङं. समीपमपलायिनी ।

तामब्रवीद्राजपत्नी विराटवचनादिदम् ।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ॥२७॥
राजा बिभेति ते भद्रे गन्धर्वेभ्यः पराभवात् ।
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि ।
पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः ॥ २८ ॥

**सैरन्ध्र्युवाच—**

त्रयोदशाहमात्रं मे राजा क्षाम्यतु भामिनि ।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ २९ ॥
ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् ।
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥३०॥

इति श्रीमहाभारते विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तं कीचकवधपर्व ।

## ( अथ गोहरणपर्व ४ )

### पञ्चविंशोऽध्यायः २५

दुर्योधनप्रयुक्तैश्चारैश्चिरमन्विष्यद्भिरपि पाण्डवप्रवृत्तिमलभमानैर्विराटनगरे सैरन्ध्रीनिमित्तं गन्धर्वैरदृश्यमानैर्निशि सानुजस्य कीचकस्य वधं श्रुतवद्भिर्हास्तिनपुरं गत्वा राज्ञे तस्य निवेदनम् ॥ १ ॥

**वैशम्पायन उवाच—**

कीचकस्य तु घातेन सानुजस्य विशाम्पते ।
अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥१॥
तस्मिन्पुरे जनपदे संजल्पोऽभूच्च संघशः ।
शौर्याद्धि वल्लभो राज्ञो महासत्त्वः स कीचकः ॥२॥
आसीत्प्रहर्ता सैन्यानां दारामर्शी च दुर्मतिः ।
स हतः खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ॥ ३ ॥
इत्यजल्पन्महाराज परानीकविनाशनम् ।
देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम् ॥ ४ ॥
अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून् ग्रामान् राष्ट्राणि नगराणि च ॥५॥
संविधाय यथादिष्टं यथादेशप्रदर्शनम् ।
कृतकृत्या न्यवर्तन्त ते चरा नगरं प्रति ॥ ६ ॥

[ लक्षा० ] विनिष्क्रम्य सभाजना इत्यत्र 'आनन्दनसभाजने' इत्यमरः सभाजनाः आनन्दयन्त्यः ॥ १८ ॥ तिर्यग्योनिगता बाले इत्यत्र तिर्यग्योनिः शिखण्डिनीवेषः ॥ २३ ॥

[ नील० ] ते त्वत्संबन्धिभ्यो गन्धर्वेभ्यः ॥ २८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. चतुर्विंशोऽध्यायः ॥२४॥

[ विष० ] राजा विराटः ॥ २९ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. चतुर्विंशोऽध्यायः ॥२४॥

[ लक्षा० ] चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे इत्यत्र रक्तानि अनुरक्तानि ॥ २८ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ नील० ] 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः ॥१॥ कृतकृत्याः कीचकवधज्ञानेनात्रैव पाण्डवानां वासं स्वयमेव धार्तराष्ट्रः अनुमानतो ज्ञास्यन्तीत्याशयः॥६॥

[ अर्जु० ] कीचकस्य वधेनेत्यादेः चिरं सुखमवाप्स्यसीत्यन्तस्य बुद्धिबलधर्मगुप्तानां पाण्डवानां के अमी वराका देवैरपि दुरूहत्वात्तेषामिति तात्पर्यार्थः । अत्याहितं महाभीतिः पृथग्जनाः सामान्यलोकाः ॥ १ ॥ संजल्पः संभाषणम् । शौर्यात् शूरत्वात् । वल्लभः प्रेमस्थानम् । राज्ञो विराटस्य ॥२॥ प्रहर्ता दारावमर्शी ॥ ३ ॥ नागपुरं हास्तिनपुरम् ॥ ६ ॥

[ चतु० ] अत्याहितं महाभयम् ॥ १ ॥ देशानां निदर्शनं निरूपणम् । कृतकृत्याः संधितराजादेशाः ॥ ६ ॥

[ सर्व० ] अत्याहितं महाभीतिः ॥ १ ॥

[ विरो० ] निपातेन; तु घातेन (दे) । पृथग्जना नागराः ॥ १ ॥ प्रदेशनं विचारणम् । कृत्यमन्वेषणम् ॥ ६ ॥

[ विष० ] अव्याहतं प्रतीकाररहितं भयम् ॥ १ ॥

[ लक्षा० ] आत्माहितं चिन्तयित्वेत्यत्र आत्मना परमात्मना आहितम् अर्पितं दैवाधीनमित्यर्थः ॥ १ ॥ सांपराये-

२८ व. बिभेति भद्रं ते । व. त्वं चाति । २९ व. क्षमितुमर्हति; त्रि. क्षमतु । ३० व. ततस्ते मां च नेष्यन्ति । त्रिंशोत्तरम् घ. व. पूर्णकामा कृता कृष्णा वायुपुत्रेण चासकृत्; (व. चावसत्) इत्यधिकम् । चतुर्विंशोऽध्यायः ॥ अध्यायारम्भे घ. इति पाण्डवनिगूढवाससंवत्सरचरितमभिधाय पाराशर्यः कीचकवधान्तं यत्र त्रयोदशाहमज्ञातशेषवासनिवृत्तये कुरुपतिकार्यानुसंधानाय

१. २८ श्लो त्तरार्धस्थाने पाठान्तरमिदम् ।

दूरान्वेषितफलावाप्तये हि सुयोधनादीनां चारप्रत्याचारमभिधातुमाह-इत्यधिकम् । १ व. अव्याहतं चिन्तयित्वा । ज. व. अत्याहितं विस्मयन्तः, दे. अत्याहितं विषं पीत्वा । २ व. ज. ऽभूच्च सर्वशः । ३ ज. व. 'मर्शी सुदुर्मतिः व. गन्धर्वैरुग्रपूरुषैः । ४ ग. व. परानीकविशातनम् । ५ घ. व. क. बहून्देशान् । ग. घ. व. राष्ट्राणि विविधानि च । ६ व. यथादेशप्रवर्तनम् । व. कृतचिन्ता न्यवर्तन्त तथानाम यथाश्रुतम् । ज. ते च नागपुरं प्रति ।

तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ।
द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ॥ ७ ॥
संगतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः ।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ ८ ॥
चरा ऊचुः—
कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ ९ ॥
निर्जने मृगसंकीर्णे नानाद्रुमलताकुले ।
लताप्रतानबहुले नानागुल्मसमावृते ॥ १० ॥
न च विद्मो गता येन पार्थाः सुदृढविक्रमाः ।
मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा ॥ ११ ॥
गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु देशेषु खर्वटेषु पुरेषु च ॥ १२ ॥
नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान् ।
अत्यन्तं वा विनष्टास्ते भद्रं तुभ्यं नरर्षभ ॥ १३ ॥
वर्त्मन्यन्वेष्यमाणा वै रथिनां रथिसत्तम ।
नहि विद्मो गतिं तेषां वासं हि नरसत्तम ॥ १४ ॥
किंचित्कालं मनुष्येन्द्र सूतानामनुगा वयम् ।
मृगयित्वा यथान्यायं वेदितार्थाः स्म तत्त्वतः ॥ १५ ॥
प्राप्ता द्वारवतीं सूता विना पार्थैः परन्तप ।
न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महाव्रताः ॥ १६ ॥
सर्वथा विप्रणष्टास्ते नमस्ते भरतर्षभ ।
नहि विद्मो गतिं तेषां वासं वापि महात्मनाम् ॥ १७ ॥
पाण्डवानां प्रवृत्तिं च विद्मः कर्मापि वा कृतम् ।
स नः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशाम्पते ॥ १८ ॥
अन्वेषणे पाण्डवानां भूयः किं करवाम ते ।
इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ॥ १९ ॥
येन त्रिगर्ता निहता बलेन महता नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा ॥ २० ॥
स हतः पतितः शेते गन्धर्वैर्निशि भारत ।
अदृश्यमानैर्दुष्टात्मा भ्रातृभिः सह सोदरैः ॥ २१ ॥
प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ २२ ॥

इति श्रीमहाभारते विराटपर्वणि [ चारप्रत्याचारे ] पञ्चविंशोऽध्यायः ॥ २५ ॥

ऽपरिक्लिष्टो बलवान्दुर्जयो रणे। आसीत्प्रहर्ता इत्यत्र 'मृधमास्कन्दनं संख्यं समीकं सांपरायकम्' इत्यमरः। सापराये युद्धे अपरिक्लिष्टः क्लेशरहितः ॥ ३ ॥

[ नील० ] येन मार्गेण ॥ ११ ॥ गिरिकूटेषु गिरिशिखरेषु ॥ १२ ॥ सूतानां पाण्डवीयानामिन्द्रसेनादीनाम् ॥ १५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[ अर्जु० ] कर्वटे कर्वटे, कर्वटो द्विशतग्राममध्ये प्रधानग्रामः ॥ १२ ॥ मुख्यानामिन्द्रसेनप्रभृतीनाम् ॥ १५ ॥ अत्यन्तभावं नष्टास्ते अतिशयेनान्तभावं मरणं यत्र क्रियायां तथा नष्टाः ॥ १७ ॥ प्रवृत्तिं वार्ताम् । स त्वं नः अस्मान् ॥ १८ ॥ निकृता निराकृताः ॥ २० ॥ प्रत्याचारः प्रत्यागमनम् ॥

इति श्रीमहा० मर्जु० विरा० पञ्चविंशोऽध्यायः॥ २५ ॥

[ चतु० ] लताप्रतानं लताविटपः। गुल्मः कुशादिगुच्छः ॥ १० ॥ 'गव्यूतिदीर्घं क्रोशार्धविस्तारं खर्वटं भवेत्। पुरं द्वियोजनायामं गव्यूतिव्यासमिष्यते' ॥ १२ ॥ प्रवृत्तिं वार्ताम्। स त्वं शाधि आदिश ॥ १८ ॥ ईक्ष जानीहि ॥ १९ ॥

इति श्रीचतुर्धु० महाभा० विरा० पञ्चविंशोऽध्यायः ॥ २५ ॥

[ सर्व० ] कूटं शिखरम् । खर्वटः क्षुपः ॥ १२ ॥ सूतानां पाण्डवीयानाम् ॥ १५ ॥

इति श्रीसर्व० भारतप्रकाशे वि० पञ्चविंशोऽध्यायः ॥ २५ ॥

[ विरो० ] कर्वटेषु गोष्ठेषु ॥ १२ ॥ अतिशयेनान्तभावो मरणं यत्र नाशे तथा नष्टाः (दे) ॥ १३ ॥ अनुगा अनुगामिनः ॥ १५ ॥ वाचं शृणु । ईक्ष वाचं (च) ॥ १९ ॥ कीचकस्य सूतत्वं सारथ्यात् ॥ २० ॥ चाराणां प्रत्याचारः पुनःपुनः स्वकर्म तस्मिंश्चारप्रत्याचारे ॥

इति श्रीमहा० विरो० विरा० पञ्चविंशोऽध्यायः ॥ २५ ॥

[विष०] मूलात्प्ररोहवन्तो गुल्माः ॥ १० ॥ कूटं विषमं, (जनपदेषु वैश्यशूद्रबहुलेषु ।) नानाविधा' अष्टप्रकारा जनपदा मटम्बनगरग्रामादयः। कर्वटेषु अभितःपर्वतपरिवृतेषु ग्रामेषु। तथा चोक्तम् । 'मटम्बनगरग्रामखेटखर्वटपत्तनैः।

१० क पूर्वार्धस्थाने–निर्जने व्यालसंकीर्णे नानाभ्रमरसंकुले। ११ क. पदन्यासमाश्रमेषु वनेषु च। १२ व. गिरिकूटेषु शृङ्गेषु। ज. जलाकीर्णेषु देशेषु। व. °कीर्णेषु सर्वेषु कर्पटेषु। १३ व. अत्यन्तमाननष्टास्ते; अत्यन्तनाशं नष्टास्त; ज. अत्यन्तभावं नष्टास्ते। १४ व. °न्वेषमाणास्तु रथानां रथसत्तम; ज. वार्तामन्विष्यमाणाश्च रथानां रथसत्तम। १५ ज. कंचित्कालं मनु°। ज. विदितार्थाः स्म। १६ ज.° वाश्च महारथाः। १७ ज. भद्रं तुभ्यं नरर्षभ। ज. तेषां वासो। १८ ज. कर्माणि वा तथा। च. न ते सन्ति मनुष्येन्द्र। १९ व. न. प्रियामीक्ष्य; ज. प्रियां वीक्ष। व. वर्ती शुभाम्। २० ज. त्रिगर्ता निकृता। ज. °केन पुनः पुनः। २१ व. सह भ्रातृभिरप्युत; °भिरच्युत। व. °णां त्वं पराभवम्। व. ज. °र्वणि चरप्रचारे ॥ इति पञ्चविंशोऽध्यायः ॥२५॥

## षड्विंशोऽध्यायः २६

चाराणां पाण्डवाज्ञानाद्दुर्योधनस्य विषादः ॥ १ ॥ कर्णेन चारान्तरप्रेषणविधानं दुःशासनेन तदनुमत्यापि पाण्डवानां विनाशसंभावनम् ॥ १ ॥

**वैशम्पायन उवाच—**

ततो दुर्योधनो राजा ज्ञात्वा तेषां वचस्तदा ॥
चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥ १ ॥
सुदुःखा खलु कार्याणां गतिर्विज्ञातुमन्ततः ।
तस्मात्सर्वे निरीक्षध्वं क्व नु ते पाण्डवा गताः ॥ २ ॥
अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः ।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ ३ ॥
अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ॥ ४ ॥
क्षरन्त इव नागेन्द्राः सर्वे ह्याशीविषोपमाः ।
दुःखा भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ ५ ॥
सर्वे कालस्य वेत्तारः कृच्छ्ररूपधराः स्थिताः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ६ ॥
तस्मात् क्षिप्रं बुभूषध्वं यथा तेऽत्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ७ ॥
अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत ।
अन्ये धूर्ता नरा दक्षा निभृताः साधुकारिणः ॥ ८ ॥
चरन्तु देशान्संवीताः स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीषु रम्यासु सिद्धप्रव्रजितेषु च ॥ ९ ॥

---

द्रोणाख्यवाहनैरुद्धैर्नानावनगजादिभिः ॥ ग्रामो वृत्यावृतः (युतः) स्यान्नगरगुरुचतुर्गोपुरोद्भासिशालं खेटं नद्यद्रिवेष्टं परिवृतमभितः कर्वटं पर्वतेन । द्रोणाख्यं सिन्धुवेलाजलधिवलयितं वाहनं चाद्रिरूढं ग्रामैर्युक्तं मटम्बं दलितदशशतैः पत्तनं रत्नयोनिः ॥ १२ ॥

इति श्रीमहाभारतविषमपदविवरणे विरा० पञ्चविंशोऽध्यायः ॥ २५ ॥

[लक्षा०] सूताननुगता वयमित्यत्र सूतान् पाण्डवसारथीन् ॥ १५ ॥ विधिवत्स्यादनन्तरमित्यत्र विधिवत् विधिर्यथा करोति तद्वत् ॥ २२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[नील०] तत इति ॥ १ ॥ दुःखा दुःखयितारः संरब्धाः कुपिताः ॥ ५ ॥ यथा ते पुनर्वनं प्रविशेयुस्तथा बुभूषध्वं तान् प्राप्तुमिच्छतेत्यर्थः । तत्फलं चाह—अत्यन्तमित्यादिना ॥ ६–७ ॥ जनपदाकुलान् जनव्याप्तान् । 'भवेज्जनपदो जानपदोऽपि जनदेशयोः' इति मेदिनी । गोष्ठीषु विद्वत्सभासु सिद्धानां प्रव्रजितं गमनं येषु तेषु मुनीनामाश्रमेषु ॥ ९ ॥

[अर्जु०] चिरमन्तर्मनाः अन्तर्मनाः दुर्मना इत्यर्थः ॥ १ ॥ सुदुःखा खलु कार्याणां गतिर्विज्ञातुमन्ततः । इति कार्याणां गतिर्विपाकः सुखेन ज्ञातुमशक्या नह्यसर्वज्ञः कार्याणां किमर्थं (?) पतिष्यतीति ज्ञातुं समर्थः । अन्ततः स्वभावतः । अथवा अन्ते पर्यवसाने कार्याणां गतिः सुदुःखा विज्ञातुम् ॥ २ ॥ अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः । अन्तत आदेरवधेर्गतं भूयिष्ठमन्ते पर्यवसाने अल्पावशिष्टम् ॥ ३ ॥ निवृत्तसमयाः निष्पन्नप्रतिज्ञाः ॥ ४ ॥ क्षरन्त इव मत्ता इव दुःखा दुःखहेतवः । संरब्धाः युद्धाय कृतोद्यमाः ॥ ५ ॥ अर्वाक्कालस्य चरमकालस्य अर्वाक् शेषेषु ॥ ६ ॥ बुभुत्सध्वं ज्ञातुमिच्छत ॥ ७ ॥ नो युष्माकं धूर्ततरा ऊहकाः निभृताः निभृता वयमित्यवदन्तः । साधुकारिणः साधु शोभनं कर्तुं शीलं येषाम् ॥ ८ ॥ संवीताः प्रच्छन्नाः । तन्त्रगोष्ठीषु बलसमुदायेषु ॥ ९ ॥

[चतु०] निरीक्षध्वं जानीत ॥ २ ॥ अस्मिन्वर्षे कालस्य अन्ततः समाप्तिं प्रपन्ने इत्यन्वयः । भूयिष्ठं बहुतरम् ॥ ३ ॥ दुःखाः दुःखसाध्याः ॥ ५ ॥ अर्वाक्कालस्य कालसमाप्तेः पूर्वकाले ॥ ६ ॥ अव्यग्रं निराबाधम् । चिरं चिरस्थायि ॥ ७ ॥ दक्षा अनलसाः । निभृता गूढोक्तयः ॥ ८ ॥ संवीता निगूढाः । गोष्ठीषु सभासु ॥ ९ ॥

[सर्व०] दुःखाः दुःखदाः ॥ ५ ॥ जनपदाकुलान् जनव्याप्तान् । गोष्ठीषु विद्वत्सभासु । सिद्धानां प्रव्रजितं गमनं येषु तेषु मुनीनामाश्रमेषु ॥ ९ ॥

---

१ व. ज. राजा श्रुत्वा तेषां । २ क. व. अल्पावशिष्ट कालस्तु गतो भूयिष्ठ एव च; घ. वर्तते कुरुसत्तम; व. कुरुसत्तमाः । ४ घ. व. °समयाः पार्था महात्मानो महाबलाः । ५ घ. इव जीमूताः सर्वे । ६ ङ. ग. घ. च. व. ज. अर्वाक्कालस्य विज्ञाताः कृच्छ्ररूपधराः पुनः । ७ व. क्षिप्रं प्रभाषध्वं यथा नागोन्तमव्ययम् । व. राज्यमिच्छध्वमव्यग्रमस° । ८ व. अथाब्रवीत्तु तं कर्णः । व. ज. धूर्ततरा दक्षाः । ९ व. गोष्ठीषु रथ्यासु ।

---

२ यादुत्तरमधिकं घ. व.

राजन्नपि महाराजः सशल्येनान्तरात्मना ॥
कीचकस्य वधं श्रुत्वा न चाकारमदर्शयत् ।
केवलं शौर्यमालम्ब्य गतसत्त्व इव श्वसन् ॥
भूयः प्रत्यागतप्राणैः शरीरस्थैश्च प्रेक्षकाः ।
श्रुत्वा तेषां वचस्तात्रचिन्तयामास कौरवः ।

---

१ व. जानन्नपि महाराज ।

२ व. °प्राणो धृतराष्ट्रात्मजो बली । ३ अर्धमिदं नास्ति व. पुस्तके ।

परिचारेषु तीर्थेषु विविधेष्वाकरेषु च ।
विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया ॥ १० ॥
विविधैस्तत्परैः सम्यक् तज्ज्ञैर्निपुणसंवृतैः ।
अन्वेष्टव्याः सुनिपुणैः पाण्डवाश्छन्नवासिनः ॥ ११ ॥
नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ १२ ॥
अथाग्रजानन्तरजः पापभावानुरागवान् ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १३ ॥
येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप ।
ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुम् ॥ १४ ॥
एतच्च कर्णो यत्प्राह सर्वमीहामहे तथा ।
यथोद्दिष्टं चराः सर्वे मृगयन्तु यतस्ततः ॥ १५ ॥
एते चान्ये च भूयांसो देशाद्देशं यथाविधि ।
न तु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते ॥ १६ ॥
अत्यन्तं वा निगूढास्ते पारं चोर्मिमतो गताः ।
व्यालैश्चापि महारण्ये भक्षिताः शूरमानिनः ॥ १७ ॥
अथवा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ।
तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन ।
कुरु कार्यं महोत्साहं मन्यसे यन्नराधिप ॥ १८ ॥

इति श्रीमहाभारते विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

---

[ विरो० ] अन्ततः परिणामिनी गतिः ॥ २ ॥ कालस्यायतिकालस्य भूयिष्ठं गतम् । अन्ततः अन्ते पर्यवसाने । अल्पमवशिष्टम् ॥ ३ ॥ काले तु; कालस्य । अर्वाक् शेषे अव्ययम् ॥ ६ ॥ चिरं चिरस्थायि ॥ ७ ॥ तत्र; तत्र ( दे ) शास्त्रगोष्ठीषु ॥ ९ ॥

[ विष० ] खलु निश्चयेन अन्ततः अन्तेऽवसाने । कार्याणां गतिर्विपाकः ज्ञातुं आदित एव विचारयितुं सुदुःखा अशक्या सर्वज्ञोऽपि कथं कार्याणि फलिष्यन्तीति ज्ञातुं न समर्थ इत्यर्थः ॥ २ ॥ संवीताः प्रच्छन्नाः । जनपदाकुलान् । 'जनो जनपदोऽपि च' ॥ ९ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[नील०] परित आगत्य चरन्त्येषु ते परिचाराः राजपुराणि तेषु तर्कया काङ्क्षया । 'तर्कः काङ्क्षावितर्कोहे' इति मेदिनी ॥ १० ॥ अग्रजानन्तरजः द्वितीयो भ्राता ॥ १३ ॥ ऊर्मिमतः सिन्धोः ॥ १७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ अर्जु० ] परीवारेषु विग्रहेषु (?) । आकरेषु रत्नाद्युत्पत्तिस्थानेषु । तर्कया ऊहया ॥ १० ॥ अत्याहितम् अत्यर्थं यद्वा जीवानपेक्षि यथा स्यात् तथा दृढा इत्यर्थः । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः । ऊर्मिमतः समुद्रस्य । व्यालैः मांसभुक्पशुभिर्वा 'सर्पमांसपश्वोर्व्याडाः' इत्यमरः ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० षड्विंशोऽध्यायः ॥ २६ ॥

[ चतु० ] परिचारेषु जनप्रचारेषु । तर्कया ऊहेन ॥ १० ॥ ऊर्मिमतोऽब्धेः ॥ १७ ॥ अव्यग्रमनाकुलम् ॥ १८ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[सर्व०] परितः आगत्य चरन्त्येषु ते परिचारा राजपुराणि ॥ १० ॥ अग्रजानन्तरजः द्वितीयो भ्राता ॥ १३ ॥ ऊर्मिमतः समुद्रस्य ॥ १७ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ विरो० ] परिवारेषु; परिचारेषु ( च ) जनप्रचारेषु । तर्कया ऊहया ॥ १० ॥ शाश्वतीः बह्वीः समाः व्याप्य विषमं दुःखं प्राप्य ॥ १८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ लक्षा० ] प्रत्यागता प्रगूढास्ते इत्यत्र प्रति जनान् प्रति आगताः अवगताः ज्ञाता इत्यर्थः ॥ १७ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

---

१० दे. परिवारेषु तीर्थेषु; सरस्तीरेषु तीर्थेषु । व. °ष्यैस्ते तर्कया । ११ व. तज्ज्ञैर्निपुणवीक्षिभिः । व. अन्वेष्टव्याः सुनिपुणं । १२ व. नदीकूलेषु । १३ व. °भावानुकारिणाम् । १४ व उत्तरार्धस्थाने—तानहं प्रेषयिष्यामि ये तज्ज्ञा दृढभक्तयः । एतन्मतं महाराज मदीयं सुखदर्शन; घ. व. अपरे तत्र गच्छन्तु चराः प्रच्छन्नचारिणः । १५ व. ज. सर्वमीक्षामहे तथा; च. सर्वं रक्षामहे तथा । १६ व. प्रवृत्तिर्नोपलभ्यते । १७ वि. अत्याहितं वा गूढास्ते; व. अत्यन्तं भावगूढा° । व. व्यालैर्वापि महारण्ये भक्षिताः शूरसंमताः । १८ व. कुरु कार्यं यथोत्साहं ॥ षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः २७

द्रोणेन वीर्यवत्त्वादिभिर्हेतुभिः पाण्डवानामविनाशमुपपाद्य तदन्वेषणविधानम् ॥ १ ॥

**वैशम्पायन उवाच—**

अथाब्रवीन्महावीर्यो द्रोणस्तत्त्वार्थदर्शिवान् ।
न तादृशा विनश्यन्ति न प्रयान्ति पराभवम् ॥ १ ॥
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः ॥ २ ॥
नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम् ।
धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठानुयायिनः ॥ ३ ॥
अनुव्रता महात्मानं भ्रातरो भ्रातरं नृप ।
अजातशत्रुं श्रीमन्तं सर्वभ्रातॄननुव्रतम् ॥ ४ ॥
तेषां तथा विधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्पार्थः श्रेयो नैषां करिष्यति ॥ ५ ॥
तस्माद्यत्नात्प्रतीक्षन्ते कालस्योदयमागतम् ।
नहि ते नाशमृच्छेयुरिति पश्याम्यहं धिया ॥ ६ ॥
सांप्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यताम् ॥ ७ ॥
यथावत्पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
दुर्ज्ञेयाः खलु शूरास्ते दुरापास्तपसा वृताः ॥ ८ ॥
शुद्धात्मा गुणवान्पार्थः सत्यवान्नीतिमान् शुचिः ।
तेजोराशिरसङ्ख्येयो गृह्णीयादपि चक्षुषा ॥ ९ ॥
विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः ॥ १० ॥

इति श्रीमहाभारते विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ नील० ] अथेति ॥ १ ॥ विधेयानां किंकराणां निभृतानाम् अत्यन्तावहितानाम् ॥ ५ ॥ अकालिकं विलम्बासहम् ॥ ७ ॥ गृह्णीयादपि चक्षुषा प्रत्यक्षदृष्टोऽपि मोहयेदेवेत्यर्थः ॥ ९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ अर्जु० ] साम्प्रतं युक्तम् । क्षिप्रं शीघ्रमकालिकं कालेनाव्यवहितम् ॥७॥ धृतात्मनामवहितानाम् । दृढात्मनामिति पाठे दृढक्रियाणाम् ॥८॥ गृह्णीयादपि चक्षुषी इति गृह्णीयात् अदृश्यो भवेत् इत्यर्थः । अपिः संभावनायाम् । असंख्येयतेजोराशित्वात्तथा । गृह्णीयादपि चक्षुषेति पाठे तपःप्रभावाच्चक्षुषापि निर्दहेदिति तात्पर्यार्थः ॥ ९ ॥ सिद्धैर्गुटिकाञ्जनादिभिस्तथाभूतैः ॥ १० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि. प. सप्तविंशोऽध्यायः ॥ २७ ॥

[ चतु० ] पितृवत्पितरमिव ज्येष्ठते( ? मि )त्यन्वयः । स्थिरा सत्या धृतिर्यस्य ॥ ३ ॥ विधेयानां विनयग्राहिणाम् ॥५॥ अकालिकमविलम्बितम् ॥ ७ ॥ गृह्णीयात्प्रतिबध्नीयात् ॥ ९ ॥ सिद्धैर्गुटिकादिसिद्धिमद्भिः ॥ १० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ सर्व० ] विधेयानां किंकराणां निभृतानाम् अत्यन्तावहितानाम् ॥ ५ ॥ अकालिकं विलम्बासहम् ॥ ७ ॥ गृह्णीयादिति प्रत्यक्षदृष्टोऽपि मोहयेदेवेत्यर्थः ॥ ९ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ विरो० ] पितृवत् स्वस्वपितृवत् समाहिताः समीचीनं मनः आहितं यैः । ज्येष्ठानुयायिनः, ज्येष्ठापचायिनः ॥ ३ ॥ विधेयो विनयग्राही ॥ ५ ॥ अकालिकम् आगामिकालिकम् ॥ ७ ॥ धृतात्मनां २ दृढात्मनाम् ( दे ) ॥ ८ ॥ चक्षुषी गृह्णीयात् प्रतिबध्नीयात् । चक्षुषा ( दी ) आदहेत् ॥ १० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ विष० ] विधेयानां ज्येष्ठादेशरतानां निभृतानां निश्चलानाम् ॥ ५ ॥ नाशमृच्छेरन् नाशं गच्छेयुः ॥ ६ ॥ सांप्रतं युक्तम्, अकालिकं कालेन व्यवहितमसमयजं क्रियते कृतपूर्वकरणीयं स्यादित्यर्थः (?) ॥ ७ ॥ धृतात्मनां सावधानानाम् ॥ ८ ॥ चक्षुषी गृह्णीयात् पश्यतामप्यदृश्यो भवेदित्यर्थः ॥ ९ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

१ व. नापि यान्ति पराभवम् । २ वि. कृतज्ञाश्च महेष्वासा महाबलाः । ३ व. पूर्वार्धस्थाने नीतितत्त्वार्थधर्मज्ञा इन्द्रियेषु समाहिताः । व. ज्येष्ठं धर्मार्थकोविदम्; क. ग. घ. च. ज्येष्ठोपचायिनम् । ४ ग. घ. व. °शत्रुं ह्रीमन्तं; वि. धीमन्तं तांश्च भ्रातॄननुत्तमान् । ६ ग. °द्यत्नात्प्रतीक्षध्वं, घ. व. °त्परीक्ष्यध्वं । व. ज. क्षध्वं कार्यस्योदयमागतम् । ज. न ते नाशं गताः शूरा इति पश्या°; नाशमृच्छेरन्निति पश्याम्यहं धिया । ७ व. क्रियतां ननु संचिन्त्य । ८ ग. घ. व. च. अपापास्तपसा°; ज. निष्पापास्तपसा°; क. रक्ष्या नित्यं च दैवतैः । ९ व. सत्यवान्नीतिमाञ्छुचिः । व. गृह्णीयादपि चक्षुषी । १० व. चान्ये तद्विधा जनाः ॥ इति सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः २८

पाण्डवानां धर्मनित्यतया यत्र सर्वतः शुभान्येव संनिपतन्ति स तदधिष्ठितो देश इति भीष्मेण पाण्डवनिवासलक्षणाभिधानम् ॥१॥

**वैशम्पायन उवाच—**

ततः शान्तनवो भीष्मो भरतानां पितामहः ।
श्रुतवान्देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ॥ १ ॥
आचार्यवाक्योपरमे तद्वाक्यमभिसंदधत् ।
हितार्थं समुवाचैनां भारतीं भारतान्प्रति ॥ २ ॥
युधिष्ठिरे समासक्तां धर्मज्ञे धर्मसंश्रिताम् ।
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ॥ ३ ॥
भीष्मः समवदत्तत्र गिरं साधुभिरर्चिताम् ।
यथैष ब्राह्मणः प्राह द्रोणः सर्वार्थतत्त्ववित् ॥ ४ ॥
सर्वलक्षणसंपन्नाः साधुव्रतसमन्विताः ।
श्रुतव्रतोपपन्नाश्च नानाश्रुतिसमन्विताः ॥ ५ ॥
वृद्धानुशासने यत्ताः सत्यव्रतपरायणाः ।
समयं समयज्ञास्ते पालयन्तः शुचिव्रताः ॥ ६ ॥
क्षत्रधर्मरता नित्यं केशवानुगताः सदा ।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ।
नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् ॥ ७ ॥
धर्मतश्चैव गुप्तास्ते सुवीर्येण च पाण्डवाः ।
न नाशमधिगच्छेयुरिति मे धीयते मतिः ८ ॥
तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान्प्रति भारत ।
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः ॥ ९ ॥
यत्तु शक्यमिहास्माभिस्तान्वै संचिन्त्य पाण्डवान् ।
बुद्ध्या प्रयुक्तं न द्रोहात्प्रवक्ष्यामि निबोध तत् ॥१०॥
न त्वियं माद्दशैर्नीतिस्तस्य वाच्या कथंचन ।
सा त्वियं साधुवक्तव्या न त्वनीतिः कथंचन ॥११॥
वृद्धानुशासने तात तिष्ठता सत्यशीलिना ।
अवश्यं त्विह धीरेण सतां मध्ये विवक्षता ॥ १२ ॥
यथार्हमिह वक्तव्यं सर्वथा धर्मलिप्सया ।
तत्र नाहं तथा मन्ये यथायमितरो जनः ॥ १३ ॥

---

[ नील० ] तत इति ॥ १ ॥ अभिसंदधत् तद्वाक्यानुगुणमेव वदन् भारतीं भरतवंशीयपाण्डवविषयां गिरं वाचं भारतान् कौरवान् उवाचेति संबन्धः ॥ २ ॥ समं वदत् समं पक्षपातशून्यं वदत् वदन् नुमभाव आर्षः ॥ ४ ॥ श्रुतं शास्त्रं, नानाश्रुतिरनेका आख्यायिका ॥ ५ ॥ महात्मान उदारचित्ताः सतां धुरं धर्मम् ॥ ७ ॥ परैः अनीतिपरैः अन्वेषितुमनुगन्तुम् ॥ ९ ॥ यत्तु प्रयुक्तं प्रयोगः शक्यं ज्ञातुं योग्यः तदेव वक्ष्यामि न तु भवतां द्रोहात्॥१०॥ नत्विति तस्य दुर्जनस्य त्वादृशस्येति गूढोऽभिसन्धिः । सा तु तुशब्दो हेत्वर्थे । सा हि यतः नीतिरियं साधुवाच्या साधुष्वेव वक्तव्याऽतोऽसाधौ त्वयि नैवैषा वक्तव्येत्यर्थः । अनीतिस्तु कथंचन साधुष्वसाधुषु वा नैव वक्तव्येत्यर्थः ॥ ११ ॥ तिष्ठता वक्तव्यमिति संबन्धः । तत्र वक्तव्ये सति यथा इतरो जनः पाण्डवानां निवासं लोकसाधारणं मन्यतेतथाऽहं न मन्ये इति योजना ॥ १२–१३ ॥

[अर्जु० ] अभिसंदधत् युक्तं कुर्वन् ॥ २ ॥ युधिष्ठिरे तद्विषये समासक्तां ॥ ३ ॥ धुरं भारम् ॥ ७ ॥ धीयते स्वयमेव प्रकृष्टा भवति ॥ ८ ॥ तस्य युधिष्ठिरस्य ॥ ११ ॥ विवक्तव्यं विशेषेण वक्तव्यम् ॥ १३ ॥

[चतु० ] अभिसंदधत्परिपूजयन् । भारतीं वाणीम् ॥२॥

[ सर्व० ] अभिसंदधत् तद्वाक्यानुगुणमेव वदन् ॥२॥ सतां धुरं धर्मम् ॥ ७ ॥ परैः अनीतिपरैः अन्वेषितुमनुगन्तुम् ॥ ९ ॥

[ विरो० ] इमां द्रोणोक्ताम् ॥ २ ॥ समवदद्दन्यत्री (शे) ॥ ४ ॥ प्रवक्तुं शक्यम् ॥ १० ॥ वाच्या वक्तुं शक्या। साधु यथाज्ञानम् । तिष्ठतः तस्येत्यन्वयः ॥ ११–१२ ॥ मति तु २ मति हि ( स्त्र ) मतिरिति (दे) । अहं यथा निवासं मन्ये तथा नेतरः ॥ १३ ॥

[ विष० ] अभिसंदधत् पुष्टं कुर्वन् ॥ २ ॥ ब्रून् ... क्तायां वाचि । ‘ब्रुवन्तो ब्राह्मणाः स्मृताः’। तस्मात् स्फुटवक्ता ब्राह्मणः ॥ ४ ॥ धर्मतो धर्मेण सार्वविभक्तिकस्तसिप्रत्ययः । ‘धर्मो रक्षति रक्षितः’ ॥ ८ ॥ माद्दशैः धर्मशीलैर्वृद्धैश्च । तस्य युधिष्ठिरस्य ॥ ११ ॥ इतरः कर्णदुःशासनादिको मन्यते ॥ १३ ॥

---

२ व. °मभिनन्दयन् । व. स उवाचेमां । ३ व. °सक्तां धर्मज्ञो धर्मसंश्रिताम्; ज. धर्मसंभृताम् । व. असतां दुर्लभां । ४ व. भीष्मः समवदत्क्षिप्रं । व. यथैष ब्राह्म° । व. द्रोणः शस्त्रभृतां वरः । चतुर्थोत्तरम् ज. च. तद्वाक्यमभिनन्दामि न मेऽस्त्यत्र विचारणा; व. नीतिमानिदमाचार्यो राजन्सर्वार्थदर्शिवान् । इत्यधिकम् । ५ ग. घ. संपन्ना नाशं नार्हन्ति पाण्डवाः; क. ग. घ. °पपन्नाश्च साधुवृत्तसमन्विता । पञ्चमस्थाने व. सर्वलक्षणसंपूर्णा नाशं नार्हन्ति पाण्डवाः । श्रुतवृत्तोपसंपन्नाः साधुव्रतसमन्विताः । ६ ग. घ. ... व. °नुशासने सक्ताः । ७ व. °मर्हन्ति सर्वे ते साधुचारिणः । ८ ग. घ. ... गुप्तास्ते स्ववीर्येण च । ९ च. व. बुद्धिं प्रणेष्यामि । १० व. °भिस्तानसं... पां° । व. ज. बुद्ध्या प्रवक्तुं । व. यद्वक्ष्यामि निबोधत । ११ व. °कव्या ... नीतिः क° । १२ व. सत्यशालिना । व. धीरेण सभामध्ये । १३ व. यथा... विवेक्तव्यं; ज. यथार्थमभिवक्त° ।

निवासं धर्मराजस्य वर्षेऽस्मिन्वै त्रयोदशे ।
तत्र तात न तेषां हि राज्ञां भाव्यमसांप्रतम् ॥१४॥
पुरे जनपदे चापि यत्र राजा युधिष्ठिरः ।
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ।
जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः ॥ १५ ॥
प्रियवादी सदा दान्तो भव्यः सत्यपरो जनः ।
हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ॥ १६ ॥
नासूयको न चापीर्षुर्नाभिमानी न मत्सरी ।
भविष्यति जनस्तत्र स्वयं धर्ममनुव्रतः ॥ १७ ॥
ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ १८ ॥
सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही निरातङ्का भविष्यति ॥ १९ ॥
गुणवन्ति च धान्यानि रसवन्ति फलानि च ।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥२०॥
वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम् ।
न भयं त्वाविशेत्तत्र यत्र राजा युधिष्ठिरः ॥ २१ ॥
गावश्च बहुलास्तत्र न कृशा न च दुर्बलाः ।
पयांसि दधिसर्पींषि रसवन्ति हितानि च ॥ २२ ॥
गुणवन्ति च पेयानि भोज्यानि रसवन्ति च ।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ २३ ॥
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥२४॥

[ नील० ] असाधारण्यमेवाह—तत्रेति । तत्र पुरादौ असांप्रतमकल्याणम् ॥ १४ ॥ वदान्यः प्रियवादी । 'वदान्यो दानशीले च चारुवादिनि वाच्यवत्' इति मेदिनी । निभृतः नियतेन्द्रियः भाव्यः अवश्यंभावी । ओरावश्यके इति ण्यत् ॥ १५ ॥ भव्यो भविता ॥ १६ ॥ असूयकः परगुणेषु दोषारोपकः, ईर्षुः परोत्कर्षासहिष्णुः, अभिमानी आत्मसंभावितः, मत्सरी परद्रोहकर्ता तत्र यत्र युधिष्ठिर इत्यनुकृष्यते ॥ १७ ॥ दर्शनं धर्मब्रह्मस्वरूपावेक्षणं निष्प्रतीपं पाखण्डमार्गवर्जितम् ॥ २१ ॥ दृश्यानि रूपाणि ॥ २४ ॥

[ अर्जु० ] असाम्प्रतम् अयुक्तम् ॥ १४ ॥ दानशीलः सदा दाता वदान्यः चारुवादी मधुरवागित्यर्थः । 'वदान्यो दानशीले च चारुवादिनि वाच्यवत्' इति मेदिनी । निभृतः परिमितवाक् विनीतो वा निभृतः । 'विनीतप्रसृताः समाः' इत्यमरः । ह्रीनिषेधकः ह्रीरेवाकार्यनिषेधो यस्य । ह्रीनिषेवक इत्यन्ये । जनपदे देशे । भाव्यो बोद्धव्यः ॥ १५ ॥ तुष्टः स्वद्रव्यादन्यत्र कृतालंबुद्धिः । पुष्टो ग्लानिरहितः । शुचिः संकरवर्जितः । शुद्धो मलहीनः ॥ १६ ॥ नासूयकः न परगुणदोषारोपकः । न चापीर्षुः न परगुणासहिष्णुः । नाभिमानी न रागयुक्तः । न मत्सरी न क्रोधनः ॥ १७ ॥ निरीतिका 'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥' अतिवृष्ट्यादिरहिता इत्यर्थः ॥१९॥

शुभशब्दा चेति । प्रियस्वेत्यमङ्गल्यशून्येत्यर्थः ॥ २० ॥ निष्प्रतीपं च अप्रतिहतम् ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां
वि० प० अष्टाविंशोऽध्यायः ॥ २८ ॥

[चतु०] भाव्यं भवितव्यम् । असांप्रतमयुक्तम् ॥१४ ॥ वदान्यो वल्गुवाक् । भाव्यो भविता बोध्यो वा । ह्रीः लज्जाकरं पापं तन्निषेधकः ॥ १५ ॥ असूयको गुणे दोषारोपकः । ईर्षुरसहनः । मत्सरी कोपनः ॥ १७ ॥ निरीतिका अतिवृष्ट्यादिरहिता ॥ १९ ॥ निष्प्रतीपमप्रतिहतम् अत्याहितमतिशयितम् ॥ २१ ॥ हितानि परिणतिसुरसानि ॥ २२ ॥ दृश्यानि रूपाणि ॥ २४ ॥

[ सर्व० ] असांप्रतमकल्याणम् ॥ १४ ॥ भव्यो भविता ॥ १६ ॥ निष्प्रतीपं पाखण्डमार्गवर्जितं दर्शनं धर्मस्वरूपावेक्षणम् ॥ २१ ॥

[विरो०] तदेवाह—तत्र पुरे । असांप्रतम् अयुक्तं न भाव्यम् ॥ १४ ॥ भाव्यो बोध्यः ॥ १५ ॥ हृष्टः पुष्टः अरोगी । शुचिर्दक्षः; तुष्टः पुष्टः शुचिः शुद्धः (दे) बाह्याभ्यन्तरशौचमादाय ॥ १६ ॥ निरातङ्का; निरीतिका-तीका च ॥ १९ ॥ अभ्याविशेत् २ नात्याहितं (च) अतिशयितं (च) ॥ २१ ॥ दृश्यानि रूपाणि । प्रसन्नानि शस्तानि (दे) ॥ २४ ॥

[विष०] दाता दानशीलः भूतहिते रतः 'प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः' निभृतः स्थिरप्रकृतिः ।

१५ व. ह्रीनिषेधकः । ज. पदे सर्वो यत्र । १६ दे. ग. सत्यवादी सदा । क्ष. भव्यः सत्यपराक्रमः । व. तुष्टः पुष्टः शुचिः शक्तो । १७ ङ. ज. ग. घ. नातिवादी न म°; व. न विवादी न मत्सरी । व. स्वं स्वं धर्ममनुव्रतः । १९ घ. च. मही नैरन्तर्यां निरीतिका; व. मही निरीतीका; ज. भविष्यति निरीतिका । २० व. शुभा सत्या च भारती । २१ व. भयं नान्यो विशेत्तत्र; भयं नाभ्याविशेत्तत्र; घ. न पापी त्वावि° । २३ व. °वन्ति च पानानि । त्रयोविंशादुत्तरं व. नद्यः पुण्यवहास्तत्र कुमुद्वन्ति सरांसि च । दृश्यन्ते च प्रसन्नानि यत्र राजा युधिष्ठिरः । इत्यधिकम् । २४ घ. गन्धाश्च रूपशब्दा गुणान्विताः । घ. च. दिशश्चैव प्रसन्नाश्च यत्र ।

धर्माश्च तत्र सर्वैस्तु सेविताश्च द्विजातिभिः ।
स्वैः स्वैर्गुणैश्च संयुक्ता अस्मिन्वर्षे त्रयोदशे ॥२५॥
देशे तस्मिन्भविष्यन्ति तात पाण्डवसंयुते ।
संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः ॥ २६ ॥
देवतातिथिपूजासु सर्वभावानुरागवान् ।
इष्टदानो महोत्साहः स्वस्वधर्मपरायणः ॥ २७ ॥
अशुभाद्धि शुभप्रेप्सुरिष्टयज्ञः शुभव्रतः ।
भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ २८ ॥
त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः ।
शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ॥ २९ ॥
भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः ।
धर्मात्मा शक्यते ज्ञातुं नापि तात द्विजातिभिः ॥३०॥
किं पुनः प्राकृतैस्तात पार्थो विज्ञायते क्वचित् ।
यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ॥३१॥
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ।
तस्मात्तत्र निवासं तु छन्नं यत्नेन धीमतः ।
गतिं च परमां तत्र नोत्सहे वक्तुमन्यथा ॥ ३२ ॥
एवमेतत्तु संचिन्त्य यत्कृते मन्यसे हितम् ।
तत्क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे ॥ ३३ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

ह्रीर्लज्जैव' अकार्यकरणे निषेधो यस्य सः । जनपदे देशे भाव्यो बोद्धव्यः ॥ १५ ॥ स्वद्रव्यात्तुष्टः । ग्लानिरहितो वपुष्मान् पुष्टः । शुचिः निर्लोभ इत्यर्थः । न मृदादिभिः ॥ १६ ॥ नासूयको न परगुणद्वेषी । न चापीर्षुर्न परगुणासहिष्णुः ॥ १७ ॥ भारती वाणी ॥ २० ॥ निष्प्रतीपं निर्विरोधमप्रतिकूलं चेति पर्यायौ ॥ २१ ॥ पानानि कदलीफलादिद्रवरसानि ॥ २३ ॥

[नील०] सर्वभावेन सर्वात्मनाऽनुरागवान् ॥ २७ ॥ अशुभात् अशुभं त्यक्त्वा ॥ २८ ॥ इष्टं यागादि प्रियं परसुखदं च व्रतं पालनीयं यस्य । एवंभूतस्य दुर्ज्ञेयत्वमप्याह—धर्मात्मेति ॥ ३० ॥ तस्मादिति । धीमतः पाण्डवस्य वासं छन्नं तत्र विद्धीति शेषः । परमां गतिं गमनं च तत्रैव स्वीयं कुरु । एतच्चाहमन्यथा विपरीतं वचो वक्तुं नोत्सहे । वृद्धत्वात्पाण्डवेषु द्वेषस्याधर्मरूपत्वाच्चेति भावः ॥ ३२ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[चतु०] शुभमनुपहतं कल्याणं कुशलं मङ्गलं रक्षणं च यस्य ॥ २९ ॥ अन्ततो निःप्रयतः (?) ॥ ३१ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[सर्व०] इष्टं यागादि प्रियं परसुखदं च व्रतं पालनीयं यस्य ॥ ३० ॥ सत्रं कपटं छन्नं वासं विद्धि परमां गतिम् गमनं तत्रैव कुरु ॥ ३२ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[विरो०] शुभे अनुपहते कल्याणमङ्गले सुखारोग्ये यत्र ॥ २९ ॥ धर्मात्मा सततमित्यत्र नञर्थोऽकारस्तेन अदृश्य इत्यर्थः ॥ ३० ॥ अन्यथा दृश्यत्वेन ॥ ३२ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[विष०] संतुष्टः निर्लोभः । अव्ययः अविनाशी अकालमृत्युरहितः । यद्वा अधिकव्ययोऽव्ययः इति धिकारवर्णलोपः ॥ २६ ॥ त्यक्तं वाक्यानृतं येन सः । शुभकल्याणमङ्गलः । कल्याणं यज्ञादि । मङ्गलं विवाहादि । 'प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिर्धर्मवादिभिः ' स राजा द्विजातिभिरप्यदृश्यः परिज्ञातुमशक्यः ॥ २९ ॥ 'अन्तं स्वरूपे निर्दिष्टम्' अन्ततः स्वरूपतः तत्त्वत इत्यर्थः ॥ ३१ ॥ कीर्तिः परलोकचारी शुभशब्दः । सत्रेण यज्ञरूपेण धर्मेण छन्नम् । सतां त्राणलक्षणेन धर्मेण छन्नम् अदृश्यमज्ञेयम् । 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः' इति वचनात् सतस्त्रायत इति सत्रः धर्मः मे मम वाक्ये श्रद्दधासि प्रतीतिं मन्यसे ॥ ३२ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. अष्टाविंशोऽध्यायः ॥२८॥

२५ व. तत्र दृश्यन्ते । २६ ग. जनस्तत्र हृष्टः पुष्टातिमानदः; च. संतुष्टः शुचिरव्ययः । २७ ग. च. सत्यधर्मपरायणः; व. शश्वद्धर्मपरायणः । २८ ग. घ. च. व. अशुभद्विट् शुभप्रेप्सुर्नित्ययज्ञः शुभव्रतः । २९ व. सत्यवाक्योऽनृतत्रस्तः । ३० । च. ज. ढं. पूर्वार्धात्प्रागधिकं—सर्वभूतदयायुक्तःसदानिर्मलमानसः । ज. ढं. धर्मात्मा सततं दृश्यः सोऽपि तात द्वि°; व. दृमावस्थितोऽदृश्यः । ३१ ढं. ग. घ. च. व. प्राकृतैः पार्थः शक्यो विज्ञा' । व. शक्यो विज्ञातुमन्ततः । ३२ व. छन्नं सत्रेण धीमतः । ३३ व. यत्कृत्यं मन्यसे ॥ इति अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः २९

चारप्रत्याचारे कृपवाक्यम् ॥ १ ॥

**वैशम्पायन उवाच—**

ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा ।
युक्तं प्राप्तं च वृद्धेन पाण्डवान्प्रति भाषितम् ॥ १ ॥
धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुकम् ।
तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु ॥ २ ॥
तेषां चैव गतिस्तीर्थैर्वासश्चैषां प्रचिन्त्यताम् ।
नीतिर्विधीयतां चापि साम्प्रतं या हिता भवेत् ॥३॥
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवास्तात सर्वास्त्रकुशला रणे ॥ ४ ॥
तस्मात्सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषुच्छन्नेषु काले चोदयमागते ॥ ५ ॥
स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः ।
उदयः पाण्डवानां च प्राप्ते काले न संशयः ॥ ६ ॥
निवृत्तसमयाः पार्था महात्मानो महाबलाः ।
महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः ॥ ७॥
तस्माद्बलं च कोशश्च नीतिश्चापि विधीयताम् ।
यथाकालोदये प्राप्ते सम्यक्तैः संदधामहे ॥ ८ ॥
तात बुद्ध्याऽपि तत्सर्वं बुध्यस्व बलमात्मनः ।
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ॥ ९ ॥
उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत ।
प्रहृष्टमप्रहृष्टं च संदधाम तथा परैः ॥ १० ॥

---

[ नील० ] युक्तं युक्तिमत् प्राप्तं प्राप्तकालम् ॥ १ ॥ तत्त्वतश्च सहेतुकं युक्त्याभासहीनम् ॥ २ ॥ तीर्थैश्चारैः ॥ ३ ॥ सत्रं कैतवं वेषान्तररूपं छन्नेषु गुप्तेषु उदयं उद्गमनं प्रतिज्ञाते काले उत्क्रान्ते सति सामीप्ये सप्तमी । कालेऽल्पावशिष्टे सतीत्यर्थः ॥ ५ ॥ परराष्ट्रेषु भिन्नराष्ट्रेषु स्वराष्ट्रेषु च स्वस्य बलं सैन्यं सामर्थ्यं च यत्तज्ज्ञातव्यम् ॥६॥ नीतिर्भक्तवेतनदानचारप्रवृत्त्यादिका तथा विधीयतां यथा येन प्रकारेण तैः सह संदधामहे शरादिसंधानं कुर्महे । यद्वा बलकोशयोरल्पत्वं स्वस्य परस्य बहुत्वं नीतिर्यथाप्रतिज्ञं सामरूपा विधीयतां यथा तैः सह संदधामहे सख्यं कुर्महे इति कालोदये मृत्यूदयरूपे युद्धे प्राप्ते सति । तेषां विधीयत इति पाठे तेषां कालतः उदये प्राप्ते सति यथा सम्यग्विधीयते जायते तथा नीतिर्विधीयताम् ॥८॥ नियतमचञ्चलं नियमेन बुध्यस्व ॥ ९ ॥ बोधफलमाह—उच्चेति । उच्चादिभेदेन त्रिविधमपि प्रहृष्टं वा अप्रहृष्टं वा ज्ञातव्यम् । उच्चं समं वा स्वबलम् अप्रहृष्टं चेत् प्रहृष्टबलैः शत्रुभिः सह संदधाम संधिं करवाम । विपरीतं चेदपि संदधाम शरानिति शेषः । संधनीयमिति पाठेऽपि तदेवार्थद्वयं ज्ञेयम् । आतो धातोरित्यालोपः अनीयर्प्रत्यये परे भवति । संधानीयमिति तु युक्तः पाठः ॥ १० ॥

[ अर्जु० ] युक्तं युक्तिसिद्धम् । स्वाप्तं स्वोचितम् । वृद्धेन भीष्मेण । इति परेण ॥ १ ॥ श्लक्ष्णमक्षरत्वात् अभिमुखम् ॥ २ ॥ तेषां पाण्डवानां गतिरभिप्रायः । तर्क्या ऊह्या अम्बरेण देहादिचलनेनापि देहिनो लक्ष्यन्ते । वासो निवासभूमिः ॥ ३ ॥ मम किं बलं मिलतीति ज्ञातव्यं सर्वमित्रेषु कियत् नियतमवश्योपायस्थायि ॥ ९ ॥ उच्चावचं उच्चं राजपुत्रादि अवचं चण्डालादि मध्यस्थं वैश्यादि । प्रकृष्टमप्रकृष्टं राजानं प्रति ॥ १० ॥

[ चतु० ] प्राप्तं प्रस्तुतम् ॥ १ ॥ काले प्रतिज्ञापूर्तिसमये ॥ ५ ॥ बलं सैन्यं सामर्थ्यं वा ॥ ६ ॥ नियतं निश्चितम् ॥ ९ ॥ उच्चावचं नैकभेदम् । दृढं प्ररूढार्थरागं (कृत्वा) बलज्ञातृभिः ॥ १० ॥

[ सर्व० ] प्राप्तं प्राप्तकालम् ॥ १ ॥ तीर्थैश्चारैः ॥ ३ ॥ सत्रं कपटेन वेषान्तरम् । उदयमुद्गमनं प्रतिज्ञाते काले उत्क्रान्ते सति कालेऽल्पावशिष्टे सतीत्यर्थः ॥ ५ ॥ संदधामहे शरादिसंधानं कुर्महे सख्यं कुर्महे वा ॥ ८ ॥

[ विरो० ] प्राप्तं प्रस्तुतम् । वृद्धेन भीष्मेणेत्यन्वयः ॥ १ ॥ अनु पश्चात् रूपं प्रकाशो यस्यानुरूपम् ॥ २ ॥ तथ्या २ तर्क्या (दे) ॥ ३ ॥ भावोऽभिप्रायः । छन्नेषु वेशेन । अर्थात् पाण्डवविषये काले ॥५॥ बलं ज्ञात्वा २ दृढं कृत्वा (च) ॥ १० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ विष० ] युक्तं युक्तिसिद्धं स्थविरोचितम् ॥ १ ॥ श्लक्ष्णं मधुरम् ॥२॥ सतां त्राणं सत्रो धर्मः । सतां प्रतिज्ञापालनलक्षणस्य धर्मस्य त्राणं यत्र तत्सत्रं तत्प्रविष्टेषु अज्ञात-

---

२ क. श्लक्ष्णं सर्वं सत्यं; च. श्लक्ष्णं धर्मतत्त्वं । ३ ज. गतिस्तर्क्या; व. गतिस्तथ्या । ४ज. बुभुत्सतः । ५ व. तस्माच्छन्नं । ७ ग. पार्थाः सत्यव्रतपरायणाः । व.ज. पाण्डवा ह्यतितेजसः । ८ व. तथा कालोदये । ९ क. यत्र यन्मन्यसे श्रेयो बुध्यस्व; व. तात मन्यामहे तत्र बुध्यस्व; व. तावद्वक्ष्यामि तत्सर्वं; ज. इति मन्यामि तत्सर्वं । व. ज. बलवत्सु बलेषु च । १० क. प्रथमार्धस्थाने—स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः । ज. प्रकृष्टमप्रकृष्टं च ।

साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ।
न्यायेनाक्रम्य च परान्बलाचानम्य दुर्बलान् ॥११॥
सान्त्वयित्वा तु मित्राणि बलं चाभाष्यतां सुखम् ।
सुकोशबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि ॥१२॥
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।
अन्यैस्त्वं पाण्डवैर्वापि हीनैः स्वबलवाहनैः ॥ १३ ॥
एवं सर्वं विनिश्चित्य व्यवसायं स्वधर्मतः ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १४ ॥

इति श्रीमहाभारते विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ३०

कीचकवधं श्रुत्वा त्रिगर्तराजेन विराटनगराभियानस्य प्राप्तकालत्वकथनम् ॥ १ ॥ सर्वैः सह संमन्त्र्य दुर्योधनप्रेषितेन त्रिगर्तराजेन दक्षिणभागे विराटगवीनां निग्रहणम् ॥ २ ॥

**वैशम्पायन उवाच—**

अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ॥ १ ॥
असकृन्निकृताः पूर्वं मत्स्यशाल्वेयकैः प्रभो ।
सूतेनैव च मत्स्यस्य कीचकेन पुनः पुनः ॥ २ ॥

---

वासं प्राप्तेषु । गूढभावेषु गूढेङ्गिताकारेषु । छन्नेषु वेषेणावृतेषु । काले त्रयोदशवर्षावसाने ॥ ५ ॥ उच्चं राजपुत्रादि अवचं चण्डालादि । राजानं प्रति बलिकर्मणि निदानविशेषणम् (?) । मध्यस्थं वोभयसंमतं भीष्मद्रोणादि ॥ १० ॥

[ लक्षा० ] सारं वल्गु फलं ज्ञात्वा मध्यस्थं चापि भारतेत्यत्र सारमुत्तमं, वल्गु अल्पं फलं यस्य तत् अधमं, मध्यस्थं मध्यममिति बलस्य विशेषणम् ॥ १० ॥

[ नील० ] साम्ये सामभेदौ अपरस्याधिक्ये दानं स्वस्याधिक्ये दण्डो युद्धे निपातनं वा बलिकर्म वा करादानाख्यमिति बलज्ञानफलम् ॥ ११ ॥ बलं स्वसैन्यं सुखं यथा स्यात्तथा आभाष्यतां प्रीतिवादेन भक्तवेतनमानदानेन संमन्त्रणीयमित्यर्थः । सिद्धिं जयम् ॥१२॥ अन्यैः शत्रुभिः पाण्डवैश्चापि सह योत्स्यसे । कीदृशैः स्वबलादिना हीनैः ॥ १३ ॥ व्यवसायं स्वकर्तव्यम् ॥ १४ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ अर्जु० ] बलिकर्मणेति दानविशेषणं बलिरुपाहारः । न्यायेन सामादिना । दुर्बलान् म्लेच्छस्थानिति शेषः ॥ ११ ॥ सान्त्वयित्वा प्रीणयित्वा । बलं सैन्यम् आभाष्यतां सुखं यथा भवति ॥ १२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ चतु० ] बलिकर्मणा दिक्पालादिपूजनेन । न्यायेन सामदानादिभेदानामन्यतमेन । परान्दुर्बलेतरान् ॥ ११ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ सर्व० ] बलं स्वसैन्यम् आभाष्यतां संमन्त्रणीयमित्यर्थः ॥ १२ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ विष० ] मुख्यतः मुख्यान्योधान् प्रधानान्वा मुख्यान् विदुरादीनाभाष्याऽऽकार्य॥ १२ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ लक्षा० ] दण्डेन बलिकर्मणेत्यत्र बलिकर्मणा बलेः पूजाया योग्यसेवारूपकर्मणा । न्यायेनानन्यबलिनः बलवानन्यदुर्हृदः । अनन्यबलिनः असदृशबलिष्ठान् न्यायेन सांत्वयित्वा । अनन्यदुर्हृदः असदृशदुःखितान् अविदुर्बलानिति यावत् बलेन सान्वयित्वेति योजना ॥११॥ मित्राणि स्वमित्रजनान् प्रति ॥ १२ ॥ हीनः स्वबलवाहनैरिलेतस्य पाण्डवैरिति संबन्धः ॥ १३ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे वि. प. एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

[ नील० ] वाक्यमुवाचेत्यत्र हेतुमाह—असकृदिति । निकृताः वञ्चितास्त्रिगर्ता इति शेषः । प्रभो हे जनमेजय ॥ २ ॥

[ अर्जु० ] अथ राजा त्रिगर्तानामित्यादेर्विराटपर्वसमाप्तिपर्यन्तस्य कष्टतमसमयपालनजन्मना पुण्येन समुत्तेजितौजसां पाण्डवानां सर्वातिशयपौरुषमिति तात्पर्यार्थः ॥ १ ॥

[ सर्व० ] निकृताः वञ्चिताः ॥ २ ॥

[ विरो० ] उवाच मनसा ॥ १ ॥

---

११ व. बल्कर्मणा । १२ व. स्वमित्राणि । व. बलं चाभाष्य मुख्यतः व. एकोनत्रिंशदध्यायान्ते–'इति कृपवचनं निशम्य राजा सुतसुहृदादिवलेन संयुतोऽसौ । नियतिवशगतस्त्रिगर्तनाथो रिपुहूतये निजगाद गां सुशर्मा ॥'

इत्यधिकः श्लोकः । इति एकोनत्रिंशोऽध्यायः ॥
१ व. ज. त्वरितो भृशम् ।

बाधितो बन्धुभिः सार्धं बलाद्बलवतां विभौ ।
स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ॥ ३ ॥
असकृन्मत्स्यराजेन राष्ट्रं बाधितमोजसा ।
प्रणेता कीचकस्तस्य बलवानभवत्पुरा ॥ ४ ॥
क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः ।
निहतः स तु गन्धर्वैः पापकर्मा नृशंसवान् ॥ ५ ॥
तस्मिन्विनिहते राजा हतदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ६ ॥
तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ७ ॥
एतत्प्राप्तमहं मन्ये कार्यमात्ययिकं हि नः ।
राष्ट्रं तस्याभियास्यामो बहुधान्यसमाकुलम् ॥ ८ ॥
आददामोऽस्य रत्नानि विविधानि वसूनि च ।
ग्रामान् राष्ट्राणि वा तस्य हरिष्यामो विभागशः॥९॥
अथवा गोसहस्राणि शुभानि च बहूनि च ।
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात्॥१०॥
कौरवैः सह संगत्य त्रिगर्तैश्च विशाम्पते ।
गास्तस्यापहरामोऽद्य सर्वैश्चैव सुसंहताः ॥ ११ ॥
संविभागेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे ॥ १२ ॥
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतां बलवृद्धिश्च भविष्यति न संशयः ॥ १३ ॥
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ।
सूक्तं सुशर्मणा वाक्यं प्राप्तकालं हितं च नः॥१४॥
तस्मात् क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीम् ।
विभज्य चाप्यनीकानि यथा वा मन्यसेऽनघ॥१५॥
प्राज्ञो वा कुरुवृद्धोऽयं सर्वेषां नः पितामहः ।
आचार्यश्च यथा द्रोणः कृपः शारद्वतस्तथा ।
मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम्॥१६॥
संमन्त्र्य चाशु गच्छामः साधनार्थं महीपते ।
किं च नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ॥१७॥
अत्यन्तं वा प्रनष्टास्ते प्राप्ता वापि यमक्षयम् ।
यामो राजन्निरुद्विग्ना विराटनगरं वयम् ।
आदास्यामो हि गास्तस्य विविधानि वसूनि च१८

वैशम्पायन उवाच—

ततो दुर्योधनो राजा वाक्यमादाय तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम् ॥ १९ ॥
शासने नित्यसंयुक्तं दुःशासनमनन्तरम् ।
सह वृद्धैस्तु संमन्त्र्य क्षिप्रं योजय वाहिनीम् ॥२०॥
यथोद्देशं च गच्छामः सहितास्तत्र कौरवैः ।
सुशर्मा च यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्तैः सहितो राजा समग्रबलवाहनः ॥ २१ ॥
प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति ।
जघन्यतो वयं तत्र यास्यामो दिवसान्तरे ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ॥ २२ ॥
ते यान्तु सहितास्तत्र विराटनगरं प्रति ।
क्षिप्रं गोपान्समासाद्य गृह्णन्तु विपुलं धनम् ॥ २३ ॥

[नील०] बाधितः सुशर्मा बलवतां कौरवाणां विभौ स्वामिनि भीष्मे समीपे सति कर्णं चोदीक्ष्य दुर्योधनमभाषत ॥ ३ ॥ निबध्नीमः निगृह्णीमः ॥ १२ ॥ विनिर्यामः निर्गच्छामः ॥ १५ ॥ यथोद्देशं यथानिर्दिष्टं दक्षिणामुत्तरां वा दिशं यथायोग्यं बलविभागं वा उद्दिश्येत्यर्थः ॥२१॥

[अर्जु०] क्रूरः हिंसास्वभावः ॥ ५ ॥ कार्यमात्ययिकं कालक्षेपणासहम् ॥८॥ सुसंहताः मिलिताः ॥ ११ ॥ निबध्नीमः संयमयामः ॥ १२ ॥ सुसंवीतो बलेन परिवेष्टितः ॥ २२ ॥

[चतु०] आत्ययिकं कालक्षेपासहम् ॥ ८ ॥ साधनार्थं यात्रार्थं वा ॥ १७ ॥ यामो गच्छामः ॥ १८ ॥ अनन्तरमव्यक्तम् (?) ॥ २० ॥ सुसंवीतः स्वशक्तियुक्तः ॥ २२ ॥

[सर्व०] क्षयं गृहम् ॥ १८ ॥ यथोद्देशं यथानिर्दिष्टं दक्षिणामुत्तरां वा दिशम् ॥ २१ ॥

[विरो०] आत्ययिकम् अतिक्रमासहम् ॥ ८ ॥ प्रनष्टा अतिदूरगमनादसंभावितागमनाः ॥ १८ ॥ जघन्यतः पश्चात् ॥ २२ ॥

[विष०] प्रणेता सेनानीः ॥ ४ ॥ आत्ययिकमवश्यं

३ व. ज. विभो व. ज. बलाद्बलवता । ५ ज. सुदुष्टात्मा । ज. नृशंसकः; व. नृशंसकृत् । ८ ज. बहुधान्यधनाकुलम् । १० घ. व. पुरं रिपुम् । ११ व. ज. हरामाशु । ज. व. सह सर्वैः सुसंहिताः; व. सुसंहितैः सुसंयताः । १२ व. संविधानेन कृत्वा; क. ग. सन्धिं वा तेन कृत्वा । ज. निगृह्णीमोऽस्य । ज. वसामश्च लभामहे; व. वशं कृत्वा नयामहे । १६ क. द्वितीयार्धस्थाने– आचार्यश्च कृपो विद्वान्राकुनिश्चापि सौबलः । १७ व. हीनार्थबलपूरुषैः ।

१८ ज. अत्यन्तभावं नष्टास्ते । व. यावद्राजन्ननुज्ञाता । व. ज. विराटविषयं । व. आददानो हि । २० ज. सह सर्वैश्च । २१ व. सहिताः सर्वकौरवैः । २२ वि. हि सुखं यातु; ज. हि सुखं यातो । व. द्वितीयार्धस्थाने– जघन्याः पृष्ठतस्तत्र यास्यामो दिवसान्तरम् । २३ ज. ते गत्वा सहसा तत्र । व. सहिताः सर्वे विराटविषयं । व. गोपानभिद्राव्य ।

गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ २४ ॥

वैशम्पायन उवाच—

ते स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपते ।
सन्नद्धा रथिनः सर्वे सपदाता बलोत्कटाः ॥ २५ ॥
प्रति वैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः ।
आदातुं गाः सुशर्माऽथ कृष्णपक्षस्य सप्तमीम् ॥ २६ ॥
अपरे दिवसे सर्वे राजन्संभूय कौरवाः ।
अष्टम्यां ते न्यगृह्णन्त गोकुलानि सहस्रशः ॥ २७ ॥

इति श्रीमहाभारते विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ३१

गोपेभ्यस्त्रिगर्तैर्गोहरणं श्रुतवतो विराटस्य सेनया कङ्कबल्लवगोपालदामग्रन्थिभिश्च सह संनह्य त्रिगर्तान्प्रत्यभियानम् ॥ १ ॥

वैशम्पायन उवाच—

ततस्तेषां महाराज तत्रैवामिततेजसाम् ।
छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ १ ॥
व्यतीतः समयः सम्यग्वसतां वै पुरोत्तमे ।
कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ २ ॥
कीचके तु हते राजा विराटः परवीरहा ।
परां संभावनां चक्रे कुन्तीपुत्रे युधिष्ठिरे ॥ ३ ॥
ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत ।
सुशर्मणा गृहीतं तद्गोधनं तरसा बहु ॥ ४ ॥
ततो जवेन महता गोपः पुरमथाव्रजत् ।
स दृष्ट्वा मत्स्यराजं च रथात्प्रस्कन्द्य कुण्डली ॥ ५ ॥
शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ।
संवृतं मन्त्रिभिः सार्धं पाण्डवैश्च महात्मभिः ॥ ६ ॥

---

करणीयम् ॥ ८ ॥ संविभागेन कालेन ॥ १२ ॥ प्राप्तकालं अनेन विधिना समयः प्राप्तः ॥ १४ ॥ अनन्तरमनुजं वृद्धैः भीष्मादिभिः ॥ २० ॥ सुसंवीतो बलेन वेष्टितः ॥ २२ ॥

[ नील० ] गृद्धाः लुब्धाः ॥ २६ ॥ न्यगृह्णन्त कालयामासुः ॥ २७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विरा० त्रिंशोऽध्यायः ॥ ३० ॥

[ अर्जु० ] घर्मपक्षस्य आषाढस्य ॥ २६ ॥ संभूय मिलित्वा ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० त्रिंशोऽध्यायः ॥ ३० ॥

[चतु०] अनु पश्चात् । वरूथिनीं सेनाम् ॥ २४ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ सर्व० ] गृद्धाः लुब्धाः ॥ २६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[विरो०] वह्नेर्दिशमाग्नेयीम् ॥ २५ ॥ सप्तमीं प्रति (शे) ॥ २६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ विष० ] वह्नेः दिशम् आग्नेय्यां दिशि हास्तिनपुरात् ॥ २५ ॥ आषाढमासकृष्ण(शुक्ल)सप्तम्याम् ॥ २ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ लक्षा० ] कृष्णपक्षस्य चाष्टमीत्यत्र यदेति योग्यपदाध्याहारः ॥ २६ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ नील० ] छद्मलिङ्गेन ब्राह्मणादिकपटवेषेण प्रविष्टानाम् ॥ १ ॥ व्यतीतोऽतिक्रान्तः समयः संवत्सरः ॥ २ ॥ संभावनां कीचकवदयमपि मम जयकर्ता भविष्यतीत्येवंरूपाम् ॥ ३ ॥

[ चतु० ] आसामपाश्रयं प्रणयं वा ॥३॥ अवस्कन्द्यावतीर्य ॥ ५ ॥

[ सर्व० ] समयः संवत्सरः ॥ २ ॥ संभावनां कीचकवदयमपि मम जयकर्ता भविष्यतीति ॥ ३ ॥

[ विरो० ] व्यतीतः व्यतीतप्रायः ॥ २ ॥ आसांचक्रे अपाश्रयणं चक्रे ॥ ३ ॥

---

२४ व. वयं तस्यानु° । २५ व. तत्र गत्वा यथोद्दिष्टं दिशं चाग्नेर्म° । ज. तस्य गत्वा । ज. अ. महीपतेः । व. सपदातिबलोत्कटाः । २६ घ. व. गोषु संन्यपतंस्तदा । ज. व. आदत्त । ज. व. घर्मपक्षस्य । क. °स्य चाष्टमीम् । २७ ज. व. अपरं दिवसं सर्वे । व. अष्टमीं ते न्य°; क. नवम्यां तेऽन्य° । व. ज. तान्यगृह्णन्त । इति त्रिंशोऽध्यायः ॥ ३० ॥

३ ग. घ. च. ङ. व. आसांचक्रे महावीर्यः कुन्तीपुत्रश्च वीर्यवान्; ज. आसां चक्रे सहामात्यः कुन्तीपुत्रेषु वी° । ४ तत्र त्रयोदशस्यान्ते वर्षस्य भरतर्षभ । ५ ज. व. अपश्यन्मत्स्य° । व. ज. सिंहासनगतं प्रभुं । ६ व. ज. सद्भिश्च मन्त्रि° । व. महाबलैः । ज. °श्च नरर्षभैः ।

तं सभाया महाराजमासीनं राष्ट्रवर्धनम् ।
सोऽब्रवीदुपसंगम्य विराटं प्रणतस्तदा ॥ ७ ॥
अस्मान् युधि विनिर्जित्य परिभूय सबान्धवान् ।
गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते ॥ ८ ॥
तान्परीप्सस्व राजेन्द्र मा नेशुः पशवस्तव ।
तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत् ॥९॥
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ।
राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ॥ १० ॥
भानुमन्ति विचित्राणि शूरसेव्यानि भागशः ।
सवज्रायसगर्भं तु कवचं तप्तकाञ्चनम् ॥ ११ ॥
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् ।
सर्वपारसवं वर्म कल्याणपटलं दृढम् ॥ १२ ॥
शतानीकादवरजो मदिराक्षोऽभ्यहारयत् ।
शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ॥ १३ ॥
अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ।
उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ॥१४॥
सुवर्णपृष्ठं सूर्याभं सूर्यदत्तोऽभ्यहारयत् ।
दृढमायसगर्भं च श्वेतं वर्म शताक्षिमत् ॥ १५ ॥
विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् ।
शतशश्च तनुत्राणि यथास्वं ते महारथाः ॥ १६ ॥

[ विष० ] प्रस्कन्द्याऽवतीर्य ॥ ५ ॥ परिवृतं बाहुपृष्ठपार्श्वादिषु शूरैः महाबलैः ॥ ६ ॥

[ नील० ] मा नेशुः नाशमदर्शनं दूरे इति यावत् मा गच्छेयुः ॥ ९ ॥ तनुत्राणि कवचानि ॥ १० ॥ भानुमन्ति दीप्यमानानि वज्रायसम् अशनिलोहं यद्वा वज्रवदच्छेद्यमभेद्यं च यदयः भाषायां पोलाद इति संज्ञितं तद्वज्रायसं तन्मयो गर्भोऽन्तःकवचं तेन सहितं सवज्रायसगर्भम् । पाठान्तरे संनाहाय सज्जीभावाय सगर्भं सकण्टकम् । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति नानार्थः । 'वज्रं स्याद्धीरके पवौ' इति च ॥ ११ ॥ अभ्यहारयत् बबन्ध । पारसवं परान् सुनोति पीडयति सुवति क्षिपति वा परसवम् । ऋदोरप् स्वार्थे तद्धितः पारसवं शस्त्रं सर्वपारसवं सर्वशस्त्रसहमित्यर्थः । कल्याणपटलं सुवर्णपत्राच्छादितम् 'कल्याणमक्षये स्वर्णे' इति विश्वः ॥१२॥ आवर्तते पुनः पुनर्म्लायति विलसतीति योगात् चन्द्रः पद्मं वा बिन्दुः सूक्ष्मचक्रम् अक्षि नेत्राकारं चक्रम् ॥ १३ ॥ उत्सेधे उच्छ्राये संपूर्णे विस्तारे कह्लारजातीयानि शतं पद्मानि पङ्क्त्या निविष्टानि एवं विशालमित्यर्थः ॥ १४ ॥

[ अर्जु० ] आस्थामभ्युगमं परीप्सुः प्राप्तुमिच्छुः (?) । मा नेशुः मा नश्येयुः ॥ ९ ॥ कलिलां गहनाम् ॥ १० ॥ भागशः बाहुपृष्ठपार्श्वादिषु । सवज्रायसगर्भं चेति । वज्रं हीरकं तेन सहितमायसं तेन गर्भः संधिः संधानं यस्येति तथा । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' तथा 'वज्रोऽस्त्री हीरके पवौ' इति । अभ्यहारयत् बद्धवान् ॥ ११ ॥ सर्वपारसवं सर्वलौहखचितम् । सर्वायसं वेति सर्वपारसवार्थः । कल्याणपटलः कल्याणमक्षयसुवर्णं पलटमाच्छादनं यस्य तत् तथा । कल्याणमक्षयस्वर्णे मङ्गलेऽपि नपुंसकमिति । अथ पटलं पिटके च परिच्छेदे इति मेदिनी ॥ १२ ॥ शतसूर्यं शतं सूर्या निर्मिता यत्र तत्तथा ॥१३॥ उत्सेधे उपरिभागे पद्मानि निर्मितानि सौगन्धिकानि कह्लाराणि ॥ १४ ॥ यथास्वानि यद्यस्यात्मीयम् ॥ १६ ॥

[ चतु० ] कालयन्ति नयन्ति ॥ ८ ॥ मा नेशुः न नश्येरन् ॥ ९ ॥ तनुत्राणि कवचानि ॥ १० ॥ सूपसेव्यानि सुखधार्याणि । वज्रायसं वज्रमयम् ॥ ११ ॥ अभ्यहारयत् पिनद्धवान् । सर्वपारसवं सकलायसम् । कल्याणमक्षयकाञ्चनं पटलं वरणं यस्या आवर्तक्रियायाः (?) ॥ १२ ॥ यस्य उत्सेधे कायाभोगे । सौगन्धिकान्युत्पलानि ॥ १४ ॥ श्वेतं रजतमयम् ॥ १५ ॥

[सर्व०] मा नेशुः दूरे मा गच्छेयुः ॥९॥ तनुत्रं कवचम् ॥ १०॥ वज्रायसम् अशनिलोहं तन्मयो गर्भोऽन्तःकवचं तेन सहितम् । पाठान्तरे सन्नाहाय सज्जीभावाय सगर्भं सकण्टकम् ॥ ११ ॥ अभ्यहारयत् बबन्ध । पारसवं शस्त्रं तत्सहमित्यर्थः । कल्याणपटलं सुवर्णपत्राच्छादितम् ॥ १२ ॥ आवर्तते पुनः पुनर्म्लायतीत्यावर्तश्चन्द्रः । बिन्दुः सूक्ष्मचक्रमक्षि नेत्राकारं चक्रम् ॥ १३ ॥ उत्सेधे उच्छ्राये संपूर्णे विस्तारे कह्लारजातीयानि शतं पद्मानि पङ्क्त्या निविष्टानि एवं विशालमित्यर्थः ॥ १४ ॥

[ विरो० ] अभिहारोऽभिग्रहणम् । कल्याणं पटलमभेद्यमावरणम् ॥ १२ ॥ शतावर्तं शतचक्रम् ॥ १३ ॥ उत्सेधे उपरि ॥ १४ ॥

[ विष० ] परीप्सस्व प्राप्तुमिच्छ ॥८॥ कलिलां व्याप्ताम् ॥ १० ॥ सूपसेव्यानि सुखग्राह्याणीत्यर्थः ॥ ११ ॥ उत्सेधे उपरितनभागे । सौगन्धिकानि कह्लाराणि श्वेतानि तपनीयनिभानि च ।

७ उत्तरार्धे. त्रि. अपश्यन्मत्स्यराजानं सिंहासनगतं तदा । ९ ज. तान्परीप्स मनुष्येन्द्र व. तान्समीक्ष्य; । १०°श्वकलितां । पूर्वार्धादुत्तरमाधिकं घ. व. क्षमादिश्य तदा राजा मत्स्यानां परवीरहा । ११ ग. ङ. सूपसेव्यानि भा°; व. १२ व. सर्वंहारकजं वर्म कल्याणं चापराजितम् । १३ व. मदिराश्वो । व. शताक्षिकम् । १५ व. वर्म समाक्षिपत् । १६ व.वीरः संख्यो; व. स्वानि स्वानि मह्य°; यथार्हन्ते ।

योत्स्यमाना अनह्यन्त देवरूपाः प्रहारिणः ।
सूपस्करेषु शुभ्रेषु महत्सु च महारथाः ॥ १७ ॥
पृथक्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् ।
सूर्यचन्द्रप्रतीकाशे रथे दिव्ये हिरण्मये ॥ १८ ॥
महानुभावो मत्स्यस्य ध्वज उच्छिश्रिये तदा ।
अथान्यान् विविधाकारान् ध्वजान्हेमपरिष्कृतान् १९
यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् ।
अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ॥२०॥
कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्यवान् ।
युध्येयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ २१ ॥
एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।
कवचानि च चित्राणि दृढानि च मृदूनि च ॥२२॥
प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ।
वीराङ्गरूपाः पुरुषा नागराजकरोपमाः ॥ २३ ॥
नेमे जातु न युध्येरन्निति मे धीयते मतिः ।
एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः ।
शतानीकस्तु पार्थेभ्यो रथान्राजन्समादिशत् ॥२४॥
सहदेवाय राज्ञे च भीमाय नकुलाय च ।
तान्प्रहृष्टांस्ततः सूता राजभक्तिपुरस्कृताः ॥ २५ ॥
निर्दिष्टा नरदेवेन रथान् शीघ्रमयोजयन् ।
कवचानि विचित्राणि मृदूनि च दृढानि च ॥ २६ ॥
विराटः प्रादिशद्यानि तेषामक्लिष्टकर्मणाम् ।
तान्यामुच्य शरीरेषु दंशितास्ते परन्तपाः ॥ २७ ॥
रथान् हयैः सुसंपन्नानास्थाय च नरोत्तमाः ।
निर्ययुर्मुदिताः पार्थाः शत्रुसंघावमर्दिनः ॥ २८ ॥
तरस्विनश्छन्नरूपाः सर्वे युद्धविशारदाः ।
रथान् हेमपरिच्छन्नानास्थाय च महारथाः ॥ २९॥
विराटमन्वयुः पार्थाः सहिताः कुरुपुङ्गवाः ।
चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः ॥३०॥
भीमाश्च मत्तमातङ्गाः प्रभिन्नकरटामुखाः ।
क्षरन्तश्चैव नागेन्द्राः सुदन्ताः षष्टिहायनाः ॥ ३१ ॥
स्वारूढा युद्धकुशलैः शिक्षिता हस्तिसादिभिः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ॥ ३२ ॥
विशारदानां मुख्यानां हृष्टानां चारुजीविनाम् ।
अष्टौ रथसहस्राणि दश नागशतानि च ॥ ३३ ॥
षष्टिश्चाश्वसहस्राणि मत्स्यानामभिनिर्ययुः ।
पूर्णे शतसहस्रे द्वे पदातीनां च भारत ॥ ३४ ॥
तदनीकं विराटस्य शुशुभे भरतर्षभ ।
संप्रयातं तदा राजन्निरीक्षन्तं गवां पदम् ॥ ३५ ॥
तद्बलाग्र्यं विराटस्य संप्रस्थितमशोभत ।
दृढायुधजनाकीर्णं गजाश्वरथसंकुलम् ॥ ३६ ॥

इति श्रीमहाभारते विराटपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

रूप्यमयानीत्यर्थः ॥ १४ ॥ वीर इति संख्यायतेऽसौ संख्यः वीरनामा । ख्या प्रकथने ॥ १६ ॥

[नील०] अभ्यनह्यन्त इति पाठे संधिरार्षः । सूपस्करेषु शोभनरथाङ्गेषु ॥ १७ ॥ उच्छिश्रिये उच्छ्रितोऽभूत् ॥ १९ ॥ गोपालस्तन्तिपालाख्यः दामग्रान्थिर्ह्यश्वपालः ॥ २१ ॥ प्रभिन्नकरटामुखाः 'काकेभगण्डौ करटौ' इत्यमरः ॥ ३१ ॥ निरीक्षन्तं निरीक्षमाणं पुँल्लिङ्गमार्षम् ॥३५॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥

[अर्जु०] सूपस्करेषु शोभना उपस्कराश्चक्राणि रथेषु ॥ १७ ॥ महानुभावः महाप्रतापशाली ॥ १९ ॥ प्रतिमुञ्चन्तु बध्नन्तु वीराङ्गरूपाः वीरस्येवाङ्गान्यवयवा रूपाणि लावण्यानि येषां ते तथा ॥ २३ ॥ पार्थेभ्य इत्युपलक्षणम् माद्रीपुत्राभ्यामिति पुत्रवत्पोषणादिना तयोरपि पृथापत्यत्वमिति वा ॥ २४ ॥ तान्यात्मनाकर्षितानि पिधाय ॥ २७ ॥ विशारदानां युद्धपण्डितानाम् ॥ ३३ ॥ निनीषन्तं प्रापयितुमिच्छन्तं राजानम् ॥ ३६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥

[चतु०] सूपस्करेषु सूपकरणेषु ॥ १७ ॥ यथास्वं स्वान् स्वान् ॥ २० ॥ प्रभिन्नानि कराटान्तानि करटामुखानि गण्डबिलानि येषाम् ॥ ३१ ॥ विशारदानां शिक्षाकुशलानाम् ॥ ३३ ॥ निनीषन्तं प्रापयितुमिच्छन्तम् ॥ ३६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥

१७ वं. °षु सर्वेषु शुभ्रेषु च । २० व. पताकाचित्रितान्हैमान्रथेषु । २२ ज. च शुभानि च । २४ ज. त इमे जातु शुद्ध्येयु° । २५ ज. व. तान्प्रहृष्टास्त° । २६ निसृष्टान्नर° । २८ व. च. पुरोत्तमाव् व. सङ्घातमर्दिनः । ३० व. ज. °युः पश्चात्सहि° । व. ज. कुरुनन्दनाः । ३१ ज. व. क्षरन्त इव जीमूताः । ३२ ज. व. शिक्षितैर्गज° । व. °युः सर्वे चलन्तः । ३३ व. °स्राणि पदाता लक्षसंमिताः । ३६ च. ज. °स्य निनीषन्तम° । इति एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ३२

मत्स्यानां त्रिगर्तानां च तुमुलं युद्धम् ॥ १ ॥

वैशम्पायन उवाच—

निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः ।
त्रिगर्तानस्पृशन्मत्स्याः सूर्ये परिणते सति ॥ १ ॥
ते त्रिगर्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः ।
अन्योन्यमभिगर्जन्तो गोषु गृद्धा महाबलाः ॥ २ ॥
भीमाश्च मत्तमातङ्गास्तोमराङ्कुशनोदिताः ।
ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३ ॥
तेषां समागमो घोरस्तुमुलो लोमहर्षणः ।
घ्नतां परस्परं राजन् यमराष्ट्रविवर्धनः ॥ ४ ॥
देवासुरसमो राजन्नासीत्सूर्येऽवलम्बति ।
पदातिरथनागेन्द्रहयारोहबलौघवान् ॥ ५ ॥
अन्योन्यमभ्यापततां निघ्नतां चेतरेतरम् ।
उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ॥ ६ ॥
पक्षिणश्चापतन् भूमौ सैन्येन रजसाऽऽवृताः ।
रुक्मपुङ्खैः सुतीक्ष्णाग्रैर्वज्राग्निसदृशप्रभैः ।
इषुभिर्व्यतिसर्पद्भिरादित्योऽन्तरधीयत ॥ ७ ॥
खद्योतैरिव संयुक्तमन्तरिक्षं व्यराजत ।
रुक्मपृष्ठानि चापानि व्यतिषक्तानि धन्विनाम् ॥ ८ ॥
पततां लोकवीराणां सव्यदक्षिणमस्यताम् ।
रथा रथैः समाजग्मुः पादातैश्च पदातयः ॥ ९ ॥

---

[ सर्व० ] सूपस्करेषु शोभनरथाङ्गेषु ॥ १७ ॥ उच्छ्रिये उच्छ्रितोऽभूत् ॥ १९ ॥ दंशिताः संनद्धाः ॥ २७ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ विरो० ] महानुभावः सिंहः ॥ १९ ॥ वीरस्येवाङ्गरूपे येषाम् ॥ २३ ॥ आरूढाः पार्थाः ॥ ३२ ॥ विशारदानां मत्स्यानाम् ॥ ३३ ॥ मत्स्यानामभिनिर्ययुः २ पत्तिकोटी च भारत (सू) । पत्ति पत्तीनाम् ॥ ३४ ॥ निनीषत्तम् (दे) तं विराटं गवांपदं निनीषत् प्रापयितुमिच्छत् (दे) निनीषं तं (च) । निनीषाऽस्यास्ति अर्शआद्यच् । उक्त एवार्थः । निनीषंस्तं (सू) आर्षम् ॥ ३६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ विष० ] दंशिताः संनद्धाः ॥ २७ ॥ प्रभिन्नकरटामुखाः मदभिन्नकपोलाः । करटामुखं प्रस्फुटितगण्डस्थलच्छिद्रं मदवशात् ॥ ३१ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

[ नील० ] निर्याय निर्गत्य अस्पृशन् प्राप्तवन्तः परिणते पञ्चधा विभक्तस्याह्नश्चतुर्थभागं प्राप्ते ॥ १ ॥ ग्रामणीयैः राजकीयैः 'ग्रामणीर्नापिते पुंसि त्रिष्वध्यक्षेऽधिपेऽपि च' इति नानार्थः ॥ ३ ॥ समागमः संग्रामः ॥ ४ ॥ अवलम्बति अवरोहति ॥ ५ ॥ सैन्येन सेनोत्थेन ॥ ७ ॥ व्यतिषक्तानि हस्तात् हस्तान्तरं गतानि ॥ ८ ॥ अस्यतां क्षिपताम् ॥ ९ ॥

[ अर्जु० ] व्यूढानीकाः शकटादिव्यूहेन कृतव्यूहसैन्याः परिणते किंचिच्छेषे ॥ १ ॥ गृद्धाः साकाङ्क्षाः ॥ २ ॥ ग्रामणीयैः प्रधानैः स्वार्थे ष्यञ् ॥ हस्तिसादिभिः हस्त्यारोहैः ॥ ३ ॥ समागमः समरः ॥ ४ ॥ व्यतिसंयद्भिः विनयेन गच्छद्भिः ॥ ७ ॥ व्यतिषक्तानि करात्करं नीतानि ॥ ८ ॥ पततां गच्छताम् । अस्यतां क्षिपताम् ॥ ९ ॥

[ चतु० ] अस्पृशन्प्राप्तवन्तः ॥ १ ॥ गृद्धाः सस्पृहाः ॥ २ ॥ ग्रामणीयैः प्रधानैः ॥ ३ ॥ सैन्येन सेनाभवेन । व्यतिसर्पद्भिरन्योन्यं गच्छद्भिः ॥ ७ ॥ व्यतिषक्तानि समुद्यतानि ॥ ८ ॥ पततां गच्छताम् । अस्यतां क्षिपताम् ॥ ९ ॥

[ सर्व० ] ग्रामणीयैः राजकीयैः ॥ ३ ॥ व्यतिषक्तानि हस्ताद्धस्तान्तरं गतानि ॥ ८ ॥ अस्यतां क्षिपताम् ॥ ९ ॥

[ विरो० ] परिणते अस्ताभिमुखे ॥ १ ॥ समागमः २ तु समयः ( सू ) आचारः ॥ ४ ॥ व्यतिसर्पद्भिः; संयद्भिः ( दे ) ॥ ७ ॥

[ विष० ] व्यूढानीका रचितसैन्याः । सूर्ये परिणते सति किंचिच्छेषे सति ॥ १ ॥ गोषु गृद्धा गोषु साकाङ्क्षाः ॥ २ ॥ ग्रामणीयैः प्रधानैः ॥ ३ ॥ अभ्यापततां संमुखमागच्छताम् ॥ ६ ॥ व्यभिषक्तानि करात्करान्तरं नीतानि ॥ ८ ॥ पततां गछताम् ॥ ९ ॥

---

१ ब. निर्ययुर्न॰ । क. सूर्येऽस्तं गमिते सति । ४ ज. ब. घोरस्तुमलो । ज. परस्परं घोरो य॰; ब. घोरं य॰ । ५ ब. ज. ॰वलम्बिनि । ६ ब. चोत्तरोत्तरम् । ८ ब. व्यभिषक्तानि; अ. व्यतिपिक्तानि ।

सादिनः सादिभिश्चैव गजैश्चापि महागजाः ।
असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि ॥१०॥
संरब्धाः समरे राजन्निजघ्नुरितरेतरम् ।
निघ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ॥ ११ ॥
न शेकुरभिसंरब्धाः शूरान्कर्तुं पराङ्मुखान् ।
कृत्तोत्तरोष्ठं सुनसं कृत्तकेशमलङ्कृतम् ॥ १२ ॥
अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलम् ।
अदृश्यंस्तत्र गात्राणि शरैश्छिन्नानि भागशः ॥१३॥
शालस्कन्धनिकाशानि क्षत्रियाणां महामृधे ।
नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ॥ १४ ॥
आस्तीर्णा वसुधा भाति शिरोभिश्च सकुण्डलैः ।
रथिनां रथिभिश्चात्र संप्रहारोऽभ्यवर्तत ॥ १५ ॥
सादिभिः सादिनां चापि पदातीनां पदातिभिः ।
उपाशाम्यद्रजो भौमं रुधिरेण प्रसर्पता ॥ १६ ॥
कश्मलं चाविशद्घोरं निर्मर्यादमवर्तत ।
उपाविशन् गरुत्मन्तः शरैर्गाढं प्रवेजिताः ।
अन्तरिक्षे गतिर्येषां दर्शनं च न्यरुध्यत ॥ १७ ॥
ते घ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ।
न शेकुरभिसंरब्धाः शूरान्कर्तुं पराङ्मुखान् ॥ १८॥
शतानीकः शतं हत्वा विशालाक्षश्चतुःशतम् ।
प्रविष्टौ महतीं सेनां त्रिगर्तानां महारथौ ॥ १९ ॥
तौ प्रविष्टौ महासेनां बलवन्तौ मनस्विनौ ।
आर्च्छेतां बाहुसंरब्धौ केशाकेशि रथारथि ॥ २० ॥
लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ रथव्रजम् ।
जग्मतुः सूर्यदत्तश्च मदिराक्षश्च पृष्ठतः ॥ २१ ॥

[ लक्षा० ] ग्रामणीथैः समारूढा इत्यत्र ग्रामणीः ग्रामाधिपतिर्विराटः तत्संबन्धिभिः ॥ ३ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ नील० ] नागभोगनिकाशैः सर्पदेहोपमैः ॥ १४ ॥ कश्मलं मूर्छा आविशन् शूरानिति शेषः । येषां गरुत्मतां पक्षिणाम् अन्तरिक्षे गतिर्दर्शनं च तेऽपि शरैः प्रवेजिताः उद्वेगं प्रापिताः . सन्तः उपाविशन् ध्वजाग्रादौ । बाणपटलेन तेषा गतिर्दर्शनं च न्यरुध्यत निरुद्धम् ॥१७॥ त्रिगर्तानां सेनां प्रविष्टावित्यन्वयः ॥ १९ ॥ प्रविश्य च तामार्च्छेतां मोहितवन्तौ केशाकेशि केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि एवं रथारथि । पाठान्तरे नखानखि नखैर्नखैश्च प्रहृत्येदं युद्धं प्रवृत्तं नखानखि । केशेषु गृहीत्वा योधान् रथेषु गृहीत्वा रथांश्च प्रक्षिपत इति भावः ॥ २० ॥ सूर्यदत्तः शतानीकः ॥ २१ ॥

[ अर्जु० ] कृत्तोत्तरोष्ठं कृत्तं घटितश्मश्रु उत्तरोष्ठं यत्र ॥ १२ ॥ संप्रहारो युद्धम् ॥ १५ ॥ प्रसर्पता गच्छता ॥ १६ ॥ कश्मलं मोहः । उपाविशञ्जलानीति शेषः ॥ १७ ॥ आर्च्छेतां विश्रवन्तौ(?)बहुलमिति शेषः । केशाकेशि नखानखि 'तत्र तेनेदमिति सरूपे' इति समासः॥२०॥

[चतु०] दन्तोत्तरोष्ठं दष्टाधरं कृतकेशं प्रसारि(?दि?धि)तकेशम् ॥१२॥ कश्मलं मोहम् । निर्मर्यादं संकुलम् । उपाक्रोशन् उज्झितवन्तः । प्रवेजिताः पीडिताः अन्तरिक्षे गतिर्येषां पक्षिविमानादीनां तेषां दर्शनमवर्तत । वृत्तमतीतमित्यन्वयः । अरुध्यतेति वा पाठः ॥ १७ ॥ आर्च्छेतां प्राप्तवन्तौ । बहुसंरम्भाद्बाहुयुद्धादनन्तरं तौ शतानीकविशालाक्षौ ॥ २० ॥

[ सर्व० ] नागभोगनिकाशैः सर्पदेहोपमैः ॥ १४ ॥ कश्मलं मूर्च्छा शूरानाविशत् येषां गरुत्मतां पक्षिणाम् अन्तरिक्षे गतिर्दर्शनं च तेऽपि शरैः प्रवेजिताः उद्वेगं प्रापिताः सन्त उपाविशन् ध्वजाग्रादौ । बाणपटलेन तेषां गतिर्दर्शनं च निरुद्धम् ॥ १७ ॥ तामार्छेतां मोहितवन्तौ केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि । नखैश्च नखैश्च प्रहृत्येदं प्रवृत्तं युद्धमित्यादि ॥ २० ॥ सूर्यदत्तः शतानीकः ॥ २१ ॥

[ विरो० ] कृत्तकेशं प्रसारितकेशम् ॥ १२ ॥ येषां पक्ष्यादीनां तेषां दर्शनं शरैररुध्यत । अवर्ततेति पाठे अपिर्निषेधार्थः॥१७॥ आर्च्छेताम्; अच्छैत्ताम् ( दे )॥२०॥

[ विष० ] क्लृप्तं ( कर्तितलोम ) घटितश्मश्रु उत्तरोष्ठं यस्मिंस्तत्क्लृप्तोत्तरोष्ठम् । क्लृप्तकेशं रचितधम्मिल्लम् ॥ १२ ॥ प्रवर्तता; प्रसर्पता ॥ १६ ॥ प्रवेजिताः प्रकम्पिताः । अन्तरिक्षे आकाशे ॥ १७ ॥ आर्च्छेतां गतवन्तौ ॥ २० ॥

११ व. श्लोकमध्ये–अन्तरिक्षे गतिस्तेषां ददृशुश्चापि वध्यताम् । व. समरे जघ्नुर्निजघ्नु । १२ ज. दन्तोत्तरोष्ठं सुनसं; व. कृत्तोत्तरोष्ठं सुनसं । १३ व. ज. अदृश्यन्त च गा° । व. °नि भारत । १४ व. °श्चन्दनाङ्कितैः । १५ क. ग. घ. च. ज. व. वसुधा तत्र । १६ व. ज. प्रवर्तता । १७ व. तेषां तु युध्यतामेव निर्म° । ज. ढं. त्रि. उपाक्रोशंस्तदान्योन्यं; ग. घ. उपादृश्यन्त उन्मत्ताः।व. चाप्यहन्यत; अ. छ. चाप्यरु । १८ व. शेकुरभिसंक्रुद्धाः कांश्चित्कर्तुं। २० ज. °वन्तौ तरस्विनौ; व. °वन्तौ यशस्विनौ । व. बहुसंरम्भं; ज. प्रतिसंरब्धौ । ग. व. ज. ज. °केशिनखानखि ॥ २१ ॥ ज. प्रविष्टौमहाचमूम् ।

१ 'दर्शनं चाप्यवर्तत' इति पाठोऽस्य संमतः । २ बाहुसंरम्भात् इति पाठोऽस्यसंमतः ।

विराटस्तत्र संग्रामे हत्वा पञ्चशतान् रथान् ।
हयानां च शतान्यष्टौ हत्वा पञ्च महारथान् ॥ २२ ॥
चरन्स विविधान्मार्गान् रथेन रथसत्तमः ।
त्रिगर्तानां सुशर्माणमाच्छेद्रुक्मरथं रणे ॥ २३ ॥
तौ व्यवाहरतां तत्र महात्मानौ महाबलौ ।
अन्योन्यमभिगर्जन्तौ गोष्ठेषु वृषभाविव ॥ २४ ॥
ततो राजा त्रिगर्तानां सुशर्मा युद्धदुर्मदः ।
मत्स्यं समीयाद्राजानं द्वैरथेन नरर्षभः ॥ २५ ॥
ततो रथाभ्यां रथिनौ व्यतीयतुरमर्षणौ ।
शरान्व्यसृजतां शीघ्रं तोयधारा घना इव ॥ २६ ॥
अन्योन्यं चापि संरब्धौ विचेरतुरमर्षणौ ।
कृतास्त्रौ निशितैर्बाणैरसिशक्तिगदाभृतौ ॥ २७ ॥
ततो राजा सुशर्माणं विव्याध दशभिः शरैः ।
पञ्चभिः पञ्चभिश्चास्य विव्याध चतुरो हयान् ॥२८॥
तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः ।
पञ्चाशद्भिः शितैर्बाणैर्विव्याध परमास्त्रवित् ॥ २९ ॥
ततः सैन्यं महाराज मत्स्यराजसुशर्मणोः ।
नाभ्यजानत्तदाऽन्योन्यं सैन्येन रजसाऽऽवृतम् ॥३०॥

इति श्रीमहाभारते विराटपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ३३

सुशर्मणा युद्धे बलादुन्मथ्य विराटस्य ग्रहणम् ॥ १ ॥ युधिष्ठिरानुशासनाद्भीमेन सुशर्माणं निर्जित्य विराटपरिमोक्षणं सुशर्मग्रहणं च ॥ २ ॥ युधिष्ठिरेण निर्भर्त्स्य तस्य मोक्षणम् ॥ ३ ॥

**वैशम्पायन उवाच—**

तमसाऽभिप्लुते लोके रजसा चैव भारत ।
अतिष्ठन्वै मुहूर्तं तु व्यूढानीकाः प्रहारिणः ॥ १ ॥
ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः ।
कुर्वाणो विमलां रात्रिं नन्दयन् क्षत्रियान् युधि ॥ २ ॥
ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।
घोररूपं ततस्ते स्म नावैक्षन्त परस्परम् ॥ ३ ॥
ततः सुशर्मा त्रैगर्तः सह भ्रात्रा यवीयसा ।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ४ ॥
ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ ।
गदापाणी सुसंरब्धौ समभ्यद्रवतां रथात् ॥ ५ ॥

---

[ नील० ] तौ विराटसुशर्माणौ ॥ २४ ॥ ततः सैन्यमिति श्लोकः प्राचीनपुस्तकेष्वन्यथा पठ्यते । ततः सेनाः समाहृत्य मत्स्यराजसुशर्मणौ । न जानीतां तदाऽन्योन्यं सैन्येन रजसावृतौ ॥ इति, तत्र सुशर्मणाविति ह्रस्वत्वमार्षम् सेनाः सेनास्थान् शूरान् समाहृत्य अन्योन्यसंघट्टं कारयित्वा सैन्येन सेनोत्थेन ॥ ३० ॥

इति नैलकण्ठीये भारतभावदीपे विराटपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ अर्जु० ] आच्छेत् गतवान् ॥२३॥ व्यवाहरतां व्यवहारं कृतवन्तौ ॥ २४ ॥ व्यतियाय परस्परम भिगम्य ॥ २६ ॥

इति श्रीमहा० मर्जु० विरा० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ चतु० ] मत्स्यराजसुशर्मणावित्यत्र दीर्घाभाव आर्षः । ॥ २४ ॥ ततक्षतुः तनूकृतवन्तौ ॥ २७ ॥ सैन्यमन्योन्यं न जानीतामित्यन्वयः । 'सुशर्मणोः । नाभ्यजानात्' पाठे कर्तृ ॥ ३० ॥

इति श्रीचतु० महाभारतटीकायां वि.प. द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[सर्व०] तौ विराटसुशर्माणौ ॥ २४ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ विरो० ] व्यतियाय परस्पराभिमुखं गत्वा (दे) व्यतीयाताम् ॥ २६ ॥ असिशक्तिगदाभृतौ; ततक्षतुररिन्दमौ (च) ॥ २७ ॥

इति श्रीमहा० विरो० विरा० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[विष०] आच्छेत् गतवान् ॥ २३ ॥ व्यतीयातां परस्पराभिमुखं गतवन्तौ । व्यसृजतां बाणान्क्षिप्तवन्तौ ॥ २६ ॥

इति श्रीमहाभारतविषमपदविवरणे विरा० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ नील० ] तमसा नैशेनान्धकारेण मुहूर्तमाचन्द्रोदयकालं न तु घटीद्वयमात्रम् । कृष्णपक्षस्य सप्तमीमिति सप्तम्यां गोग्रहणस्योक्तत्वात् ॥ १ ॥ प्रस्कन्द्य अवरुह्य ॥ ५ ॥

[अर्जु० ] रथव्रातेन रथसमूहेन ॥ ४ ॥ प्रस्कन्द्य अवतीर्य ॥ ५ ॥

---

२२ ज. हत्वा पञ्चाशतं । २३ व. चेरुर्बहुविधान्मार्गान्रथेषु रथयूथपाः । २४ च. प्रथमार्धस्थाने तौ तु व्यचरतां तत्र महात्मानौमहारथौ; ङ. तौ तु व्यचरतां तत्र मत्स्यराजसुशर्मणौ । २५ व. मत्स्यमीयाद्व्यावृताश्वं । ज. नरर्षभम्; व. नरर्षभ । २६ ग. घ. वं. च. ज. व्यतीयातां समन्ततः । व. ज. घनाविव । २७ व. °स्त्रौ युधिदुर्धर्षौ । २८ निशितैः शरैः । २९ ज. पञ्चाशता शितैं । ३०

इतः प्रभृत्यर्धत्रयं त्रिंशादुत्तरमध्यायसमाप्तिश्च नास्ति ङ. च. ज. पुस्तकेषु । घ. समाहृत्य मत्स्यराजसुशर्मणः । नाभ्यजानंस्तदाऽन्योऽन्यं प्रदोषे रजसा वृते । व. सैन्यं समाहृत्य । ग. व. प्रदोषे रजसावृते । इति द्वात्रिंशोऽध्यायः ॥ ३२ ॥

३ ज. व. ततस्तस्मिन्नापेक्षन्त । ४ ग. घ. च. व. भ्रात्रा सुन्नर्मणा । ५ ग. व. °तां हठात्; घ. रयात् ।

तथैव तैषां तु बलानि तानि
क्रुद्धान्यथान्योन्यमभिद्रवन्ति ।
गदासिखङ्गैश्च परश्वधैश्च
प्रासैश्च तीक्ष्णाग्रसुपीतधारैः ॥ ६ ॥
बलं तु मत्स्यस्य बलेन राजा
सर्वं त्रिगर्ताधिपतिः सुशर्मा ।
प्रमथ्य जित्वा च प्रसह्य मत्स्यं
विराटमोजस्विनमभ्यधावत् ॥ ७ ॥
तौ निहत्य पृथक् धुर्यावुभौ तौ पार्ष्णिसारथी ।
विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ ८ ॥
तमुन्मथ्य सुशर्माऽथ युवतीमिव कामुकः ।
स्यन्दनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ॥ ९ ॥
तस्मिन् गृहीते विरथे विराटे बलवत्तरे ।
प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् ॥ १० ॥
तेषु संत्रस्यमानेषु कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्यभाषन्महाबाहुं भीमसेनमरिन्दमम् ॥ ११ ॥
मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा ।
तं मोचय महाबाहो न गच्छेद्द्विषतां वशम् ॥ १२ ॥
उषिताः स्म सुखं सर्वे सर्वकामैः सुपूजिताः ।
भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः ॥१३॥

**भीमसेन उवाच—**

अहमेनं परित्रास्ये शासनात्तव पार्थिव ।
पश्य मे सुमहत्कर्म युध्यतः सह शत्रुभिः ॥ १४ ॥
स्वबाहुबलमाश्रित्य तिष्ठ त्वं भ्रातृभिः सह ।
एकान्तमाश्रितो राजन् पश्य मेऽद्य पराक्रमम् ॥१५॥
सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः ।
अहमेनमपारुज्य द्रावयिष्यामि शात्रवान् ॥ १६ ॥

**वैशम्पायन उवाच—**

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः ॥ १७ ॥
मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः ।
मा त्वां वृक्षेण कर्माणि कुर्वाणमतिमानुषम् ॥ १८ ॥
जनाः समवबुध्येरन् भीमोऽयमिति भारत ।
अन्यदेवायुधं किंचित् प्रतिपद्यस्व मानुषम् ॥ १९ ॥
चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम् ।
यदेव मानुषं भीम भवेदन्यैरलक्षितम् ॥ २० ॥
तदेवायुधमादाय मोक्षयाशु महीपतिम् ।
यमौ च चक्ररक्षौ ते भवितारौ महाबलौ ॥ २१ ॥
सहिताः समरे तत्र मत्स्यराजं परीप्सतः ।

**वैशम्पायन उवाच—**

एवमुक्तस्तु वेगेन भीमसेनो महाबलः ॥ २२ ॥
गृहीत्वा तु धनुःश्रेष्ठं जवेन सुमहाजवः ।
व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः ॥ २३ ॥
तं भीमो भीमकर्माणं सुशर्माणमथाद्रवत् ।
विराटं स्म वीक्ष्यैनं तिष्ठ तिष्ठेति चाब्रवत् ॥ २४ ॥

---

[सर्व०] मुहूर्तम् आचन्द्रोदयकालम् ॥ १ ॥

[विष०] व्यतिष्ठन्त एवमेव स्थिताः ॥ १ ॥

[नील०] तीक्ष्णानि अग्राणि सुपीताः सुतरां पीताः शोषिताः कृशीकृता अनायासेन शीघ्रं परशरीरप्रवेशक्षमाः धाराश्च येषां ते तीक्ष्णाग्रसुपीतधारास्तैः । तीक्ष्णायसपीतेति पाठेऽपि पीतशब्दस्योक्त एवार्थः ॥ ६ ॥ बलं जित्वा चेति संबन्धः ॥ ७ ॥ अपारुज्य उत्पाट्य ॥ १६ ॥ विराटं समवीक्ष्यैनं हे सम हे साधो इति विराटं वीक्ष्य वाचा दृशा च संभाव्य एनं सुशर्माणं तिष्ठ तिष्ठेति चावददिति संबन्धः। 'सर्वसाधुसमानेषु समं स्यादभिधेयवत्' इति मेदिनी ॥२४॥

[अर्जु०] तमुन्मथ्य सुशर्मा तु रुदतीं वधुकामिव। वधुकां;

युवतीमिव कामुक इति पाठश्चिन्त्यः । यथाव्याख्यानं सर्वत्र पाठो ज्ञेयः ॥ ९ ॥ परामृष्टो बद्धः ॥ १२ ॥ निष्कृतिः प्रत्युपकारः ॥ १३ ॥

[चतु०] पृथगेकैकं धुर्यौ रथवाहिनौ द्वावश्वौ निहत्येत्यन्वयः । पार्ष्णिसारथी पृष्ठगोपौ ॥ ८ ॥ निष्कृतिः परिशुद्धिः ॥ १३ ॥ व्यूहतो प्रयुञ्जानस्य ॥ २२ ॥

[सर्व०] तीक्ष्णानि अग्राणि सुतरां पीताः शोषिताः कृशीकृताः धाराश्च येषाम् ॥ ६ ॥ अपारुज्य उत्पाट्य ॥ १६ ॥ हे सम हे साधो इति विराटं संबोध्य वाचा दृशा च संभाव्य एनं सुशर्माणं तिष्ठतिष्ठेति चावदत् ॥ २४ ॥

[विरो०] युवतीमिव कामुकः; रुदतीं वधुकामिव(दे)॥९॥

---

६ दे. °सुसीतधारैः । ७ व. प्रमथ्य वेगेन विगृह्य । ज. जित्वा तरसा प्रसह्य वि° । ८ व. °वुभौ यौ ९ च वधुकामिव कामुकः; ग. घ. व. रुदतीं वधुकामिव; । ११ व. अभ्यभाषन्महाबाहुं । १२ व. परासूतस्त्रि° । व. तं मोक्षय । १५ व. °बलमासाद्य । १६ ग. एनमेव समासाद्य द्रा ; व. एनं राजन्समासाद्य द्रा° । १७ व. स मत्तमिव । घ. व. ज्येष्ठो ध°; ग. घोरं ध° । १८ व. कुर्वन्तम° । २० व. °शं वा परन्तप । २२ ङ. ग. घ. व. व्यूहतः समरे तात; क. व्यायच्छतस्ते समरे । व. °रे तात । व °रेऽन्योन्यं मत्स्यराजपरीप्सया ।

सुशर्मा चिन्तयामास कालान्तकयमोपमम् ।
तिष्ठ तिष्ठेति भाषन्तं पृष्ठतो रथपुङ्गवः ।
पश्यतां सुमहत्कर्म महद्युद्धमुपस्थितम् ॥ २५ ॥
परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह ।
निमेषान्तरमात्रेण भीमसेनेन ते रथाः ॥ २६ ॥
रथानां च गजानां च वाजिनां च ससादिनाम् ।
सहस्रशतसंघाताः शूराणामुग्रधन्विनाम् ॥ २७ ॥
पातिता भीमसेनेन विराटस्य समीपतः ।
पत्तयो निहतास्तेषां गदां गृह्य महात्मना ॥ २८ ॥
तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ।
चिन्तयामास मनसा किंशेषं हि बलस्य मे ।
अपरो दृश्यते सैन्ये पुरा मग्नो महाबले ॥ २९ ॥
आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ।
सुशर्मा सायकांस्तीक्ष्णान् क्षिपते च पुनःपुनः॥३०॥
ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।
दिव्यमस्त्रं विकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः ॥ ३१ ॥
तान्निवृत्तरथान् दृष्ट्वा पाण्डवान्सा महाचमूः ।
वैराटी परमक्रुद्धा युयुधे परमाद्भुतम् ॥ ३२ ॥
सहस्रमवधीत्तत्र कुन्तीपुत्रो युधिष्ठिरः ।
भीमः सप्त सहस्राणि यमलोकमदर्शयत् ॥ ३३ ॥
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः ।
शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ॥३४॥
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः ।
ततोऽभ्यपतदत्युग्रः सुशर्माणमुदायुधः ॥ ३५ ॥
हत्वा तां महतीं सेनां त्रिगर्तानां महारथः ।
ततो युधिष्ठिरो राजा त्वरमाणो महारथः ॥ ३६ ॥
अभिपत्य सुशर्माणं शरैरभ्याहनद्भृशम् ।
सुशर्माऽपि सुसंरब्धस्त्वरमाणो युधिष्ठिरम् ॥ ३७ ॥
अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरो हयान् ।
ततो राजन्नाशुकारी कुन्तीपुत्रो वृकोदरः ॥ ३८ ॥
समासाद्य सुशर्माणमश्वानस्य व्यपोथयत् ।
पृष्ठगोपांश्च तस्याथ हत्वा परमसायकैः ॥ ३९ ॥
अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत् ।
चक्ररक्षश्च शूरो वै मदिराक्षोऽतिविश्रुतः ॥ ४० ॥
समायाद्विरथं दृष्ट्वा त्रिगर्तं प्राहरत्तदा ।
ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ॥ ४१ ॥
गदां तस्य परामृश्य तमेवाभ्यद्रवद्बली ।
स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥ ४२ ॥
पलायमानं त्रैगर्तं दृष्ट्वा भीमोऽभ्यभाषत ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ॥ ४३ ॥
अनेन वीर्येण कथं गास्त्वं प्रार्थयसे बलात् ।
कथं चानुचरांस्त्यक्त्वा शत्रुमध्ये विषीदसि ॥४४॥
इत्युक्तः स तु पार्थेन सुशर्मा रथयूथपः ।
तिष्ठ तिष्ठेति भीमं स सहसाऽभ्यद्रवद्बली ॥ ४५ ॥
भीमस्तु भीमसंकाशो रथात् प्रस्कन्द्य पाण्डवः ।
प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुशर्मणः ॥ ४६ ॥

[ विष० ] यावश्वौ रथ्यौ धुर्यौ यौ प्रथमौ अपरौ द्वौ पार्ष्णी ॥ ८ ॥ रुदतीं श्वशुरगृहे प्रथमं नीयमानां बालवधूमिव ॥९॥ परामृष्टो बद्धः ॥१२॥ निष्कृतिः अनृणत्वम् । 'न तं पश्यामि लोकेषु कृते प्रतिकरोति यः । सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते' ॥ १३ ॥ एनं 'समीपवर्ति चैतदो रूपम्' निकटस्थं वृक्षं समासाद्य भङ्क्त्वा ॥ १६ ॥

[ नील० ] रथपुङ्गवः तिष्ठ तिष्ठेति भाषमाणः महत्कर्माऽन्योन्ययुद्धं पश्यतां, कर्मव्यतिहारे तङ् , अयं मां महत्कर्म कुर्वाणं पश्यतु अहं चैनं द्रक्ष्ये इत्यर्थः ॥ २५ ॥ रथाः संगता इति शेषः ॥ २६ ॥ चिन्तयामासेति सुशर्मा बलस्य सैन्यस्य किंशेषं कुत्सितं वधं चिन्तयामास 'शेषः संकर्षणे वधे' इति मेदिनी । तत्र हेतुः हि यस्मात् मे मम अपरो भ्राता महाबले सैन्ये पुरा मग्नो दृश्यते । भ्रातुः संकटं दृष्ट्वा सैन्यनाशं चिन्तयामासेत्यर्थः ॥ २९ ॥ धनुषा शोभमान इति शेषः ॥ ३० ॥ ते सर्वे मत्स्याः ॥ ३१ ॥ अत्युग्रो युधिष्ठिरः वाक्यशेषात् ॥ ३५ ॥ त्रैगर्तं त्रिगर्ताधिपतिम् ॥ ४३ ॥ भीमसंकाशः भीमोपमः 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवदनुपम इत्यर्थः ॥ ४६ ॥

[ चतु० ] प्राहिणोद्यमलोकमित्यनुषज्यते ॥ ३४ ॥ स भयाद्विरथं दृष्ट्वा त्रिगर्तं प्रजहार ह । इति वा पाठः ॥४१॥

२६ दे. ते नराः । ३१ व. समस्तास्ते राजन् । ३२ व. दृष्ट्वा त्रिगर्तान् । ३३ ज. सहस्राण्यवधीत्तत्र; व. सहस्रं व्यवधीत्तत्र । गं. घ. व. सप्तशतान्योधान् । ३५ व. ततोऽभ्येत्य तमुग्रं वै; व. ततस्त्वभ्यपतदुग्रं; ज. ततस्तेऽभ्यपतञ्छीघ्रं । व. ज. सुशर्माणमुदाधम् । ३६ व. ज. भित्त्वा तां । ३७ व. ज. अभिद्रुत्य सु° । ३८ क. अविध्यन्दशभिर्बा° । ३९ व. पृष्ठगोपौ च । ४० व. चक्ररथोऽथ शूरस्य शोणाश्वो नाम विश्रुतः । ४१ व. स तदा द्विरथं । व. °र्तं प्राजहत्तदा; व. प्रजगामह । ४२ व. तमेवाजघ्निवान्बली । व. तरुणाकृतिः । ४३ व. प्राह भीमो महाबलः । ४४ घ. व. °से नृप । ज. शत्रुमध्ये पलायसे । व. न सीदसि । ४५ व. भीमस्य स० । ४६ ग. रथादाप्लुत्य कुण्डली; घ. व. प्रस्कन्द्य कुण्डली । घ. °प्सुस्ततो रणात् ।

तं भीमसेनो धावन्तमभ्यधावत वीर्यवान् ।
त्रिगर्तराजमादातुं सिंहः क्षुद्रमृगं यथा ॥ ४७ ॥
अभिद्रुत्य सुशर्माणं केशपक्षे परामृशत् ।
समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ॥ ४८ ॥
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ।
तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ४९ ॥
तस्मिन् गृहीते विरथे त्रिगर्तानां महारथे ।
अभज्यत बलं सर्वं त्रैगर्तं तद्भयातुरम् ॥ ५० ॥
निवर्त्य गास्ततः सर्वाः पाण्डुपुत्रा महारथाः ।
अवजित्य सुशर्माणं धनं चादाय सर्वशः ॥ ५१ ॥
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।
विराटस्य महात्मानः परिक्लेशविनाशनाः ॥ ५२ ॥
स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ॥ ५३ ॥
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ॥ ५४ ॥
गले गृहीत्वा राजानमानीय विवशं वशम् ।
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ॥ ५५ ॥
रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् ।
अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ ५६ ॥
दर्शयामास भीमस्तु सुशर्माणं नराधिपम् ।
प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ॥ ५७ ॥
तं राजा प्राहस द्दृष्ट्वा मुच्यतां वै नराधमः ।
एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ॥ ५८ ॥

---

[ सर्व० ] किंशेषं कुत्सितं वचम् ॥ २९ ॥

[ विष० ] रथोपस्थाद्रथमध्यात् ॥४०॥ त्रिगर्तः प्राजहात्तदेति । त्रिगर्तः सुशर्मा रथं त्यक्त्वा पलायाञ्चक्रे ॥ ४१ ॥ वृद्धोऽपि तरुणो हर्षात् ॥ ४२ ॥ राजपुत्रेति । हे राजपुत्र भूपतिसुत । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' ॥ ४३ ॥ न सीदसि न दूयसे ॥ ४४ ॥ भीमस्य ब्रुवत इति शेषः ॥ ४५ ॥

[ लक्षा० ] भीमस्तु भीमसंकाश इत्यत्र भीमसंकाशः 'व्योमकेशो भवो भीमः' इत्यमरः । रुद्रसदृशः ॥ ४६ ॥

[ नील० ] केशपक्षे केशकलापे । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इति । 'पक्षो मासार्धके' इत्युपक्रम्य 'केशादेः परतो वृन्द' इति मेदिनी । अत्रोक्तं नीतिशास्त्रे—वामपाणिकचोत्पीडा (१) भूमौ निष्पेषणं बलात्(२) ॥ मूर्ध्नि पादप्रहरणं(३) जानुनोदरमर्दनम्(४) ॥ भाल्लूराकारया मुष्ट्या कपोले दृढताडनम् (५)॥ कफोणिपातोऽप्यसकृत् (६) सर्वतस्तलताडनम् (७) ॥ तालेन युद्धे भ्रमणं मारणं ( ८ ) स्मृतमष्टधा ॥ चतुर्भिः क्षत्रियं हन्यात्पञ्चभिः क्षत्रियाधमम् ॥ षड्भिर्वैश्यं सप्तभिस्तु शूद्रं संकरमष्टभिः' इति । एतेषां मध्ये तं केशग्रहादिभिः पञ्चभिर्मारयताऽस्य क्षत्रियाधमत्वं दर्शितम् ॥ ४८–४९ ॥ घृणी दयालुः ॥५४॥ विवशम् अचित्तं वशं पराधीनम् ॥ ५५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प.
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ अर्जु० ] केशपक्षे परामृशत् केशसमूहे जग्राह ॥ ४८ ॥ अरत्निना निष्कनिष्ठेन मुष्टिना ॥ ४९ ॥ राजा युधिष्ठिरः । घृणी दयावान् ॥ ५४ ॥

[ चतु० ] अरत्निना प्रसृताङ्गुलिना करेण ॥ ४९ ॥ समक्षमन्योन्याभिमुखम् । प्राह भीमो महाबाहुरिदं वचनमर्थवदिति पाठे निवर्त्य गा इत्यादौ निवृत्ता इत्यध्याहार्यम् । ॥ ५३ ॥ मौलौ केशपाशे ॥ ५५ ॥

[ सर्व० ] केशपक्षे केशकलापे ॥ ४८ ॥ अरत्निः निष्कनिष्ठो मुष्टिः ॥ ४९ ॥ घृणी दयालुः ॥ ५४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ विरो० ] अस्य विराटस्य । प्राह भीमो महाबाहुरिदं वचनमर्थवदिति पाठे निवर्त्य गा इत्यत्र निवृत्ता इति शेषः । स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ( च )॥५३॥ गले २ मौलौ ( च )॥ ५५ ॥ अभ्यगच्छत् आभिमुख्येनागच्छत् । अभ्येत्य दर्शयामास ॥ ५६–५७ ॥

[ विष० ] आदत्त जग्राह ॥ ४७ ॥ यद्राजा सततं घृणी इति युधिष्ठिरं कटाक्षीकृत्य विराटकङ्कयोः साधारणं संबोधनम् ॥ ५४ ॥ मुच्यतां वै नराधिपः । राजा हि अवध्य इति धर्मः ॥ ५८ ॥

[ लक्षा० ] ह्रीनिषेधा यतव्रता इत्यत्र ह्रीनिषेधाः परसेनाया ह्रियं लज्जां निषेधन्तीति तथोक्ताः पाण्डवाः ॥ ५२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे
वि. प. त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

४७ व. °त वेगवान् । व. °मादत्त सिंहः । ४९ व. ददौ पृष्ठे जघ्ने चैवमरत्निना । व. जघ्ने चैव च मन्युना । व. प्रहारबलपीडितः । ५२ व. ह्रीनिषेधा जितव्रताः । ५३ व. सर्वे अथ । ५५ ङ. च. मौलौ गृ° । व. त्रैगर्तमानीय विवशं वशी; ज. °शं भृशम् । ५७ ग. घ. व. ज. भीमस्तामवस्थां सुशर्मणः । ५८ व. वै नराधिपः । ततो भीमोऽब्रवीन्मूढं त्रिगर्तानां महारथम् ।

**भीम उवाच—**

जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ।
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च५९॥
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ।
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ॥ ६० ॥

**युधिष्ठिर उवाच—**

मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् ।
दासभावं गतो ह्येष विराटस्य महीपतेः ।
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः कदाचन६१॥

इति श्रीमहाभारते विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ३४

तां रात्रिं संग्रामभूमावेव निवसता विराटेन पाण्डवानां वित्तसंमाननादिना पूजनम् ॥ १ ॥ पाण्डवैस्तत्प्रतिनन्दनम् ॥ २ ॥ युधिष्ठिरवचनान्मत्स्येन प्रेरितैर्दूतैः सूर्योदये विराटनगरे राज्ञो जयघोषणा ।

**वैशम्पायन उवाच—**

एवमुक्ते तु सव्रीडः सुशर्माऽऽसीदधोमुखः ।
स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ॥१॥
विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः ।
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ॥
संग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥२॥
ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।
अर्चयामास वित्तेन मानेन च महारथान् ॥ ३ ॥

**विराट उवाच—**

यथैव मम रत्नानि युष्माकं तानि वै तथा ।
कार्यं कुरुत व सर्वे यथाकामं यथासुखम् ॥ ४ ॥
ददाम्यलंकृताः कन्या वसूनि विविधानि च ॥
मनसश्चाप्यभिप्रेतं युद्धे शत्रुनिबर्हणाः ॥ ५ ॥
युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह ॥
तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ६ ॥

**वैशम्पायन उवाच—**

तथेतिवादिनं मत्स्यं कौरवेयाः पृथक् पृथक् ।
ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ॥ ७ ॥
प्रतिनन्दाम ते वाक्यं सर्वं चैव विशाम्पते ।
एतेनैव प्रतीताः स्म यत्त्वं मुक्तोऽद्य शत्रुभिः ॥ ८ ॥
ततोऽब्रवीत्प्रीतमना मत्स्यराजो युधिष्ठिरम् ।
पुनरेव महाबाहुर्विराटो राजसत्तमः ॥ ९ ॥
एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान्॥१०॥
मनसश्चाप्यभिप्रेतं यथेष्टं भुवि दुर्लभम् ।
तत्तेऽहं संप्रदास्यामि सर्वमर्हति नो भवान् ॥ ११॥
रत्नानि गाः सुवर्णं च मणिमुक्तमथापि च ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोस्तु ते ॥ १२ ॥

---

[ अर्जु० ] संसत्सु च सभासु च संसद्गोष्ठी सभा राज्ञाम् । अथवा सभासु अर्थैक्ये शब्दभेदेऽपि द्विवचनमार्षम् ॥ ५९ ॥ सप्रणयं सस्नेहम् ॥ ६० ॥ प्रमाणा इति लिङ्गव्यत्यय आर्षः ॥ ६१ ॥

इति श्रीमहा० अर्जु० विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[चतु०] सभासु सभ्यजनेषु ॥ ५९ ॥ प्रमाणा इत्यार्षः प्रयोगः । प्रमाणमिति वा पाठः ॥ ६१ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[विरो०] सम्यक् सन्तो यासु संसत्सु ॥ ५९ ॥ प्रमाणं; प्रमाणाः (च) ॥ ६१ ॥

इति श्रीमहा० विरो० विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[विष०] संसत्सु सतां गोष्ठीषु सभासु च राजसमाजेषु ॥ ५९ ॥

इति श्रीमहा० विषम० विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[नील०] प्रतीताः हृष्टाः ॥ ८ ॥ नः अस्मत्संबन्धि सर्वं भवान् ग्रहीतुमर्हति ॥ ११ ॥

[अर्जु०] प्रतीता विस्रब्धाः तुष्टा वा ॥ ८ ॥ वैयाघ्रपद्येति संबुद्धिः केवलं गोत्रेण ॥ १२ ॥

[चतु०] मानेन संमानेन ॥ ३ ॥

[सर्व०] प्रतीता हृष्टाः ॥ ८ ॥

[विष०] मम रत्नानि गजाश्वादीनि ॥ ४ ॥ कौरवेयाः कुरुराज्ञो वंशसंभवाः ॥ ७ ॥ वैयाघ्रपद्य विप्रेन्द्रेति गोत्रगौरवसंबोधनम् ॥ १२ ॥

---

६१ ग. मुञ्चेममधमाचारं । ज. प्रमाणा यदि । ग. घ. व. अत्राध्यायसमाप्तिर्नास्ति । ॥ इति त्रयस्त्रिंशोऽध्यायः ॥
४ घ. व. पूजयामि यथान्यायं यथा° । ५ व. ज. युद्धः शत्रुनिबर्हणम्; क. ग. घ. च. वि. यत्ते शत्रुनिबर्हणाः । ८ व. ते वाचं सर्वथैव च. ज. वाक्यं मनोज्ञं मत्स्य भाषसे । ग. नैव प्रभूताः । ११ ग. घ. च. ङं °प्रेतमञ्जसा । १२ व. मणिमुक्तावसूनि च ।

त्वत्कृते ह्यद्य पश्यामि राज्यं संतानमेव च ।
यतश्च जातसंरम्भो न च शत्रुवशं गतः ॥ १३ ॥
ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यभाषत ।
प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे ॥१४॥
आनृशंस्यपरो नित्यं सुसुखी सततं भव ।
गच्छन्तु दूतास्त्वरितं नगरं तव पार्थिव ॥ १५ ॥
सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ।
ततस्तद्वचनान्मत्स्यो दूतान् राजा समादिशत् ॥१६॥
आचक्षध्वं पुरं गत्वा संग्रामे विजयं मम ।
कुमार्यः समलंकृत्य पर्यागच्छन्तु मे पुरात् ॥ १७ ॥
वादित्राणि च सर्वाणि गणिकाश्च स्वलंकृताः ।
एतां चाज्ञां ततः श्रुत्वा राज्ञा मत्स्येन नोदिताः ।
तामाज्ञां शिरसा कृत्वा प्रस्थिता हृष्टमानसाः ॥१८॥
ते गत्वा त्वत्र तां रात्रिमथ सूर्योदयं प्रति ।
विराटस्य पुराभ्यासे दूता जयमघोषयन् ॥ १९ ॥

इति श्रीमहाभारते विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ३५

दुर्योधनेन भीष्मादिभिः सह विराटनगरमुपेत्य गोपान् विद्राव्य गवां ग्रहणम् ॥ १ ॥ गोपाध्यक्षेण भयात्क्रोशता राजसदनं प्रविश्य भूमिंजयाख्यस्य विराटसुतस्य कौरवैर्गवाकर्षणाख्यानपूर्वक युद्धाय प्रोत्साहनम् ॥ २ ॥

**वैशम्पायन उवाच—**

याते त्रिगर्तान्मत्स्ये तु पशूंस्तान्वै परीप्सति ।
दुर्योधनः सहामात्यो विराटमुपयादथ ॥ १ ॥
भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभो ॥ २ ॥
विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।
दुर्मुखो दुःशलश्चैव ये चैवान्ये महारथाः ॥ ३ ॥
एते मत्स्यानुपागम्य विराटस्य महीपतेः ।
घोषान्विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ४ ॥

[ नील० ] यतो निगृहीतः जातसंरम्भो जातभयोऽपि त्वद्बलान्न च शत्रुवशं गतोऽस्मि ॥ १३ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ अर्जु० ] केवलं रात्रिं रात्रावेव दिनापेक्षामकुर्वन्तः ॥ १९ ॥ कृपया क्षणमात्रम् हे धीराः मानित्वाधायमात्मानो व्याख्या (?) तथापि सफलश्रमः ॥ दक्षिणगोग्रहः ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि. प. चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ चतु० ] संरम्भोऽवस्कन्दः ॥ १३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ सर्व० ] संरम्भः भयम् ॥ १३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ विरो० ] केवलं मुख्यायाम् । रात्रिं रात्रौ ॥ १९ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[विष०] स सुशर्मा वशं गतः दासभावं गतः ॥ १३ ॥

प्रतिनन्दामेति प्रतीता विश्वस्ताः स्तुमः ॥ १४ ॥ सुसुखी प्रियवादी ॥ १५ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[लक्षा०] यतश्च जात इत्यत्र यतः सुशर्मणः सकाशात् । ॥ १३ ॥ नान्दीमघोषयन्नित्यत्र नान्दीं संतोषसंबन्धिनीं वार्ताम् ॥ १९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ नील० ] परीप्सति लिप्सति यतः अथ अतः विराटं विराटदेशं उपयात् उपायात् ॥ १ ॥

[ अर्जु० ] मात्स्ये मत्स्यदेशाधिपे । परीप्सति प्रत्यानेतुमिच्छति । उपयात् उपायादित्यर्थः ॥ १ ॥ मत्स्यान् मत्स्यदेशम् । घोषान् गोपान् । अञ्जसा अव्यवधानेन ॥४॥

[ चतु० ] घोषान्गोपालान् । अञ्जसा शीघ्रम् ॥ ४ ॥

[ विष० ] मत्स्ये विराटे तांस्तान् त्रिगर्तगृहीतान् पशून् प्राप्तुमिच्छति सति नानावर्णत्वात्तांस्तानिति वीप्सा ॥ १ ॥ अञ्जसा छद्मना । विराटे ससैन्ये त्रिगर्तान्गते सति इति छद्म । तरसा बलेन ॥ ४ ॥

---

१३ क. ग. घ. च. राज्यमात्मानमेव । व. स च शत्रुवशंगतः । ज. स च शत्रुवशं । १४ व. प्रतिनन्दाम ते । १६ व. प्रियमुख्यानां १७ व. कुमाराः । घ. समागच्छन्तु मे पुरम् । १८ व. एतद्वाक्यं ततः ... मत्स्येन नोदितम् । १९। ज. केवलां रात्रिं । इति चतुस्त्रिंशोऽध्यायः ॥

१ व. ज. त्रिगर्तै मत्स्ये । व. पशूंस्तांस्तांस्तान्यै । व. मुपजग्मिवान् । २ क. दुःशासनः शलः । ४ ज. जह्रुरञ्जसा ।

षष्टिं गवां सहस्राणि कुरवः कालयन्ति च ।
महता रथवंशेन परिवार्य समन्ततः ॥ ५ ॥
गोपालानां तु घोषस्य हन्यतां तैर्महारथैः ।
आरावः सुमहानासीत्संप्रहारे भयङ्करे ॥ ६ ॥
गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदार्तवत् ॥ ७ ॥
स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः ।
अवतीर्य रथात्तूर्णमाख्यातुं प्रविवेश ह ॥ ८ ॥
दृष्ट्वा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनम् ।
तस्मै तत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९ ॥
षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते ।
तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ १० ॥
राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि च स्वयम् ।
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥११॥
त्वया परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ १२ ॥
इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः ।
तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ॥१३॥
आवर्तय कुरून् जित्वा पशून् पशुमतां वर ।
निर्दहैषामनीकानि भीमेन शरतेजसा ॥ १४ ॥
धनुश्च्युतै रुक्मपुङ्खैः शरैः सन्नतपर्वभिः ।
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥१५ ॥
पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।
शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ॥ १६ ॥

---

[नील०] कालयन्ति नयन्ति रथवंशेन रथसमूहेन ॥ ५ ॥ घोषस्य घोषस्थानां गवां गोपालानां च हन्यतां हन्यमानानामारावः शब्दो महानभूत् ॥ ६ ॥ भूमिंजयमित्युत्तरस्यैव नामान्तरम् ॥ ९ ॥ शून्यपालं राज्ञोऽसन्निधाने पालकम् ॥ ११ ॥ यूथपो गन्धहस्ती ॥ १५ ॥ पाशोपधानामिति पाशौ मौर्वीप्रान्तद्वयगतौ तावेव उपधाने वीणायां तन्त्रीसंधानार्थं कीलविशेषौ यस्यां सा पाशोपधाना ताम् । ज्यातन्त्री मौर्व्येव तन्त्री कार्ष्णायसतन्तवो यस्या तां चापो धनुर्यष्टिः सैव अलाबुसहितो दण्डो यस्यास्ताम् । महास्वनामित्युभयत्र तुल्यम् । शरास्ततो निःसरन्तस्त एव वर्णाः शब्दवत्त्वसामान्यात् स्वरस्पर्शादयो यस्याम् । धनुःशब्दोऽत्र सज्यचापवाची । तामेव वीणां शत्रूणां मध्ये प्रवादय ॥ १६ ॥

[अर्जु०] रथवंशेन रथसमूहेन ॥ ५ ॥ हन्यतां हन्यमानानाम् ॥ ६ ॥ भूमिंजयमुत्तरम् ॥ ९ ॥ पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् । शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय । उत्तरं गवाध्यक्ष आह—हे उत्तर शत्रुमध्ये प्रवादय प्रकर्षेण वादय वाणस्य तदेव प्रकृष्टत्वं यत् शत्रुवधार्थं शरक्षेपानुत्पाद्यत् (?)। धनुषो वीणासाम्यमाह—पाशोपधानामिति । पाशो ज्याबन्धः गुणोपरिस्थिताटनीवेष्टनरज्जुरिति यावत् । स उपधानं वीणादण्डबन्धनम् गेण्डुकरूपं वा यस्यां सा ताम् । ‘ उपधानं वेशे गेण्डौ (?) इति मेदिनी । ज्यातन्त्रीमिति ज्या गुणः सैव तन्त्री वीणागुण इव यस्याम् ‘तन्त्री वीणागुणेऽपि च’ इति मेदिनी । चापदण्डामिति । अयमभिप्रायः धनुषश्चापशब्दोऽयं वंशस्वरूपमात्रे वर्तते तेन धनुर्गुणविशिष्टमवयविरूपं वीणेति वाच्यम् । चापस्तु वंशस्वरूपो दण्ड इव यस्या धनुर्वीणायाः स तथा इति भेदनीयम् । तर्हि किमयं वर्णयतीत्याह—शरवर्णा शरा नाराचादयः एव वर्णनीयाः शब्दा यस्याः स तथा । वर्ण्यन्ते इति वर्णाः कर्मघञ् ॥ शराक्षरा इति वर्णा इति वा ॥ १६ ॥

[चतु०] हन्यतां हन्यमानानाम् ॥ ६ ॥ इष्वस्त्रे धनुर्वेदे ॥ १३ ॥ पाशो ज्याबद्धशर एव उपधानमुपनाहो यस्याः । शरा एव वर्णा अक्षराणि यस्यां सा ॥ १६ ॥

[सर्व०] कालयन्ति नयन्ति रथवंशः रथसमूहः ॥ ५ ॥ भूमिंजयम् उत्तरम् ॥ ९ ॥ पाशौ मौर्वीप्रान्तद्वयगतौ तावेवोपधाने वीणायां तन्त्रीसंधानार्थं कीलविशेषौ यस्याम् । ज्या मौर्व्येव तन्त्रीतन्तवो यस्याः । चापो धनुर्यष्टिः सैव दण्डो यस्याः । ततो निःसरन्तः शरा एव वर्णा अक्षराणि ॥ १६ ॥

[विरा०] कालयन्ति अकालयन् । ते प्रसिद्धाः ॥१०॥ पाशः वेष्टनशोभार्थं स्वर्णादिपाशः स एव उपधानमुपनाहो यस्याम् । वर्णः स्वरः ॥ १६ ॥

[विष०] पर्यकालयन् अग्रे कृत्वाऽगच्छन् । रथवंशेन रथसमूहेन । ‘वंशोऽन्वयसमूहयोः’। परिगृह्य परि समन्ताद्वेष्टयित्वा ॥ ५ ॥ हन्यतां हन्यमानानाम् ॥ ६ ॥ परिक्रोशन् कौरवा गोधनं हरन्तीति बुम्बां पातयन् । क्रुश आह्वाने धावत धावतेति ॥ ७ ॥ पशुकर्षणं गोहरणम् ॥ ९ ॥ कालयन्त्यग्रे कृत्वा गच्छन्ति ॥ १० ॥ शून्यपालमिति शून्य वीररहितं न-

---

५ व. कौरवाः पर्यकालयन् । व. ज. रथवेगेन परिगृह्य । ६ व. गोपानामनुघोषं च हन्यन्तां । ७ व. गवाध्यक्षस्तु संत्रस्तो । ९ व. °माचष्टे । १० ज. राष्ट्रवर्धनम् । १२ ज. त्वां च परि° । व. मम सुरूपश्च । १३ व. धीरश्च मे । १४ व. मतिमतां वर । ज. शरवह्निना । १५ घ. व. °मिव केसरी । १६ व. कोणदण्डां ।

श्वेता रजतसंकाशा रथे युज्यन्तु ते हयाः ।
ध्वजं च सिंहं सौवर्णमुच्छ्रयन्तु तव प्रभो ॥ १७ ॥
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।
छादयन्तु शराः सूर्यं राज्ञां मार्गनिरोधकाः ॥ १८ ॥
रणे जित्वा कुरून्सर्वान्वज्रपाणिरिवासुरान् ।
यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ॥ १९ ॥
त्वं हि राष्ट्रस्य परमा गतिर्मत्स्यपतेः सुतः ।
यथा हि पाण्डुपुत्राणामर्जुनो जयतां वरः ॥ २० ॥
एवमेव गतिर्नूनं भवान्विषयवासिनाम् ।
गतिमन्तो वयं त्वद्य सर्वे विषयवासिनः ॥ २१ ॥

वैशम्पायन उवाच—

स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करम् ।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ २२ ॥

इति श्रीमहाभारते विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ३६

कुशलसारथिलाभे कुरूंस्तथा वित्रासयिष्ये यथा ते पार्थमेव संप्राप्तं मन्येरन्निति ब्रुवते उत्तराय सैरन्ध्र्या बृहन्नलायाः सारथ्ये कौशलाभिधानम् ॥ १ ॥ उत्तरेण तदानयनायोत्तराप्रेषणम् ॥ २ ॥

उत्तर उवाच—

अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ १ ॥
तं त्वहं नावगच्छामि यो मे यन्ता भवेन्नरः ।
पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः ॥ २ ॥
अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः ।
यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ॥ ३ ॥
स लभेयं यदा त्वन्यं हययानविदं नरम् ।
त्वरावानद्य यात्वाऽहं समुच्छ्रितमहाध्वजम् ॥ ४ ॥

---

गरमेक एव पालयतीति शून्यपालः अतिसमर्थत्वात् । एकतः ससैन्यो विराटः । अपरतश्चैको भवानिति प्रशंसा ॥ ११ ॥ पाशोपधानां पाशः शरासनस्य कोटिद्वये उपधीयते सा पाशोधाना । वीणायाः पाशे उपधानं भवति । ज्या प्रत्यञ्चा । तन्त्री तन्तिः । चापदण्ड एव दण्डो यस्यां सा । महास्वना घोङ्कारलक्षणा श्रीरागादयो यस्याम् । शरा एव कोणो वादनदण्डः स्यात् । वीणाऽपि शरकाण्डेन वाद्यते एवंविधां धनुर्वीणां वादयेति युद्धे लीलां दर्शयेति ॥ १६ ॥

[ लक्षा० ] हन्यतां वै महारथैरित्यत्र हन्यतां हन्यमानानाम् ॥ ६ ॥ दृष्ट्वा भूमिंजयं नामेत्यत्र भूमिंजय इत्यप्युत्तरकुमारस्य नाम ॥ ९ ॥ प्राप्य दण्डसमस्वरामित्यत्र दण्डसमस्वराम् अन्तः दण्डाहतघण्टासमस्वराम् ॥ १६ ॥

[ नील० ] युज्यन्तु युज्यन्ताम् । सिंहं सिंहाकारं सौवर्णम् ॥ १७ ॥ हस्तवता दृढहस्तेन प्रशंसायां मतुप् ॥ १८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ अर्जु० ] युज्यन्तु युज्यन्तां तिङां तिङो भवन्तीति परस्मैपदम् । विभो इति संबुद्धौ ॥ १७ ॥

इति श्रीमहा० मर्जु० विरा० पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ चतु० ] हस्तवता हस्तेनेति शेषः ॥ १८ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ सर्व० ] सिंहाकारं सौवर्णम् ॥ १७ ॥ हस्तवता दृढहस्तेन ॥ १८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ विरो० ] तव प्रभो २, तवाभिभोः ( दे, सू ) ॥ १७ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ विष० ] हस्तवता शीघ्रवेधिना ॥ १८ ॥ अन्तःपुरे अन्तःपुरस्त्रीभिः प्रशस्यमानः यद्वा स्वयं श्लाघमानः ॥ २२ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ लक्षा० ] ध्वजं च सिंहसौवर्णमित्यत्र सौवर्णः सिंहो यस्य स सिंहसौवर्णः ॥ १७ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ नील० ] हययानविदम् अश्वगतिज्ञम् ॥ ४ ॥

[ विरो० ] सारथिः सहायः ॥ १ ॥

[ विष० ] अन्ततः अन्ते न्यूनं कतिपयदिवसहीनम् ॥ ३ ॥ हययानविदम् अश्वानां यानकुशलम् ॥ ४ ॥

---

१७ व. तवाभिभोः । १८ व. रक्तपुङ्खाः; क. ग. घ. च. व. राज्ञामायुनिरोधिनः ( विरोधिनः ) २१ व. भवन्त्वद्य । २२ व. श्लाघ्यमानः । इति पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

२ व. ज. नाधिगच्छामि । ३ ज. न्यूनं वा मासमात्रतः । ४ व. यदि लभ्यं ।

विगाह्य तत्परानीकं गजवाजिरथाकुलम् ।
शस्त्रप्रतापनिर्वीर्यान् कुरून् जित्वाऽऽनये पशून् ॥५॥
दुर्योधनं शान्तनवं कर्णं वैकर्तनं कृपम् ।
द्रोणं च सह पुत्रेण महेष्वासान्समागतान् ॥ ६ ॥
वित्रासयित्वा संग्रामे दानवानिव वज्रभृत् ।
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ७ ॥
शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनम् ।
किं तु शक्यं मया कर्तुं यदहं तत्र नाभवम् ॥ ८ ॥
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।
किं नु पार्थोऽर्जुनः साक्षादयमस्मान् प्रबाधते ॥९॥

वैशम्पायन उवाच—

श्रुत्वा तदर्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः ।
अतीतसमये काले प्रियां भार्यामनिन्दिताम् ॥१०॥
द्रुपदस्य सुतां तन्वीं पाञ्चालीं पावकात्मजाम् ।
सत्यार्जवगुणोपेतां भर्तुः प्रियहिते रताम् ॥ ११ ॥
उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ।
उत्तरं ब्रूहि कल्याणि क्षिप्रं मद्वचनादिदम् ॥ १२ ॥
अयं वै पाण्डवस्यासीत्सारथिः संमतो दृढः ।
महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ॥१३॥

वैशम्पायन उवाच—

तस्य तद्वचनं स्त्रीषु भाषतश्च पुनः पुनः ।
न साऽमर्षत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥१४॥
अथैनमुपसंगम्य स्त्रीमध्यात्सा तपस्विनी ।
व्रीडमानेव शनकैरिदं वचनमब्रवीत् ॥ १५ ॥
योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः ।
बृहन्नलेति विख्यातः पार्थस्यासीत्स सारथिः ॥१६॥
धनुष्यनवरश्चासीत्तस्य शिष्यो महात्मनः ।
दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान्प्रति ॥ १७ ॥
यदा तत्पावको दावमदहत्खाण्डवं महत् ।
अर्जुनस्य तदाऽनेन संगृहीता हयोत्तमाः ॥ १८ ॥
तेन सारथिना पार्थः सर्वभूतानि सर्वशः ।
अजयत्खाण्डवप्रस्थे नहि यन्ताऽस्ति तादृशः ॥१९॥

उत्तर उवाच—

सैरन्ध्रि जानासि तथा युवानं
नपुंसको नैव भवेद्यथाऽसौ ।
अहं न शक्नोमि बृहन्नलां शुभे
वक्तुं स्वयं यच्छ हयान्ममेति वै ॥ २० ॥

द्रौपद्युवाच—

येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्याः स वीर वचनं करिष्यति न संशयः ॥२१॥
यदि वै सारथिः स स्यात्कुरून्सर्वान्न संशयः ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ २२ ॥

वैशम्पायन उवाच—

एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ।
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ॥ २३ ॥
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम् ।
यत्रास्ते स महाबाहुश्छन्नः सत्रेण पाण्डवः ॥ २४ ॥

इति श्रीमहाभारते विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

[ नील० ] नर्तनागृहम् 'ण्यासश्रन्थो युच्' इति ण्यन्ताद्युचि टाबन्तम् । सत्रेण छद्मना ॥ २४ ॥
इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ अर्जु० ] यवीयसी कनीयसी ॥ २१ ॥ सत्रेण छद्मनेति सत्रं नपुंसकवेषेणाच्छादित इत्यर्थः ॥ २४ ॥
इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[चतु०] अनवरोऽहीनः ॥ १७ ॥
इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[सर्व०] बीभत्सुः अर्जुनः ॥ १४ ॥ दावः वनम् ॥ १८ ॥ सत्रं कपटम् ॥ २४ ॥
इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ विरो० ] शिष्यः अनुशास्यः स्वस्य स्वयमनुशास्य एव। तत्काले तस्य पुंस्त्वात्पुंलिङ्गम् ॥ १७ ॥ संगृहीता इन्द्राद्रक्षिताः ॥ १८ ॥
इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ विष० ] तत्र नाभवं तत्र गोधनसमीपे नाऽभवम्

---

५ ग. शत्रून्प्रताप्य । ६ व. °ष्वासान्महारथान् । ७ ग. विनाशयित्वा; ज. °त्वा समरे । ज. °निव वृत्रहा; घ. चक्रभृत् । १०–१३ श्लोकाः च. ज डं. वि. व. न सन्ति । १४ व. नामर्षयत । १५ व. सा यशस्विनी ।

१८ दे. म खाण्डवं वनम् । २४ व. अगमन्नर्तनालयम् । इति षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ३७

उत्तरया भ्रातुः सारथ्यकरणे प्रार्थितस्यार्जुनस्योत्तरसमीपं गमनम् ॥ १ ॥ उत्तरेण सैरन्ध्रीप्रत्ययेन तस्य सारथ्ये आत्मनोऽकौशलं ब्रुवतोऽपि तत्र नियोजनम् ॥ २ ॥ ततोऽर्जुनेन कवचादिधारणे व्यामोहं दर्शयता किंचिन्नर्माचरणम् ॥ ३ ॥ उत्तरेण स्वयं तं संनह्य कुरून्प्रत्यभियानम् ॥ ४ ॥

वैशम्पायन उवाच—

सा प्राद्रवत्काञ्चनमाल्यधारिणी
ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।
सुदक्षिणा वेदिविलग्नमध्या
सा पद्मपत्राभनिभा शिखण्डिनी ॥ १ ॥

तन्वी शुभाङ्गी मणिचित्रमेखला
मत्स्यस्य राज्ञो दुहिता श्रिया वृता ।
तन्नर्तनागारमरालपक्ष्मा
शतह्रदा मेघमिवान्वपद्यत ॥ २ ॥

सा हस्तिहस्तोपमसंहितोरूः
स्वनिन्दिता चारुदती सुमध्यमा ।
आसाद्य तं वै वरमाल्यधारिणी
पार्थं शुभा नागवधूरिव द्विपम् ॥ ३ ॥

सा रत्नभूता मनसः प्रियाऽर्चिता
सुता विराटस्य यथेन्द्रलक्ष्मीः ।
सुदर्शनीया प्रमुखे यशस्विनी
प्रीत्याऽब्रवीदर्जुनमायतेक्षणा ॥ ४ ॥

सुसंहतोरुं कनकोज्ज्वलत्वचं
पार्थः कुमारीं स तदाऽभ्यभाषत ।
किमागमः काञ्चनमाल्यधारिणि
मृगाक्षि किं त्वं त्वरितेव भामिनि ॥
किं ते मुखं सुन्दरि न प्रसन्न-
माचक्ष्व तत्त्वं मम शीघ्रमङ्गने ॥ ५ ॥

स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं सखा ।
प्रहसन्नब्रवीद्राजन्किमागमनमित्युत ॥ ६ ॥
तमब्रवीद्राजपुत्री समुपेत्य नरर्षभम् ।
प्रणयं भावयन्ती सा सखीमध्य इदं वचः ॥ ७ ॥

---

॥ ८ ॥ योऽसौ 'अदसस्तु विप्रकृष्टम्' । योऽसौ पुरुषाणां पुरतश्चराति ॥ १६ खाण्डवदाहेऽर्जुनः स्वयं सारथ्यमकरोत् ॥ १८ ॥ यवीयसी कनिष्ठोत्तरा ॥ २१ ॥ सत्रेण छद्मना ॥ २४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ लक्षा० ] स नीतसमये काल इत्यत्र नीतः समाप्तः समयः अज्ञातवाससंकेतो यस्मिन् तस्मिन् काले ॥ १० ॥ युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् । अमर्षयन्ती सैरन्ध्रीत्यत्र अद्यापि यतिवेषेण स्थितमसहमाना ॥ १४ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ नील० ] माल्यं माला । 'माल्यं कुसुमतत्स्रजोः' इति मेदिनी । सुदक्षिणा भ्रातृच्छन्दानुवर्तिनी । 'दक्षिणा दक्षिणोद्भूतसरलच्छन्दवर्तिषु' इति मेदिनी । वेदिवद् विलग्नः कृशो मध्यो यस्याः सा । पद्मपत्राभिनवा शिखण्डिनीति प्राचीनपाठः । पद्मपत्राभनिभा पद्मपत्रेषु आभातीति पद्मपत्राभा लक्ष्मीः तद्वत् निभा दीप्तिर्यस्याः सा । ये तु पद्मपत्राभं मरकतं तन्निभां श्यामामिति व्याचख्युस्तेषां कनकोज्ज्वलत्वचेमिति वाक्यशेषेण विरोधः स्पष्टः । शिखण्डिनी मयूरपिच्छालङ्कारवती ॥ १ ॥ अरालपक्ष्मा वक्राक्षिपक्ष्मा । शतह्रदा विद्युत् ॥ २ ॥ प्रमुखे अग्रे ॥ ४ ॥ किं किमर्थमागमनम् ॥ ६ ॥ प्रणयं विनयं भावयन्ती दर्शयन्ती ॥ ७ ॥

[ अर्जु० ] सुदक्षिणा अवामा शोभनरूपेणोदारा वा । वेदिविलग्नमध्या वेदिमुद्रासंमितमध्या 'वेदिरङ्गुलिमुद्रायां यूपे संस्कृतभूस्थले' इति विश्वः । शिखण्डिनी मयूरपिच्छविरचितशिरोलंकारान्विता ॥ १ ॥ हस्तिहस्तोपमसंहतोरूरिति हस्तिहस्तेन गजकरेण तुल्यौ दृढसंधिरूपौ मसृणावूरू यस्याः । 'दृढसंधिस्तु संहतः' इत्यमरः । चारुदती शोभनदन्तान्विता ॥ ३ ॥

[ सर्व० ] सुदक्षिणा भ्रातृच्छन्दानुवर्तिनी । विलग्नः कृशः । पद्मपत्रेषु आभातीति पद्मपत्राभा लक्ष्मीः तद्वन्निभा दीप्तिर्यस्याः । शिखण्डिनी मयूरपिच्छालङ्कारवती ॥ १ ॥ अरालं वक्रम् । शतह्रदा विद्युत् ॥ २ ॥

[ विरो० ] पद्मपत्रे आभा यस्य पद्मपत्राभं कर्णिकारूपं तन्निभा शिखण्डः मौलिः ॥ १ ॥ आमनो (?) विराटस्य । अब्रवीत् किंचिद्वक्ष्यामीति शेषः ॥ ४ ॥

[ विष० ] प्रणयं प्रीतिं भावयन्ती ज्ञापयन्ती ॥ ७ ॥

[ लक्षा० ] प्रदक्षिणावर्ततनुः शिखण्डिनीत्यत्र शिखण्डम् ऊर्ध्वं निबद्धा शिखा तद्वती शिखण्डिनी ॥ १ ॥

---

१–५ श्लोकाः व. वि. न सन्ति । २ च. ज. डं. प्रियावृता । ६ च. व. 'क्षीं सखीं प्रणयसंयुताम्; सखीवृताम्; च. म. सखीं तदा ।

गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले ।
ता विजेतुं मम भ्राता प्रयास्यति धनुर्धरः ॥ ८ ॥
नचिरं निहतस्तस्य सङ्ग्रामे रथसारथिः ।
तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ॥९॥
तस्मै प्रयतमानाय सारथ्यर्थं बृहन्नले ।
आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव ॥ १० ॥
अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।
त्वयाऽजयत्सहायेन पृथिवीं पाण्डवर्षभः ॥ ११ ॥
सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नले ।
पुरा दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः ॥ १२ ॥
अथैतद्वचनं मेऽद्य नियुक्ता न करिष्यसि ।
प्रणयादुच्यमाना त्वं परित्यक्ष्यामि जीवितम् ॥१३॥
एवमुक्तस्तु सुश्रोण्या तया सख्या परंतपः ।
जगाम राजपुत्रस्य सकाशममितौजसः ॥ १४ ॥
तमाव्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरम् ।
अन्वगच्छद्विशालाक्षी शिशुर्गजवधूरिव ॥ १५ ॥
दूरादेव तु तां प्रेक्ष्य राजपुत्रोऽभ्यभाषत ।
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ॥१६॥
पृथिवीमजयत्कृत्स्नां कुन्तीपुत्रो धनञ्जयः ।
सैरन्ध्री त्वां समाचष्टे सा हि जानाति पाण्डवान् १७
संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नले ।
कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सतः ॥ १८ ॥
अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।
त्वयाऽजयत्सहायेन पृथिवीं पाण्डवर्षभः ॥ १९ ॥
एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नला ।
का शक्तिर्मम सारथ्यं कर्तुं सङ्ग्राममूर्धनि ॥ २० ॥
गीतं वा यदि वा नृत्यं वादित्रं वा पृथग्विधम् ।
तत्करिष्यामि भद्रं ते सारथ्यं तु कुतो मम ॥ २१॥

**उत्तर उवाच—**

बृहन्नले गायनो वा नर्तनो वा पुनर्भव ।
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ॥ २२॥

**वैशम्पायन उवाच—**

स तत्र नर्मसंयुक्तमकरोत्पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ॥ २३ ॥
ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत ।
कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचनाः ॥ २४ ॥
स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः ।
कवचेन महार्हेण समनह्यद्बृहन्नलाम् ॥ २५ ॥
स बिभ्रत्कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम् ।
ध्वजं च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत् ॥२६॥
धनूंषि च महार्हाणि बाणांश्च रुचिरान्बहून् ।
आदाय प्रययौ वीरः स बृहन्नलसारथिः ॥ २७ ॥

---

[ नील० ] यावत् गावो दूरतरं ह्रियन्ते ततः प्रागेव सारथ्यं कुरु ॥ १२ ॥

[ अर्जु० ] पुरादूरतरं गावो ह्रियन्ते पुराद्ययन्ति(?) दूरतरमतिदूरम् ॥ १२ ॥ राजपुत्रस्य उत्तरस्य सकाशं निकटम् ॥ १४ ॥ नर्मसंयुक्तं हास्यसंयुक्तम् ॥ २३ ॥

[ चतु० ] नर्मसंयुक्तं प्रहसनानुगतम् ॥ २३ ॥ ऊर्ध्वमुत्क्षिप्य अधोभागमूर्ध्वमुन्नीय ॥ २४ ॥ विनह्यन्तं विपरीतं दधानम् । विपर्यस्तमिति वा पाठः ॥ २५ ॥

[ विरो० ] पुराद्दू(रत)रं २ पुरा दू(रत)रम् ( अ ) ॥ १२ ॥ परीप्सतः परीप्सन्तं दुर्योधनमनादृत्य ॥ १८ ॥ विनह्यन्तं विपरीतं दधानम् (च) ॥ २५ ॥

[ विष० ] पश्चाद्दूरतरं हरिष्यन्ते । पुरायोगे भविष्यति लट् ॥१२॥ तथैव त्वं बृहन्नडे इति । यथाऽर्जुनस्य तथा ममेति ॥ १८ ॥ गीतं वा यदि वा नृत्तमिति । गीतं पृथग्विधं नानारूपं चतुर्विधम्—पदमानविक्र(कु)ष्टमधुराख्यम् । 'पण्डिताः पदमिच्छन्ति मानमिच्छन्ति गायनाः । स्त्रियो मधुरमिच्छन्ति विक्र(कु)ष्टमितरे जनाः ॥ नृत्तं चतुर्विधम् । लास्यं ताण्डवमुत्कटं वेतालम् । वाद्यं चतुर्विधं ततविततघनसुषिरभेदेन—'ततं तन्त्रीकृतं विद्याद्विततं मुरजादिकम् । घनं कांस्यकृतं ज्ञेयं सुषिरं वांशमेव च' इति पृथग्विधम् ॥ २१ ॥ तत्र नर्मसंयुक्तं अन्तःपुरनारीणां हास्यकारि जानुरक्षं शिरसि बबन्ध भुजरक्षाकरं कवचं कण्ठे बबन्ध । पृष्ठरक्षकं ग्रथित्वा शिरसा दधार इति ॥ २३ ॥ उर्ध्वमुत्क्षिप्योर्ध्वमुद्धृत्य कवचनिक्षेपादिकम् ॥२४॥ विमुह्यन्तं विपरीतकवचादिधारणात् मूढम् ॥ २५ ॥

[ लक्षा० ] स तत्र नर्मसंयुक्तमित्यत्र 'अग्राम्यपरिहासोक्तिर्नर्म इत्यभिधीयते' इतिवचनात् परिहाससंयुक्तम् ॥ २३ ॥ समनह्यत सम्यग्बद्धमकारयत् । नह बन्धन इति धातुः ॥ २५ ॥

---

८ ग. घ. तान्विजे° । १२ व. पुराद्दूरतरं । १५ अ. दे. शिशुं गजव°; ज. गजं गजवधू° । १८ व. गोधनं मे प° । १९ च. सारथिर्यद्विते: । २७ ग. °णि निषङ्गान्स्वविरान् ।

अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ।
बृहन्नले आनयेथा वासांसि रुचिराणि च ॥ २८ ॥
पाञ्चालिकार्थं चित्राणि सूक्ष्माणि च मृदूनि च ।
विजित्य संग्रामगतान् भीष्मद्रोणमुखान्कुरून् ॥ २९ ॥
एवं ता ब्रुवतीः कन्याः सहिताः पाण्डुनन्दनः ।
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिःस्वनः ॥ ३० ॥

बृहन्नलोवाच—

यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ॥ ३१ ॥

वैशम्पायन उवाच—

एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान् ।
कुरूनभिमुखः शूरो नानाध्वजपताकिनः ॥ ३२ ॥
तमुत्तरं वीक्ष्य रथोत्तमे स्थितं
बृहन्नलायाः सहितं महाभुजम् ।
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः
प्रदक्षिणं चक्रुरथोचुरङ्गनाः ॥ ३३ ॥
यदर्जुनस्यर्षभतुल्यगामिनः
पुराऽभवत् खाण्डवदाहमङ्गलम् ।
कुरून्समासाद्य रणे बृहन्नले
सहोत्तरेणाद्य तदस्तु मङ्गलम् ॥ ३४ ॥

इति श्रीमहाभारते विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टात्रिंशोऽध्यायः ३८

कौरवसेनां दृष्ट्वा भीतस्योत्तरस्य रथात्प्रस्कन्द्य पलायनम् ॥ १ ॥ तदनु पार्थेन रथादवप्लुत्यास्य केशेषु ग्रहणम् ॥ २ ॥ तदवलोकयतां कुरूणामर्जुनविषये विमर्शः ॥ ३ ॥ अर्जुनेनाहं कुरुभिर्योत्स्ये त्वं सारथ्यं कुर्वित्यादिवचनैः समाश्वास्य तस्य रथे आरोपणम् ॥ ४ ॥

वैशम्पायन उवाच—

स राजधान्या निर्याय वैराटिरकुतोभयः ।
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः ॥ १ ॥
समवेतान्कुरून्सर्वाञ्जिगीषूनवजित्य वै ।
गास्तेषां क्षिप्रमादाय पुनरेष्याम्यहं पुरम् ॥ २ ॥
ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ।
ते हया नरसिंहेन नोदिता वातरंहसः ।
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ॥ ३ ॥
नातिदूरमथो गत्वा मत्स्यपुत्रधनञ्जयौ ।
अवेक्षेतामभित्रघ्नौ कुरूणां बलिनां बलम् ॥ ४ ॥

---

[ नील० ] पाञ्चालिकार्थम् ' पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः ॥ २९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ अर्जु० ] पाञ्चालिकार्थं वस्त्रादिरचितपुत्रिकार्थम् । ' पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ' इत्यमरः ॥ २९ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ चतु० ] 'पाञ्चालिका वस्त्रमय्यः स्मृताः कृत्रिमपुत्रिकाः ' ॥ २९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ सर्व० ] पाञ्चालिका वस्त्रादिनिर्मिता पुत्रिका ॥ २९ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ विरो० ] पाञ्चालिका क्रीडापुत्रिका ॥ २९ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ विष० ] विजित्य संग्रामगतानिति । कन्यकया भाविपदार्थः सत्यमेवोदाहारि । तथा चोक्तम् । ' पूर्वं देवेषु चरति ततश्चरति मानुषे । नानोदिता वाग्भवति सत्या ह्येषा सरस्वती ॥ ' इति वचनाज्जयं पश्यन्ती वाणी शकुनभूताऽऽसाधितमर्थं कथितवती ॥ २९ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ लक्षा० ] पालितार्थानि सूक्ष्माणीत्यत्र पालितः अर्थो द्रव्यं यैस्तानि बहुद्रव्याहाणीत्यर्थः ॥ २९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ अर्जु० ] पृथिवींजयः भूमिंजयनामा ॥ १ ॥ आलिखन्त इवाकाशमूहुः काञ्चनमालिनः । खुरलेखनीभिश्चित्रं लिखन्त इव इति वेगातिशयमाह उत्तरमवहन् ॥ ३ ॥

[ चतु० ] आलिखन्तः खुरैः क्षुता (?) इव ऊहुः उदवहन् ॥ ३ ॥

[ विरो० ] बभुः; ऊहुः ( च ) ॥ ३ ॥

---

२८ क. ग. घ. °राणि नः । २९ क. °र्थं सूक्ष्माणि रत्नानि विविधानि च । ३१ क. °सि सूक्ष्माण्याभरणानि च । इति सप्तत्रिंशोऽध्यायः ॥

१ घ. व. °टिः पृथिवींजयः । २ घ. कुरून्याहि । ३ व. °काशं मुहुः ।

श्मशानमभितो गत्वा आससाद कुरूनथ ।
तां शमीमन्ववीक्षेतां व्यूढानीकांश्च सर्वशः ॥ ५ ॥
तदनीकं महत्तेषां विबभौ सागरोपमम् ।
सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ ६ ॥
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तम ॥ ७ ॥
तदानीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलम् ।
कर्णदुर्योधनकृपैर्गुप्तं शान्तनवेन च ॥ ८ ॥
द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥ ९ ॥

उत्तर उवाच—

नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ॥ १० ॥
प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम् ।
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ॥ ११ ॥
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ।
दृष्ट्वैव हि परानाजौ मनः प्रव्यथतीव मे ॥ १२ ॥
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ १३ ॥
दुर्योधनस्तथा वीरो राजा च रथिनां वरः ।
द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ॥ १४ ॥
दृष्ट्वैव हि कुरूनेतान् व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलं चागतं मम ॥ १५ ॥

वैशम्पायन उवाच—

अविजातो विजातस्य मौर्ख्याद्धूर्तस्य पश्यतः ।
परिदेवयते मन्दः सकाशे सव्यसाचिनः ॥ १६ ॥

उत्तर उवाच—

त्रिगर्तान्मे पिता यातः शून्ये संप्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १७॥

---

[ विष० ] आलिखन्तेति खुरलेखनीभिश्चित्रं लिखन्त इव आकाशे गत्यतिशयकथनम् ॥ ३ ॥

[ नील० ] अतिवेगेन आकाशे ॥६॥ हृष्टरोमा रोमाञ्चितः ॥ ९ ॥ नोत्सहे इत्यत्र हेतुमाह बह्विति ॥ १० ॥ कलिलां गहनाम् ॥ १२ ॥ कश्मलं मूर्च्छा ॥ १५ ॥ अविजातः जातं सामान्यं विगतं यस्मात् स विजातोऽसाधारणस्तदन्योऽविजातः साधारणः प्राकृतः । प्राचा तु सयकारः पाठः तदा वियातो धृष्टः । 'धृष्टे धृष्णुग्वियातश्च' इत्यमरः । अवियातोऽप्रगल्भः । धूर्तस्य छद्मवेषधारिणः ॥ १६ ॥

[ अर्जु० ] श्मशानमभितः श्मशानसमीपम् ॥५॥ भारतीं भरतवंशसंबन्धिनीम् ॥११॥ अवियातो वियातस्य मूर्खो धूर्तस्य पश्यतः । परिदेवयते मन्दः सकाशे सव्यसाचिनः । अयमर्थः मन्द उत्तरः मूर्खः स्वपरबलानभिज्ञः सव्यसाचिनोऽर्जुनस्य पश्यतः अव्यवहितसकाशे परिदेवयते विलापं करोतीति कृतं शोचत इत्यर्थः । वियातो धृष्टः प्रगल्भः संग्रामयात्रायामिति यावत् । न वियातोऽवियातः अधृष्टः इत्यर्थः । संग्राम इत्यर्थात् वियातस्य धृष्टस्येत्यर्थः । विशिष्टं यातं यस्येति वा । धूर्तस्य अनुमानपरिविशेषमूहमानस्य(?) मौर्ख्यमिति वा पाठः । अथवा अविजातः अव्यां मेष्यां जात इव अत एव मन्दः अदक्षः मेषजातः पशुरयं युद्धार्थमेत्य यतः पशुवद् बिभेति धूर्तस्यार्जुनस्य अत्रापि स्त्रीत्वं प्रकटयति । विजातस्य विशिष्टजन्मनः इन्द्रपुत्रत्वात् अविजातः अविशिष्टजन्मा । अन्तस्थयकारवत्पाठे, 'धृष्टो धृष्णुग्वियातश्च' इत्यमरः ॥ १६ ॥

[ चतु० ] ददृशे इति काकाक्षिवदुभयत्र संयुज्यते ॥ ७ ॥ पुरोजातामग्रतः प्रस्थिताम् ॥ १२ ॥ अवियातोऽप्रगल्भः । वियातस्य प्रगल्भस्य । धूर्तस्य परैरप्रतार्यस्य मौर्ख्यं मत्वाभिनिवेशं पश्यतः । मन्दोऽनुत्साहः परिदेवयते विलपति ॥ १६ ॥

[ सर्व० ] कलिलां गहनाम् ॥१२॥ वियातो धृष्टः ॥१६॥

[ विरो० ] अविजातः न विशिष्टत्वेन जातः । अवियातः न वियातो धृष्टो यस्मात् विशिष्टं ज्ञानं जातं यस्य विजातस्य वियातस्य विविधानि ज्ञानानि प्राप्तानि यत्र वा । उत्तरस्य मौर्ख्यं पश्यतो अर्जुनस्य धूर्तस्य दक्षस्य ॥ १६ ॥

[ विष० ] बहवः प्रवीरा येषु कुरुसैन्येषु तत् ॥१०॥ नाशंसे मनसापि नाभिलषामि ॥ ११ ॥ कलिलां गहनां दुष्प्रवेशाम् ॥ १२ ॥ व्यूढानीकान् सन्नद्धसैन्यान् कृतरचनाविशेषान् । कश्मलमतिभयम् ॥१५॥ अवियातः अप्रगल्भः स्वपरबलाऽनभिज्ञः । विशिष्टं यातं ज्ञानं यस्य स वियातस्तस्य वियातस्य । प्रगल्भस्य विशिष्टज्ञानयुक्तस्य गत्यर्था ज्ञानार्थाः । विज्ञानं यातस्य प्राप्तस्य वियातस्य । वियातो धृष्ट उच्यते । धैर्ययुक्तस्य । आत्मानमनुशोचति स्म ॥१६॥

[ लक्षा० ] ददृशे पार्थिवो रेणुरित्यत्र पार्थिवः पृथिवीसंबन्धी रेणुः तेन सैन्येन ॥ ७ ॥

---

६ घ. च. सागरस्वनम् । दे. भ्रममाणमिवा° ७ व. नरसत्तम । ११ सैन्यं भयानकम् । १२ व. परानाजावात्मा; च. पुरोजातां । १४ क. तथा राजा वीरो दुर्मर्षणः परः । १६ व. अवियातो वियातस्य; क. पूर्वार्धस्थाने—दृष्ट्वा तु महतीं सेनां कुरूणां दृढधन्विनाम् ।

सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नले ॥ १८ ॥

बृहन्नलोवाच—

भयेन दीनरूपोऽसि द्विषतां हर्षवर्द्धनः ।
न च तावत्कृतं कर्म परैः किंचिद्रणाजिरे ॥ १९ ॥
स्वयमेव च मामात्थ वह मां कौरवान्प्रति ।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥२०॥
मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् ॥२१॥
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ॥ २२ ॥
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि ।
प्रहसिष्यन्ति वीरास्त्वां नरा नार्यश्च सङ्गताः॥२३॥
अहमप्यत्र सैरन्ध्या ख्याता सारथ्यकर्मणि ।
न च शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥२४॥
स्तोत्रेण चैव सैरन्ध्यास्तव वाक्येन तेन च ।
कथं न युध्येयमहं कुरून्सर्वान् स्थिरो भव ॥२५॥

उत्तर उवाच—

कामं हरन्तु मत्स्यानां भूयांसः कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नरा वाऽपि बृहन्नले ॥२६॥
सङ्ग्रामे न च कार्यं मे गावो गच्छन्तु चापि मे ।
शून्यं मे नगरं चापि पितुश्चैव बिभेम्यहम् ॥ २७ ॥

वैशम्पायन उवाच—

इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं च दर्पं च विसृज्य सशरं धनुः ॥२८॥

बृहन्नलोवाच—

नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयस्तु मरणं युद्धे न भीतस्य पलायनम् ॥ २९ ॥

वैशम्पायन उवाच—

एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः ॥ ३० ॥
दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी ।
विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ॥ ३१ ॥
सैनिकाः प्राहसन्केचित्तथारूपमवेक्ष्य तम् ।
तं शीघ्रमभिधावन्तं संप्रेक्ष्य कुरवोऽब्रवन् ॥ ३२ ॥
क एष वेषसंच्छन्नो भस्मन्येव हुताशनः ।
किंचिदस्य यथा पुंसः किंचिदस्य यथा स्त्रियः ॥३३॥
सारूप्यमर्जुनस्येव क्लीबरूपं बिभर्ति च ।
तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तद्वदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ॥ ३४ ॥

---

[नील०] आमिषं मांसं तत्र यथा गृध्राः पतन्ति तत्तुल्याना गोलुब्धानाम् । पृथिव्यां निमित्तभूतायाम् । एतेनाग्रे भाविसंग्रामेष्वपि त्वां नेष्यामीत्युक्तम् ॥ २१ ॥ अभिनिर्यायाभिनिर्गत्य न युयुत्ससे योद्धुं नेच्छसि ॥२२॥

इति श्रीनैलकण्ठीये भारतभावदीपे विरा० अष्टात्रिंशोऽध्यायः ॥ ३८॥

[अर्जु०] त्वामद्य वक्ष्यामि वहधातो रूपम् ॥ २० ॥ मध्यमामिषगृद्धानां मध्यान्मः गवादिकं मध्यं धनम् । 'उपादानेऽप्यामिषं स्यात्' इति कोषः । गोधनेच्छूनाम् । आमिषगृद्धानामिति(?) वा पाठः । आततायिनां वधोद्यतानां पृथिव्यामपि युध्यतां पृथिव्यां युध्यतां वीराणामिति शेषः ॥२१॥

[ चतु० ] आत्थ उक्तवानसि । नेष्यामि प्रापयिष्यामि ॥ २० ॥ आमिषगृध्राणामुपादानाभिलाषिणाम् । पृथिव्यामित्सधिकरणसप्तम्या तद्वासिनो लक्ष्यन्ते पृथिवीवासिनामित्यर्थः ॥ २१ ॥ कामं यथेष्टम् ॥ २६ ॥

[सर्व०] आमिषे मांसे यथा गृध्राः पतन्ति तत्तुल्यानां गोलुब्धानाम् ॥ २१ ॥

[ विरो० ] पृथिव्यामपि पृथिवीनिमित्तमपि । यद्वा पृथिव्यां महाबाहो ॥ २१ ॥ अनिर्जित्य अजित्वा ॥ २४ ॥

[ विष० ] उप समीपे नेष्याभि ॥ २० ॥ आमिषगृद्धाना धनेप्सूनाम् । आततायिनां तथा चोक्तम् 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः' वधोद्यतानां वीराणामिति भावः । युध्यतां वीराणां पृथिव्यां रणभूमौ नेष्यामीत्यर्थः ॥ २१ ॥ कत्थमानः स्वयं श्लाघमानः ॥ २२ ॥ किंचिदस्य यथा पुंस इति । कूर्चस्कन्धकरचरणादि पुंवत् । नितम्ववेणी दण्डकुण्डलकङ्कणादि स्त्रीवत् ॥ ३३ ॥ अस्य विक्रान्तं यद्द्रोणशिक्षितमिति भावः ॥ ३४ ॥

[ लक्षा० ] मध्यमामिषगृध्राणामित्यत्र आमिषगृध्राणां गृधु आकाङ्क्षायामितिधातोः रक् । शत्रूणामामिषाकाङ्क्षिणाम् ॥ २१ ॥ नटे वैतच्छिरोग्रीवमित्यत्र शिरश्च ग्रीवा च शिरोग्रीवम् । एतस्य शिरोग्रीवं नटे व नटे यथ तथास्ति ॥ ३४ ॥

---

२१ क. °मिषगृध्रूनां । क. °बाहो मा त्वं हि विमना भव । २७ शादनन्तरमधिकं च. निवर्तय रथं तूर्णं हृदयं मे विदीर्यते । घ. व. मानं स मन्दात्मा । २९ घ. व. नैष पूर्वैः । ३४ व. आरूपमर्जुनस्येव; स्वरूपमर्जु° ।

अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः ।
एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात् ३५ ॥
एकः पुत्रो विराटस्य शून्ये सन्निहितः पुरे ।
स एष किल निर्यातो बालभावान्न पौरुषात् ॥ ३६ ॥
सत्रेण नूनं छन्नं हि चरन्तं पार्थमर्जुनम् ।
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ॥ ३७ ॥
स नो मन्यामहे दृष्ट्वा भीत एष पलायते ।
तं नूनमेष धावन्तं जिघृक्षति धनञ्जयः ॥ ३८ ॥

वैशम्पायन उवाच—

इति स्म कुरवः सर्वे विमृशन्तः पृथक् पृथक् ।
न च व्यवसितुं किंचिदुत्तरं शक्नुवन्ति ते ॥ ३९ ॥
छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ।
उत्तरं तु प्रधावन्तमभिद्रुत्य धनञ्जयः ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ ४० ॥
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ ४१ ॥

उत्तर उवाच—

शृणुयास्त्वं हि कल्याणि बृहन्नले सुमध्यमे ।
निवर्तय रथं क्षिप्रं जीवन्भद्राणि पश्यति ॥ ४२ ॥
शातकुम्भस्य शुद्धस्य शतं निष्कान्ददामि ते ।
मणीनष्टौ च वैदूर्यान्हेमबद्धान्महाप्रभान् ॥ ४३ ॥
हेमदण्डप्रतिच्छन्नं रथं युक्तं च सुव्रतैः ।
मत्तांश्च दश मातङ्गान् मुञ्च मां त्वं बृहन्नले ॥ ४४ ॥

वैशम्पायन उवाच—

एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ४५ ॥
अथैनमब्रवीत्पार्थो भयार्त्तं नष्टचेतसम् ।
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्षण ।
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ॥ ४६ ॥
प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षितः ।
अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ॥ ४७ ॥
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ ४८ ॥
अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ।
प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदम् ॥ ४९ ॥
यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ।
एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः ।
समाश्वास्य मुहूर्तं तमुत्तरं भरतर्षभ ॥ ५० ॥
तत एनं विचेष्टन्तमकामं भयपीडितम् ।
रथमारोपयामास पार्थः प्रहरतां वरः ॥ ५१ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

[ अर्जु० ] सत्रेण छद्मना ॥ ३७ ॥ जिघृक्षति ग्रहीतुमिच्छति ॥ ३८ ॥ व्यवसितुं निश्चेतुम् ॥ ३९ ॥ शातकुम्भस्य सुवर्णस्य शुद्धस्य निर्मलस्य शतं निष्कान् अष्टोत्तरशतकार्षापणं निष्कः तस्य शतं, शतमुत्तरो(?) भूषणं हारमिति वा ॥ ४३ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ चतु० ] व्यवसितुं निर्णेतुम् उत्तरं संदेहानन्तरभाविनमर्थम् ॥ ३९ ॥ प्रत्यपद्यत स्वीकृतवान् ॥ ५० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ सर्व० ] आरनालं काञ्जिकम् ॥ ४५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ विरो० ] उत्तरमवधारणीयमर्थम् ॥ ३९ ॥ प्रत्यपद्यत स्वीकृतवान् ॥ ५० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ विष० ] केशपक्षे केशसमूहे धम्मिल्ले ॥ ४० ॥ (शातकुम्भस्य) षोडशवर्णिकस्य सुवर्णस्य ॥ 'निष्कमष्टोत्तरस्वर्णशते दीनारकर्षयोः ॥ चामीकरे च चन्द्रे च साक्ष्या षोडशी कला ॥' शातकुम्भस्य कुम्भशतेषु शतं वारान् शोधितस्य । अत एव शुद्धस्य काञ्जिकेन ॥ ४३ ॥ यन्ता भूत्वा सारथिर्भूत्वा ॥ ५० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ लक्षा० ] एकोऽस्मानुयात्येष इत्यत्र पृष्ठतो गन्तुरर्जुनस्य धैर्योद्रेकं दृष्ट्वा तस्य शिखां गृहीत्वा युद्धायाया-

---

३५ व. अमरेष्वेक एवेन्द्रो । ३८ व. च. ज. सेनामध्ये ध्वजान्दृष्ट्वा ४० व. अनुद्रुत्य । ४५ श्लोकात्प्रागधिकं घ. व. आरनालेन जीविष्ये न मे गोभिः प्रयोजनम् । जीवन्प्राप्स्यामि गा नित्यं निवर्तस्व बृहन्नले । ४९ व. प्रयाह्येतद्रथानीकं । ५० च. ङ. 'तं तु 'नोत्तरं प्रत्यपद्यत । इति अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ३९.

कुरुसैन्येषूत्पातान्दृष्ट्वा द्रोणेनार्जुनाद्भयप्राप्तिकथनम् ॥ १ ॥ दुर्योधनेनायमर्जुनश्चेन्मम कार्यसिद्धिरेवेति कथनम् ॥ २ ॥

**वैशम्पायन उवाच—**

तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १ ॥
भीष्मद्रोणमुखास्तत्र कुरवो रथिसत्तमाः ।
वित्रस्तमनसः सर्वे धनञ्जयकृताद्भयात् ॥ २ ॥
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३ ॥
चण्डाश्च वाताः संवान्ति रूक्षाः शर्करवर्षिणः ।
भस्मवर्णप्रकाशेन तमसा संवृतं नभः ॥ ४ ॥
रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ॥ ५ ॥
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ६ ॥
यादृशान्यत्र रूपाणि संदृश्यन्ते बहूनि च ।
यत्ता भवन्तस्तिष्ठन्तु साध्वसं समुपस्थितम् ॥ ७ ॥
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि ।
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ८ ॥
एष वीरो महेष्वासः सर्वशस्त्रभृतां वरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ९ ॥
नदीज लङ्केशवनारिकेतु-
नगाह्वयो नाम नगारिसूनुः ।
एषोऽङ्गनावेषधरः किरीटी
जित्वाऽव यं नेष्यति चाद्य गा वः ॥ १० ॥
स एष पार्थो विक्रान्तः सव्यसाची परंतपः ।
नायुद्धेन निवर्तेत सर्वैरपि सुरासुरैः ॥ ११ ॥

---

स्यतीति भावेन अस्माननुयातीत्युक्तम् ॥ ३५ ॥ स नो मनो ध्वजानित्यत्र नः मनः धैर्ययुक्तं मनः ध्वजांश्च दृष्ट्वेति संबन्धः ॥ ३८ ॥ इति स्म वक्ष्यमाणप्रकारेण ॥ ३९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराट-पर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ नील० ] तमिति ॥ १ ॥ वैशसं वैरं युद्धे कदनं वा ॥ ८ ॥ नदीजेति हे नदीज ! गाङ्गेय ! हे भीष्म ! लङ्केशस्य रावणस्य वनं तस्यारिर्नाशको हनूमान् सः केतुर्ध्वजो यस्य सः लङ्केशवनारिकेतुः । नगो वृक्षस्तदाह्वयः वृक्षनामा । नामेति वितर्के निश्चितं वा अर्जुन इत्यर्थः । 'शैलवृक्षौ नगावगौ' इत्यमरः । नगारिरिन्द्रस्तस्य सूनुः । एषः अङ्गनावेषधरः । किरीटी एतन्नामा यं जित्वा वः युष्माकं गाः धेनूः नेष्यति तं दुर्योधनमव पालय ॥ १० ॥

[ अर्जु० ] चलाश्च वाता अनियतवाहिनः चण्डाश्चेत्यपि पठन्ति ॥ ४ ॥ दीप्तायामित्यादित्यक्रान्तायां शिवाः शृगालाः दीप्तायां पश्चिमायां दिशीति केचित् ॥ ६ ॥ साध्वसं भयम् ॥ ७ ॥ वैशसं वैकल्यं विघातं वा । प्रतीक्षध्वं सहध्वं क(? कु)रुगणैः ॥ ८ ॥

[ चतु० ] दीप्तायामुल्कापातादिभिर्ज्वलितायाम् ॥ ६ ॥

यत्ताः संयत्ताः ॥ ७ ॥ वैशसं वैरम् ॥ ८ ॥ मरुद्गणैर्देवसंघैः ॥ ११ ॥

[ सर्व० ] शर्कराः क्षुद्रपाषाणाः ॥ ४ ॥ वैशसं कदनम् ॥ ८ ॥ नदीज गाङ्गेय हे भीष्म लङ्केशस्य रावणस्य वनं तस्यारिर्नाशको हनुमान्स केतुर्ध्वजो यस्य । नगो वृक्षः तदाह्वयः वृक्षनामा अर्जुन इत्यर्थः । नामेति निश्चितम् । नगारिः इन्द्रः । यं जित्वा वः युष्माकं गा धेनूः नेष्यति तं दुर्योधनम् अव पालय ॥ १० ॥

[ दुर्घ० ] नदीजेति । द्रोणः भीष्मं प्रति वदति । हे भीष्म ! किरीटी यं जित्वा वः गाः नेष्यति तं दुर्योधनम् अव रक्षस्वेति भावः । रावणवनध्वंसको हनुमान् ध्वजे यस्य । नगो नाम अर्जुनवृक्षस्तन्नामा इन्द्रपुत्रः ॥ १० ॥

इति श्रीमहाभारतव्याख्यायां दुर्घटार्थप्रकाशिन्यां विराट-पर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ विरो० ] दीप्तायां दाहावच्छिन्नायां दिशि ॥ ६ ॥ परीक्षध्वं प्रतीप्सध्वं च सहध्वं च ॥ ८ ॥

[ विष० ] 'निःसरन्ति च कोशेभ्यः' इत्याद्युत्पाता युद्धलक्षणा भवन्ति । तथाचोक्तं वराहमिहिरेण 'आयुधज्वलनसमर्पणस्वनाः केशनिर्गमनवेपनानि वा । वैकृतानि यदि

---

२ व. कुरूणां रथिसत्तमाः । ३ व. °त्पातानपि चोत्तमान् । तृतीयोत्तरं नदीजेति श्लोको ग. पुस्तके । ४ व. शर्करकर्षिणः । ७ घ. °स्तिष्ठन्तु महद्युद्धमुपस्थितम् । ९ नवमोत्तरम् घ. एषा न योषिद्यदि योषिदेषा सा चैव या शुम्भनिशुम्भहन्त्री । मायामयस्त्रीत्वपुरातनोति लीलायितं वा पुरुषः पुराणः ॥ इत्यधिकः श्लोकः । १० दशमः श्लोको घ. व. पुस्तकयोः षट्चत्वारिंशेऽध्याये त्रयोविंशतया वर्तते । उत्तरार्धस्थाने क. गत्या सुरेशः क्वचिदङ्गनेव गुरुर्बभाषे वचनं तदानीम् । ग. व. वेषधरस्तरस्वी विजेष्यते सर्वकुरुप्रवीरान् । ११ इं. वि. ग. घ. च. व. ज. सर्वैरपि मरुद्गणैः ।

क्लेशितश्च वने शूरो वासवेनापि शिक्षितः ।
अमर्षवशमापन्नो वासवप्रतिमो युधि ।
नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः ॥ १२ ॥
महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ।
किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ॥ १३ ॥

कर्ण उवाच—

सदा भवान्फाल्गुनस्य गुणैरस्मान्विकत्थते ।
न चार्जुनः कला पूर्णो मम दुर्योधनस्य च ॥१४॥

दुर्योधन उवाच—

यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशाब्दान्विशाम्पते ॥१५॥
अथैष कश्चिदेवान्यः क्लीववेषेण मानवः ।
शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ १६ ॥

वैशम्पायन उवाच—

तस्मिन्ब्रुवति तद्वाक्यं धार्त्तराष्ट्रे परन्तप ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥१७॥

इति श्रीमहाभारते विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ४०

शमीसमीपं गत्वार्जुनेनोत्तरं प्रति धनुरवरोपणचोदना ॥ १ ॥

वैशम्पायन उवाच—

तां शमीमुपसङ्गम्य पार्थो वैराटिमब्रवीत् ।
सुकुमारं समाज्ञाय संग्रामे नातिकोविदम् ॥ १ ॥
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ।
नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् ।
भारं चापि गुरुं वोढुं कुञ्जरं वा प्रमर्दितुम् ॥ २ ॥

---

वाऽऽयुधे पराण्याशु रौद्ररणसंकुलं वदेत्' ॥ ५ ॥ दीप्तायामादित्याक्रान्तायाम् ॥ ६ ॥ यत्ता यत्नपराः ॥ ७ ॥ वैशसं वैरं सहध्वम् ॥ ८ ॥

[ लक्षा० ] तानवेक्ष्य महोत्पातानित्यत्र महोत्पातान् उल्कापातादीन् उत्पातान् गोमायुरोदनादीन् । तान् स्वसैनिकान् ॥ ३ ॥ दक्षिणाः दक्षिणदिक्स्थाः ॥ ६ ॥ एते भयं च तिष्ठन्तीत्यत्र एते उत्पाताः भयं यथा भवति तथा ॥ ७ ॥ नदीजे श्लोके हे नदीज भीष्म अयं लङ्केशवनारिकेतुः लङ्केशवनारिः हनुमान् स एव केतौ यस्य । नगः अर्जुनवृक्षः तदाह्वयो यस्य । नगानां पर्वतानां अरिः इन्द्रः तस्य सूनुः । गत्या पादविहारेण अङ्गनेव वेणीधारणादिना ॥ १० ॥

[ नील० ] कला षोडशोंऽशः पूर्णः कृत्स्नः ॥ १४ ॥

इति श्रीनै० भारतभावदीपे वि. प. एकोनचत्वारिंशोऽध्यायः ॥३९॥

[ अर्जु० ] विकत्थते गुणश्लाघया बाधते ॥ १४ ॥

इति श्रीमहा० मर्जु० विरा० एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ चतु० ] विकत्थते बाधते । कला षोडशांशः ॥ १४ ॥

इति श्रीचतुर्भु० महाभा० वि. प. एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ सर्व० ] कला षोडशो भागः ॥ १४ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि. प. एकोनचत्वारिंशोऽध्यायः ॥३९॥

[ विरो० ] कला षोडशांशः ॥१४॥

इति श्रीमहा० विरो० विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ विष० ] भवान्सर्वदा फाल्गुनस्य गुणैः कृत्वाऽस्मान् विकत्थते निन्दति । विगतं कत्थनं श्लाघा विकत्थनम् । कत्थ श्लाघायाम् । फाल्गुन इति सोपहासवचनम् । फल्गुन्यां जात इति फाल्गुनः । "अन्येष्वपि" इति डप्रत्ययः । डानुबन्धे ईकारलोपः । फल्गु असारं फल्गुनक्षत्रं तत्र जातः असारः पलायनशीलश्चेत्यर्थः । अर्जुन इत्यपि सोपहासवाक्यम् । अर्जुनः पाण्डुरो नीरक्तो दुर्बलत्वात् । कला षोडशो भागः श्लाघया प्रधानः ॥ १४ ॥ अथाऽर्जुनादन्यश्चेत्तर्हि शरैः पातयिष्यामीति ब्रुवतः सुयोधनस्य सैन्येनाऽर्जुनस्याऽजेयत्वं हृदयेनाऽवधारितमिति भावार्थः ॥१६॥ पौरुषं दुर्योधनस्य वितर्कबुद्ध्या ॥ १७ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ लक्षा० ] दुर्योधनस्य मम च । अपूर्णेन किलेति योजना ॥ १४ ॥ भीष्मो द्रोण इत्यत्र भीष्मो द्रोणश्चेति द्वौ । कृपो द्रौणिश्चेति द्वौ । पौरुषं दुर्योधनपराक्रमम् ॥ १७ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ नील० ] तामिति ॥ १ ॥ अवहर अवतारय ॥ २ ॥

[ सर्व० ] अवहर अवतारय ॥ २ ॥

---

१२ घ. व. वासवेन च रक्षितः । क. च. °मापन्नो योत्स्यते नात्र संशयः; ग. घ. व. योत्स्यते गुणैः । १५ व. ज. द्वादशान्यान्हि वत्सरान् । १६ क. क्लीबवेषेण देवराट् ॥ इति एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

१ उत्तरार्धस्थाने क. सुखसंवर्धितं पित्रा समराणामकोविदम्; ग. घ. व. सुकुमारमविक्रान्तं सं° । २ व. धनूंष्याहर चोत्तर; क. धनुर्गाण्डीवम.नय । नेमानीष्वासनानीह ।

मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ।
तस्माद्भूमिंजयारोह शमीमेतां पलाशिनीम् ॥ ३ ॥
अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ ४ ॥
ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ।
अत्र चैतन्महावीर्यं धनुः पार्थस्य गाण्डिवम् ॥ ५ ॥
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ।
व्यायामसहमत्यर्थं तृणराजसमं महत् ॥ ६ ॥
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ।
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ॥ ७ ॥
अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम् ।
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ ८ ॥

इति श्रीमहाभारते विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः ४१

---

शवत्वशङ्कयाऽप्रवर्तमानस्योत्तरस्यार्जुनवचनेन धनुरवरोपणे प्रवृत्तिः ॥ १ ॥

उत्तर उवाच—
अस्मिन् वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम् ।
तदहं राजपुत्रः सन् स्पृशेयं पाणिना कथम् ॥ १ ॥
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ २ ॥
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नले ॥ ३ ॥

---

[ लक्षा० ] अनेन धनुषेत्यत्र अनेन त्वदीयेन । गुरुं भारं सेनाभारम् ॥ २ ॥

[नील०] बाहुविक्षेपं सोढुं न शक्ष्यन्तीति संबन्धः । भूमिञ्जय हेउत्तर ! पलाशिनीं बहुपत्रवतीम् ॥ ३ ॥ तृणराजस्तालस्तत्समम् ॥ ६ ॥ महामात्रं अतिप्रमाणम् ॥ ७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ अर्जु० ] पलाशिनीं बहुपत्रवतीम् ॥ ३ ॥ एकं शतसहस्रेण संमितम् । एकं गाण्डीवं धनुः शतसहस्रेण अर्थाद् धनुषः संमितं तुलामच्छेद्यत्वादभेद्यत्वादिति भावः । तृणराजसमं तालवृक्षसमं दीर्घम् ॥ ६ ॥ सर्वायुधमहामात्रम् । महामात्रं प्रधानं समृद्धं वा 'महामात्रः प्रधाने स्यान्मान्ये हस्तिपकाधिपे' इति मेदिनिः । सुवर्णविकृतं शोभनवर्णं च तत्र विविधप्रकारेण कृतं च ॥ ७ ॥ दारुणं भीषणं क्रियया,⋯⋯चारुदर्शनम् ॥ ८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ चतु० ] पलाशिनीं पत्रबहुलाम् ॥ ३ ॥ महामात्रं प्रधानम् । सुवर्णेन विकृतं विचित्रम् ॥ ७ ॥ अलं पर्याप्तम् ॥ ८ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ सर्व० ] पलाशिनीं पत्रवतीम् ॥ ३ ॥ तृणराजः तालः ॥ ६ ॥ महामात्रम् अतिप्रमाणम् ॥ ७ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ विष० ] पलाशिनीं पत्रबहुलाम् ॥ ३ ॥ व्यायामसहमाकर्षणसमर्थम् । तृणराजसमं तालप्रमाणम् । ममाऽऽकर्षतस्तृणसममित्यर्थः । अत्र राजशब्दो व्यवधानार्थः ॥ ६ ॥ सर्वायुधमहामात्रं सर्वशस्त्रप्रधानमिति सर्वायुधगरिष्ठम् ॥ ७ ॥ सुवर्णविकृतं सुवर्णेन विविधप्रकारेण कृतम् । अलं समर्थम् । भीषणं शत्रूणाम् ॥ ८ ॥

इति श्रीमहाभारतविषमपदविवरणे वि॰ प॰ चत्वारिंशोऽध्यायः ॥४०॥

[ लक्षा० ] नैभिः काममित्यत्र पलाशिनीं पत्रवतीम् ॥ ३ ॥ अस्माभिः पाण्डुपुत्राणामित्यस्य निविष्टानीति अन्तर्णीतणिजर्थम् ॥ ४ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ नील० ] अस्मिन्निति ॥ १ ॥ आलब्धुं स्प्रष्टुम् ॥ २ ॥

[ अर्जु० ] आलब्धुं स्प्रष्टुम् ॥२॥ शववाहं मृतवाहं वाहं व्याधिमित्यपपाठः ॥ ३ ॥

[ चतु० ] आलब्धुं स्प्रष्टुम् ॥ २ ॥ शावं मृतकसंबन्धि ॥ ३ ॥

[विरो० ] शारं शरीरं, शारं व्याधं, शरवाहं; शरं-

---

३ व. मम बाह्वोर्विनिष्पेषं । ८ ग. घ. व. गुरुं सोढुं दारुणं । क. वोढुं दारुणं च सुदर्शनम् । ग. घ. च. व. भीमस्य यमयोश्च तथोत्तर । ग. घ. व. पुस्तकेषु नात्राध्यायसमाप्तिः । इति चत्वारिंशोऽध्यायः ॥ ४० ॥

१ व. यस्मिन्वृक्षे । २ व. मन्त्रव्रतविदा सता । ३ व. कथमव्यवहार्यं व ।

बृहन्नलोवाच—

व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि ।
धनूंष्येतानि माभैस्त्वं शरीरं नात्र विद्यते ॥ ४ ॥
दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।
त्वां कथं निन्दितं कर्म कारयेयं नृपात्मज ॥ ५ ॥

वैशम्पायन उवाच—

एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ६ ॥
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन् धनञ्जयः ।
अवरोपय वृक्षाग्राद्धनूंष्येतानि माचिरम् ॥ ७ ॥
परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद ।
सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ ८ ॥
तथा संनहनान्येषां परिमुच्य समंततः ।
अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह ॥ ९ ॥
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ १० ॥
स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।
हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत ॥ ११ ॥
संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ १२ ॥

इति श्रीमहाभारते विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ४२

धनुरादीनां दिव्यरूपदर्शनेन विस्मितस्योत्तरस्य स्वरूपोपवर्णनपुरःसरं तत्तत्स्वामिविषयकः प्रश्नः ॥ १ ॥

उत्तर उवाच—

बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः ।
सहस्रकोटि सौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ १ ॥
वारणा यत्र सौवर्णाः पृष्ठे भासन्ति दंशिताः ।
सुपार्श्वं सुग्रहं चैव कस्यैतद्धनुरुत्तमम् ॥ २ ॥

---

वाहम्। विभक्त्यलोप आर्षः । शरीरमिति नाशात् मायिकत्वाद्वा ॥ ३ ॥

[ नील० ] दायादं पुत्रम् ॥ ५ ॥ अपहृत्य वृक्षादध आनीय ॥ ८ ॥ संनहनानि धनुषां बन्धनानि ॥ ९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[अर्जु०] मा भैः मा भैषीः ॥४॥ पङ्कमवतार्य ॥८॥ ततः सन्नहनान्येषाम् एषां धनुषां सन्नहनानि बन्धनानि ॥ ९ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[चतु०] भोगिनां सर्पाणाम् ॥ ११ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[सर्व०] दायादं पुत्रम् ॥ ५ ॥ संनहनं धनुषां बन्धनम् ॥ ९ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[ विरो० ] संनहनानि बन्धनानि ॥ ९ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[ विष० ] शववाहं मृतवाहम् । शववाहस्य त्रिरात्रमाशौचमशुचित्वात्कथं शस्त्रग्रहणे युद्धकर्मणि ऐन्द्रादिमन्त्रजपेऽधिकारी स्यामित्यर्थः ॥ ३ ॥ सन्नहनानि वासांसि मदन(?)कर्पटानीत्यर्थः ॥ ९ ॥ संस्पृश्येति पाणिभ्यां च नमस्कृत्याङ्गुल्यग्रेण दर्शयन् ॥ १२ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. एकचत्वारिंशोऽध्यायः ॥४१॥

[ नील० ] कस्य जातरूपस्य जातकीर्तेः । 'रूपं स्वभावे सौन्दर्ये नालोकपशुवृन्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ' इति मेदिनी । बिन्दवः सौवर्णा इति संबन्धः । सहस्रे सहस्वत्यौ बलवत्यौ दीप्तिमत्यौ वा कोटी प्रान्तौ यस्य तत् सहस्रकोटि । 'सहो बले ज्योतिषि च ' इति मेदिनी । सहस्शब्दान्मत्वर्थीयो रप्रत्ययः॥१॥ दंशिताः भासमानाः(?)सुग्रहं गृह्यतेऽस्मिन्निति ग्रहो मध्यम् ॥ २ ॥

[ अर्जु० ] बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः । सहस्रकोट्यः सौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ यत्र धनुषि जातरूपस्य सुवर्णस्य बिन्दवो निपातिताः अर्पिताः एतद्धनुः कस्येति संबन्धः न केवलं बिन्दवः सहस्राणि कोट्यो यत्रार्पिताः कोटिशब्दोऽत्रास्रिवाची । सहस्राणि च

---

४ व. मा भैषीः शरीरं । ५ ग. जातं यशस्विनम् । ६ व. प्रस्कद्य कुण्डली । ७ ग. घ. व. ष्येतानि मा बिभेः । ११ घ. व. °नामिव जृम्भिणाम् । इति एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
१ व. सहस्रशोऽथ सौ°; सहस्रकोष्ठाः सौवर्णाः ।

तपनीयस्य शुद्धस्य पृष्ठे यस्येन्द्रगोपकाः ।
पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम् ॥ ३ ॥
सूर्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः ।
तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम् ॥ ४ ॥
शलभा यत्र सौवर्णास्तपनीयविभूषिताः ।
सुवर्णमणिचित्रं च कस्यैतद्धनुरुत्तमम् ॥ ५ ॥
इमे च कस्य नाराचाः साहस्रा लोमवाहिनः ।
समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये ॥ ६ ॥
विपाठाः पृथवः कस्य गार्ध्रपत्राः शिलाशिताः ।
हारिद्रवर्णाः सुमुखाः पीताः सर्वायसाः शराः ॥ ७ ॥

तानि कोट्योऽग्रयश्चेति विग्रहः । 'आर्त्युत्कर्षास्त्रयः कोट्यः' इत्यमरः । किंभूताः सहस्रकोट्य इत्याह—सौवर्णाः सुवर्णनिर्मिताः । सुवर्णलक्षणं च 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश' इति । सौवर्णविशेषा वा । सहस्रकोटिसंख्याका बिन्दव इति व्याख्या न मनोहरा असंभाव्यत्वात् । बहुपरं वा । सहस्रकोटीरिति पाठे प्रथमार्थे द्वितीया छान्दसी ॥ १ ॥ वारणा गजमाला । दंशिता अर्पिता ॥२॥

[ चतु० ] निपातिताः निवेशिताः । सहस्रसङ्ख्याः । कोट्यः कोणाः येषा बिन्दूनाम् ॥ १ ॥ ग्रहो मुष्टिः ॥ २ ॥

[ सर्व० ] जातरूपं सुवर्णम् । सहस्रे सहस्त्रयौ कोटी प्रान्तौ यस्य ॥ १ ॥ दंशिताः भासमानाः गृह्यतेऽस्मिन्निति ग्रहो मध्यम् ॥ २ ॥

[ विरो० ] कोट्यः २ कोटी ( दी ) अप्रमार्थे(?)॥१॥ सुग्रहं सुमुष्टिम् ॥ २ ॥

[ नील० ] तपनीयस्य सुवर्णस्य इन्द्रगोपकाः कीटविशेषाः रक्तपीतभास्वरवर्णाः ॥ ३ ॥ सौवर्णाः शलभाः सुवर्णः कृष्णागरुवर्णं द्रव्यं 'मीना' इति संज्ञितं तन्मयाः तेषु हि नीलवर्णेषु तपनीयाख्यस्वर्णभूषणानि शोभन्ते । 'सुवर्णश्च सुवर्णा च कृष्णागरुमखान्तरे' इति विश्वः । सुवर्णमणयः स्वर्णबिन्दवः शोभनवर्णमणिखचितत्वाद्वा सुवर्णमणिचित्रत्वम् ॥ ५ ॥ साहस्राः सहस्रशः संख्याताः लोमवाहिनः पत्रवन्तः । लोमच्छेदिन इत्यन्ये । उपासङ्गे निषङ्गे ॥ ६ ॥ विपाठाः स्थूलदण्डा बाणविशेषाः । 'विपाठः स्थूलदण्डः स्यात्' इति कल्पद्रुः । गार्ध्रपत्राः गृध्रपत्रवाहिनः । शिलाशिताः शिलायां तीक्ष्णीकृताः । पीताः कर्मारेण तेजनजलं पायिताः । सर्वायसाः केवलं लोहमयाः । काष्ठदण्डरहिता इत्यर्थः ॥ ७ ॥

[ अर्जु० ] तपनीयस्य सुवर्णस्य इन्द्रगोपकाः 'कारण्डिया' इति यस्य प्रसिद्धिः ॥ ३ ॥ सुवर्णमणिरचितं शोभनवर्णमणिरचितम् ॥ ५ ॥ लोमवाहिनो लोमच्छिदः । कलधौतं रूप्यं मन्दधौतेत्यपपाठः उपासङ्गे तूणीरे ॥ ६ ॥ शिलाशिताः शिलायां तीक्ष्णीकृताः ॥ ७ ॥

[ चतु० ] विभक्ताः विनिर्मिताः ॥ ३ ॥ लोमवाहिनः लोमच्छेदिनः नाराचाः नाराचजातयः । कुन्दे तक्षणयन्त्रे धौतान्यग्राणि येषां ते कुन्दधौताग्राः ॥ ६ ॥

[ सर्व० ] तपनीयं सुवर्णम् इन्द्रगोपः रक्तवर्णः कीटः ॥ ३ ॥ सौवर्णाः शलभाः । कृष्णागुरुवर्णं द्रव्यं मीना इति प्रसिद्धं तन्मयाः ॥ ५ ॥ नाराचाः वाणाः लोमवाहिनः लोमच्छेदिनः उपासङ्गे तूणीरे ॥ ६ ॥ विपाठाः स्थूलदण्डाः गार्ध्रपत्राः गृध्रपत्रवाहिनः शिलायां शिताः तीक्ष्णीकृताः पीताः तेजनजलं पायिताः सर्वायसाः काष्ठदण्डरहिता इत्यर्थः ॥ ७ ॥

[ विरो० ] दंशिताः लग्नाः ॥ ४ ॥ तपनीयेन सुवर्णविशेषेण विचित्रिताः ॥ ५ ॥ लोमवाहिनः लोमच्छेदिनः ( च ) कल ( अ ) कुन्द ( च ) । कलधौतं रूपहेम्नोः । कुन्देन तक्षकास्त्रेण धौतं निर्मलमग्रं येषाम् ॥ ६ ॥

[ विष० ] जातरूपस्य सुवर्णस्य 'जाते कुमारे संभूतं जातरूपमिति स्मृतम्' । सौवर्णाः सुवर्णविशेषखचिताः । 'जाम्बूनदं भवेद्रक्तं शातकुम्भं च पिञ्जरम्' । सुवर्णमणिचित्रं शोभनवर्णमणिचित्रम् ॥ ५ ॥ लोमवाहिनः लोमच्छिदः क्षुरधारा इति यावत् उपासङ्गे तूणीरे ॥ ६ ॥ विपाठाः बाणविशेषाः पृथवः स्थूलाः । सुनसस्तीक्ष्णाग्राः सुधाराः पीताः पानीयपायिताः सर्वायसाः शराः । तथा चोक्तं शास्त्रान्तरे । 'अपामार्गरसेनैव यानि शस्त्राणि लेपयेत् । जायन्ते तानि संग्रामे वज्रसाराणि निश्चितम्' । इति शस्त्ररक्षापानम् । 'गृहीता मक्षिका नीला षड्बिन्दुकीटकान्विता । शस्त्रलेपेन घातादौ जायन्ते कीटका व्रणाः कृत्तिका वा विशाखा वा भौमवारेण संयुता । तद्दिने घटितं शस्त्रं संग्रामे जयदायकम् । कृष्णसर्पशिरांस्यष्टौ विषं पञ्चपलानि च । छुच्छुन्दरीवसाष्टौ च कपिकच्छुपलाष्टकम् । कृष्णस्य वृश्चिकस्याष्टौ तथा च गृहगोधिका । द्वौ पलौ हरितालस्य कृकलासरसः पलम् । लाङ्गलीकरवीराभ्यां त्रीणि त्रीणि तथैव च । एतेषां शोषितं कल्कं भल्लातकसमन्वितम् । सर्वेषां चैव शस्त्राणां लेपोऽयं समुदाहृतः । विद्धास्तु तैर्ये मनुष्यास्त्यजन्ते जीवितं ध्रुवम् । यद्वा आयसाः पीताः अयः सुवर्णं तद्विकृतत्वाद्धरिद्रवर्णाः ॥ ७ ॥

[ लक्षा० ] कस्येमे क्षुरनाराचाः सहस्रं लोमवाहिनः ।

६ व. °चाः सहस्रं । व. समेताः कलधौताग्राः; च. ङ. कुन्दधौताग्राः ।

७ क. कस्य गृध्रपत्रार्धवाजिताः; घ. सान्द्रपत्राः शिलाशिताः ।

**कस्यायमसितश्चापः पञ्चशार्दूललक्षणः ।**
**वराहकर्णव्यामिश्रान् शरान् धारयते दश ॥ ८ ॥**
**कस्येमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।**
**शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः ॥ ९ ॥**
**कस्येमे शुकपत्राभैः पूर्वैरर्धैः सुवाससः ।**
**उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः ॥ १० ॥**
**गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ।**

प्रत्यक्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये । इत्यत्र लोमवाहिनः पुङ्खे पत्ररूपपक्षिरोमधराः प्रत्यक्ताः प्रत्येकं तैलार्द्राः । उपासङ्गे 'तूणोपासङ्गतूणीरनिषङ्गाः' इत्यमरः । तूणीरे ॥ ६ ॥

नील० ] वराहकर्णाकारैः शल्यैः व्यामिश्रान् युक्तान् धारयते शरान् चित्ररूपानेवेति भावः ॥ ८ ॥ चन्द्रबिम्बार्धवद्दर्शनं येषां अर्धचन्द्राकारा इत्यर्थः ॥ ९ ॥ पूर्वैरुपरिस्थैरर्धैः उपलक्षिताः सुवाससः सुपुङ्खा बाणा एव उत्तरैरग्रभागैर्हेमपुङ्खैः सुवर्णधाराचित्रितैः ॥ १० ॥ शिली भेकी पृष्ठे चित्ररूपेण यस्य परिचर्यार्थं शिलीमुखो भेक्या मुखमिव मुखं यस्य सायकः खड्गः । 'शरे खड्गे च सायकः' इत्यमरः ॥ ११ ॥ वैयाघ्रकोशे व्याघ्रचर्मकोशे । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । सुफलः शोभनभल्लिकः । 'फलं शस्त्राग्रे व्युष्टिलाभयोः' इति विश्वः । किङ्किणीयुक्तः सायकः ॥ १२ ॥ गव्ये गोचर्मजे ॥ १३ ॥ नैषध्यो निषधदेशजः पाञ्चनखे अजचर्मजे । 'पञ्चनखोऽजे कूर्मे' इति विश्वः । हेमविग्रहः सुवर्णेनालङ्कृतदेहः ॥ १४ ॥

[ अर्जु० ] सर्वपारशवाः सर्वायसाः 'शूद्रायां विप्रतनये शस्त्रे पारशवो मतः' इत्यमरः । चन्द्रबिम्बार्धाः अर्धचन्द्राः ॥ ९ ॥ सुवाससः सुपक्षाः ॥ १० ॥ कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः । शिलीपृष्ठनामा सायकः । खड्गश्च भ्रमरस्येव मुखं यस्य स तथा ॥ ११ ॥ त्सरुर्मुष्टिः सुफलः सुपत्तिकः । कोषः प्रतिवारिकः । किंकिणीसायकः खड्गविशेषः ॥ १२ ॥ हेमत्सरुः सुवर्णमुष्टिः गव्ये गोचर्ममये ॥१३॥ नैषध्यो निषधदेशोद्भवः यद्वा निषधः कठिनः तस्य कार्यो नैषध्यः 'निषधः कठिने देशे' इति मेदिनिः । भारसाधनः भारं साधयतीति । पाञ्चनखे पञ्चनखचर्मकोषे व्याघ्रचर्मकोषे वा । हेमविग्रहः हेमचितो विग्रहो यस्य ॥ १४ ॥

[ चतु० ] असितावापः कृष्णतूणः । वराहकर्णः

**कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः॥११॥**
**वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान् ।**
**सुफलश्चित्रकोशश्च किङ्किणीसायको महान् ॥ १२ ॥**
**कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्मलः ।**
**कस्यायं विमलः खड्गो गव्ये कोशे समर्पितः ॥१३॥**
**हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ।**
**कस्य पाञ्चनखे कोशे सायको हेमविग्रहः ॥ १४ ॥**

शरविशेषः । दश दशसङ्ख्याकान् ॥ ८ ॥ सर्वपारसवाः सर्वायसाः ॥ ९ ॥ सुवाससः सुपक्षाः ॥ १० ॥ सायकः खड्गः ॥ ११ ॥ गव्ये गोचर्मनिर्मिते ॥ १३ ॥ नैषध्यो निषधदेशीयलोहभवः पाञ्चनखे गोधाचर्मनिर्मिते भारसाधनः क्रियातिशयक्षमः ॥ १४ ॥

[ सर्व० ] वराहकर्णाकारैः शल्यैर्युक्तान् ॥८॥ सुवाससः सुपुङ्खाः । उत्तरैरग्रभागैः ॥ १० ॥ शिली भेकी पृष्ठे चित्ररूपेण यस्य, तस्या मुखमिव मुखं यस्य ॥११॥ व्याघ्रचर्मकोशे त्सरुः खड्गमुष्टिः । फलं शस्त्राग्रं किङ्किणी क्षुद्रघण्टिका ॥ १२ ॥ गव्ये गोचर्मजे ॥ १३ ॥ नैषध्यो निषधदेशजः । पाञ्चनखे अजचर्मजे । विग्रहो देहः ॥ १४ ॥

[ विरा० ] असितावापः कृष्णतूणः । वराहकर्णश्चित्रविशेषः । शतान्दश सहस्रम् ॥ ८ ॥ कङ्कबर्हिणवाससः । सर्वपारसवाः शराः ( च ) शुकपत्राभैः; चन्द्रबिम्बार्धाः; अर्धचन्द्राः (आ) सुवाससः सुपक्षाः ॥ १० ॥ शिलापृष्ठः; शिलीपृष्ठः ( दे ) शिली गण्डूपदी तद्वत् पृष्ठं मुखं यस्य ॥ ११ ॥ सुफलः सुधारः(च)किङ्किणीयुक्तः सायकः यद्वा किङ्किणी लोहविशेषः ॥ १२॥ नैषध्यो निषधभवः ॥१४॥

[ विष० ] असितः कृष्णः आवापो निषङ्गः किंविशिष्टः पञ्च शार्दूललक्षणानि यस्मिन्स पञ्चशार्दूलचिह्नः वराहः सूकरः तस्य कर्णसदृशफलाः क्षुरप्रा बाणास्तैर्मिश्रान् मिलितान् ॥ ८ ॥ शतान् धारयते दश, यस्मिन्निषुधौ सहस्रं बाणाः सन्ति । दीर्घाः प्रलम्बाः चन्द्रबिम्बार्धदर्शनाः अर्धचन्द्राग्राः ॥ ९ ॥ शुकपत्राभैः नीलवर्णैः सुवाससः सुपक्षाच्छादिताः पीतैः पायितैः । उत्तरैरर्धैरायसैः । यथाह 'आर्कं पयो हुडविषाणमषीसमेतं पारावताखुशकृता च युतः प्रलेपः । शस्त्रस्य तैलमथितस्य ततोऽस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥१॥' पीतवर्णैर्वा १०॥ हेमचित्रः त्सरुर्मुष्टिर्यस्य सः । किङ्किणीयुक्तः सायकः

८ व. °यमसितावापः । व. शतान्धारयते । ९ ज. ङ. दीर्घाः सर्वपारशवाः पराः । १० व. कस्येमे शतपत्राभाः । व. पुङ्खैः शिलाशिताः । ११ घ. व. गुरुभारसहः कस्य सायकोऽयं शिलीमुखः । हेमपुङ्खो गार्द्धपत्रः शात्रवाणां भयंकरः । १३ व. खड्गः परमनिर्व्रणः । १४ व. सायको हेमभूषितः; हेमविश्रुतः॥

प्रमाणरूपसंपन्नः पीत आकाशसन्निभः ।
कस्य हेममये कोशे सुतप्ते पावकप्रभे ॥ १५ ॥
निस्त्रिंशोऽयं गुरुः पीतः सायकः परनिर्व्रणः ।
कस्यायमसितः खड्गो हेमबिन्दुभिरावृतः ॥ १६ ॥
आशीविषसमस्पर्शः परकायप्रभेदनः ।
गुरुभारसहो दिव्यः सपत्नानां भयप्रदः ॥ १७ ॥
निर्दिशस्व यथातत्त्वं मया पृष्टा बृहन्नले ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ १८ ॥

इति श्रीमहाभारते विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रयश्चत्वारिंशोऽध्यायः ४३

अर्जुनेन तत्तद्धनुरादेः शस्त्रस्य स्वरूपादिकमुपवर्ण्य स्वामिनिरूपण ॥ १ ॥

बृहन्नलोवाच—
यन्मां पूर्वमिहापृच्छः शत्रुसेनापहारिणम् ।
गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः ॥ १ ॥
सर्वायुधमहामात्रं शातकुम्भपरिष्कृतम् ।
एतत्तदर्जुनस्यासीद्गाण्डीवं वरमायुधम् ॥ २ ॥

---

खड्गः ॥ १२ ॥ नैषध्यः निषधदेशभवः शत्रुनिषेधको वा । नैषङ्ग्य इति पाठे निषिद्धः सङ्गः स्खलनं यस्य सः नैषङ्ग्यः । भारसाधनो गिरीणामपि भेत्ता । पाञ्चनखे कोशे गोधाकोशे हेमभूषितः सुवर्णविभूषितः ॥ १४ ॥

[ नील० ] आकाशसन्निभः कृष्णभास्वरः ॥ १५ ॥ निस्त्रिंशः त्रिंशतोऽङ्गुलिभ्यो निर्गतः त्रिंशदङ्गुलाधिकः सायकः खड्गः । परेषां शस्त्रेण निर्गतो व्रणो यस्य परानभिभूतः । शिक्य इति पाठे पुरुषद्वयेनोह्यमाना साङ्गीति प्रसिद्धा तद्योग्यः ॥ १६ ॥

इति श्री नैलकण्ठीये भारतभावदीपे विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ अर्जु० ] हेममये हेमबहुले सुतप्ते शोभनतापघटिते ॥ १५ ॥ शैक्यो लोहविशेषः यद्वा पुरुषद्वयोह्यमानं शैक्यं विहङ्गिका भारयष्टिः तदवलम्बि शैक्यमिति कोषः ॥१६॥ निर्दिशस्व कथयस्व ॥ १८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ चतु० ] शैक्यः विशुद्धलोहमयः ॥ १६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ सर्व० ] शिक्य इति पाठे पुरुषद्वयेनोह्यमाना सांगीति प्रसिद्धा तद्योग्यः ॥ १६

इति श्रीसर्व० भारतार्थप्रकाशे वि० द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ विरो० ] सुतप्ते शोभनं तप्तं तेजो यत्र ॥१५॥ शैक्यः लोहविशेषजनितः, शैक्ष्यः शिक्षया ग्राह्यः ॥ ६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ विष० ] प्रमाणरूपसंपन्नः । 'क्षारं कदल्या मथितेन युक्तं दिनोषिते पायितमायसं हि तत् । सम्यक् शितं चाश्मनि नैति भङ्गं न चास्य लोहेष्वपि तस्य(?)कौण्ठ्यम् ।' तथा चोक्तम् 'अङ्गुलशतार्धमुत्तमजनः स्यात्पञ्चविंशतिः खड्गः । अङ्गुलमानाज्ज्ञेयो व्रणोऽशुभो विषमपर्वस्थः ॥ १ ॥ गोजिह्वासंस्थानं नीलोत्पलवंशपत्रसदृशं च । करवीरपत्रसदृशं शूलाग्राणि च मण्डलाग्राणि । पीतः पायित इति । 'इदमौशनसं च शस्त्रपानं रुधिरेण श्रियमिच्छतः प्रदीप्ताम् । हविषा गुणवत्सुताभिलिप्सोः सलिलेनाक्षयमिच्छतश्च वित्तम् । वडवोष्ट्रकरेणुदुग्धपानं यदि पापेन समीहतेऽर्थसिद्धिम् । झषपित्तमृगाश्ववस्तदुग्धैः करिहस्तच्छिदये सता(वा)लगर्भैः ।' एवं प्रकारेण पीतः । हेममये सुवर्णबहुले । सुतप्ते शोभनतापघटिते ॥ १५ ॥ सैक्यः सेचनं सेकः सेकस्यायं सैक्यः । आयसरसं गालयित्वा भरित इत्यर्थः ॥ १६ ॥

इति श्रीमहाभारतविषमपदविवरणे विरा० द्विचत्वारिंशोऽध्यायः ॥४२॥

[लक्षा०] कस्यायमसिरावास इत्यत्र आवासः आ समन्तात् कोशे आच्छादनं यस्य सोऽयमावासः ॥ १६ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[नील०] अपहरतीत्यपहारी कालः सोऽस्त्यस्मिन्नित्यपहारिणम् । पामादित्वान्मत्वर्थीयो नप्रत्ययः । कालरूपीत्यर्थः ॥ १ ॥

[ विरो० ] कस्य पार्थस्य तत्राह—एतदिति ॥ २ ॥

[ विष० ] महामात्रं महती मात्रा प्रमाणं यस्य सर्वधनुर्भ्योऽधिकम् । शातकुम्भपरिष्कृतम् सुवर्णघटितम् । 'गाण्डीवगाण्डिवौ पार्थकोदण्डे कार्मुकेऽपि च' । गण्डः

---

१६ व. गुरुः सैक्यः पीतः परमनिर्व्रणः; घ. व. सैक्यः परमनिर्व्रणः । इति द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

१ व. लोके सुविदितं ।

यत्तच्छतसहस्रेण संमितं राष्ट्रवर्द्धनम् ।
येन देवान्मनुष्यांश्च पार्थो विजयते मृधे ॥ ३ ॥
चित्रमुच्चावचैर्वर्णैः श्लक्ष्णमायतमव्रणम् ।
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४ ॥
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ।
ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥ ५ ॥
त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्चशतं राजा तथैव वरुणः शतम् ।
पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ॥ ६ ॥

वदनैकदेशो तस्माज्जातं गाण्डीवम् । तथा च स्कन्दपुराणे देवासुरे प्रह्लादनारायणयुद्धे—नरोऽपि च धनुर्गृह्य महिषासुरगण्डजम् । गाण्डीवं लोकविख्यातं वराहमिव पर्वतम् । ' इति । नरनारायणप्रह्लादयुद्धे–' महिषासुरस्य शृङ्गाज्जातं शार्ङ्गं नारायणं धनुः । पिनाकमपिनद्धत्वात्सर्वेशस्त्रमहत्तरम् । ' णह बन्धने । पिनद्धं बद्धं पिनाकम् । सृष्ट्यादौ त्रिणि धनूंषि कृतानीत्यर्थः ॥ २ ॥

[ नील० ] धनुषां शतसहस्रेण लक्षेण संमितम् ॥ ३ ॥ त्रीणि वर्षाणि पञ्चशतं वर्षाणि प्रजापतिरधारयदिति संबन्धः । अत्र ब्रह्मादीनां वर्षाणि देवमानेनैव ज्ञेयानि यो ह्यस्माकं सौरः संवत्सरः स तेषामेकं दिनमिति शास्त्रप्रसिद्धम् । पार्थः पञ्च च षष्टिं चेत्यत्र तु वर्षशब्दो वृष्टिपरः । तथा च संवत्सरे वर्षद्वयं जायते । तथाहि एकेन वर्षेण तृप्तः शरदि व्रीह्याग्रयणं करोति अपरेण तृप्तो वसन्ते यवाग्रयणं करोति । तथा चाग्रयणं प्रकृत्य आश्वलायनः श्रुतिमुदाहरति । "अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजते" इति । तथान्यत्रापि तदेव प्रकृत्य श्रुतं " व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताथ यवेभ्यो यवैरिष्ट्वा यवैरेव यजेताथ व्रीहिभ्यः " इति । एवं चैकस्मिन् संवत्सरे कर्कायनाद्येकं वर्षमपरं मकरायनादीति द्वे वर्षे । ततश्च सार्द्धद्वात्रिंशता संवत्सरैः पञ्चषष्टिर्वर्षाणि भवन्तीति युक्तमुक्तं पार्थः पञ्च च षष्टिं च वर्षाणि एतद्धनुर्दधारेति । अन्ये तु अतीतमनागतं च कालमेकीकृत्य पञ्चषष्टिसंवत्सरं धनुर्धारणं वर्णयन्ति । ' वर्षोऽस्त्री भारतादौ तु जम्बूद्वीपाब्दवृष्टिषु ' इति मेदिनी । 'वृष्टिर्वर्षम् ' इत्यमरश्च । तत्र प्राचां मतेऽधारयदिति भूतकालानुपपत्तिः । वक्तुः कदाचिदायुर्ज्ञानकल्पनेऽपि प्रतिपत्तुः पारोक्ष्येणार्जुनवयोविदोऽप्रतिपत्तिश्चेति विचारणीयम् । अस्माकं तु गाण्डीवलाभानन्तरं गतेषु सार्धद्वात्रिंशद्वर्षेषु त्रयोदश वर्षाणि वनवासे । ब्राह्मणकार्यार्थमायुधागारं प्रविष्टस्यार्जुनस्य द्रौपदीधर्मराजयोः सहासनकालेऽनुप्रवेशनिमित्ते द्वादशवर्षाणि इति पञ्चविंशतिर्गतानि । अन्यान्यपि दिग्विजयराजसूयराज्यकरणादिकाले प्रागेव सार्धसप्तवर्षाणि गतानीति समुन्नेयम् ॥ ६ ॥

[ अर्जु० ] ' एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् । ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥ त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च । सोमः पञ्चशतं राजा तथैव वरुणः शतम् ॥ पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ।' ततोऽनन्तरं ब्रह्मणोऽनन्तरमित्यर्थः । त्रीणि वर्षाणि मिलित्वा । पञ्चषष्टिवर्षाणि ॥ ५–६ ॥

[ चतु० ] त्रीणि पञ्चशतमशीतिं च पञ्च चेत्यष्टत्रिंशतोत्तरं (?चेत्यत्राष्टोत्तरं) शतमित्यर्थः । पार्थः पञ्चषष्टिं च नरावस्थायामिति बोध्यम् । अतीतानागतकालापेक्षयेति केचित् । तदसंगतम् । अभिमन्युजन्मानन्तरभवे खाण्डवदाहे अधिगतधनुषो गोग्रहसमये पञ्चदशैव वर्षाणि भवन्ति ततश्च कतिपयदिनानन्तरभाविनि भारतयुद्धे षोडशाब्दे तस्याभिमन्योर्वधस्य वर्णनीयत्वात् । तदेव ( ?तदूर्ध्वं ) षट्त्रिंशदेव वर्षाण्यतीतानि ततः कुतः पञ्चषष्टिवर्षसंभवः ॥ ६ ॥

[ सर्व० ] समाः वर्षाणि ॥ ४ ॥ त्रीणि वर्षाणि पञ्चशतं च वर्षाणि प्रजापतिरधारयत् । पार्थः पञ्च चेत्यत्र वर्षपदं वृष्टिपरं तेनैकस्मिन्संवत्सरे कर्कायनाद्येकं वर्षं मकरायनादि द्वितीयमिति वर्षद्वयं भवति तथा च सार्द्धद्वात्रिंशता संवत्सरैः पञ्चषष्टिर्वर्षाणि भवन्तीत्यर्थः ॥ ६ ॥

[ दुर्घ० ] सोमः पञ्चशतं राजा तथैव वरुणः शतम् । पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः । गोग्रहणे शमीवृक्षाद्गाण्डीवमवतार्योत्तरं विराटसुतमाहार्जुनः । इदं धनुः सोमो राजा पञ्चशतवर्षाणि धृतवान् इत्यध्याहार्यं, वरुणः शतं वर्षाणि धृतवान् । पार्थः पृथासूनुः श्वेतवाहनः अर्जुनः पञ्चषष्टिवर्षाणि धृतवान् । ननु तदा पार्थस्य ऊनत्रिंशद्वर्षाणि वर्तन्ते स्म कथं पञ्चषष्टिमिति । स्वजीवितकालापेक्षयेदं वचनम् । पञ्चषष्टिवर्षाणि किल तस्य जीवितकाल इत्यागमादधिगतम् । तत्रोनत्रिंशद्वर्षाणि गतानि षट्त्रिंशच्च अवशिष्टानि सन्ति । अतो यावज्जीवितकालापेक्षया पञ्चषष्टिवचनमिति । एतावन्तं कालं पार्थो धरिष्यति ॥ ६ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

३ व. ज. विषहते मृधि । ४ श्लोकमध्येऽधिकं ज. अलं भारं गुरुं सोढुं दारुणं चारुदर्शनम् । ५ व. वर्षसहस्राणि । घ. मेनेदं मनुरष्टोत्तरं शतम् ।
६ व. उमापतिश्चतुःषष्टिं शक्रोऽशीतिं च पञ्च च । क. सोमः पञ्चसहस्राणि ।

महावीर्यं महादिव्यमेतत्तद्धनुरुत्तमम् ।
एतत्पार्थमनुप्राप्तं वरुणाच्चारुदर्शनम् ॥ ७ ॥
पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ।
सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः ।
येन पार्थोऽजयत्कृत्स्नां दिशं प्राचीं परन्तप ॥ ८ ॥
इन्द्रगोपकचित्रं च यदेतच्चारुदर्शनम् ।
राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमम् ॥ ९ ॥
सूर्या यस्मिंस्तु सौवर्णाः प्रकाशन्ते प्रकाशिनः ।
तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ॥ १० ॥
शलभा यत्र सौवर्णास्तपनीयविचित्रिताः ।
एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ॥ ११ ॥
ये त्विमे क्षुरसंकाशाः सहस्रा लोमवाहिनः ।
एतेऽर्जुनस्य वैराटे शराः सर्पविषोपमाः ॥ १२ ॥
एते ज्वलन्तः संग्रामे तेजसा शीघ्रगामिनः ।
भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ॥ १३ ॥
ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।
एते भीमस्य निशिता रिपुक्षयकराः शराः ॥ १४ ॥
हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः ।
नकुलस्य कलापोऽयं पञ्चशार्दूललक्षणः ॥ १५ ॥
येनासौ व्यजयत्कृत्स्नां प्रतीचीं दिशमाहवे ।
कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ॥ १६ ॥
येत्विमे भास्कराकाराः सर्वपारसवाः शराः ।
एते चित्रक्रियोपेताः सहदेवस्य धीमतः ॥ १७ ॥
ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः ।
हेमपुङ्खास्त्रिपर्वाणो राज्ञ एते महाशराः ॥ १८ ॥
यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।
अर्जुनस्यैष संग्रामे गुरुभारसहो दृढः ॥ १९ ॥
वैयाघ्रकोशः सुमहान् भीमसेनस्य सायकः ।
गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ॥ २० ॥
सुफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः ।
निस्त्रिंशः कौरवस्यैष धर्मराजस्य धीमतः ॥ २१ ॥
यस्तु पाञ्चनखे कोशे निहितश्चित्रयोधने ।
नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः ॥ २२ ॥
यस्त्वयं विपुलः खड्गो गव्ये कोशे समर्पितः ।
सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम् ॥ २३ ॥

इति श्रीमहाभारते विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[विरो०] प्रजापतिर्मनुः । पञ्च षष्टिं चेति भाविधारणापेक्षया ॥ ६ ॥

[विष०] वर्षसहस्राणि कल्पावसानं यावत् । त्रीणि पञ्च शतं नवशतानि प्रजापतिर्मनुर्दध्रे ॥ ५ ॥ एकोनत्रिंशदतिक्रान्तानि भावीनि षट्त्रिंशत् ॥ ६ ॥

[लक्षा० ] प्रजापतिरधारयदित्यत्र प्रजापतिः स्वायंभुवो मनुः ॥ ५ ॥

[ नील० ] सहस्राः तेजस्विनो दृढाः शहस्रशः संमिता वा ॥ १२ ॥ व्यूहतः क्षिपतः ॥ १३ ॥ सर्वपारसवाः सर्वं च तत्पारं परसमूहं सुवते हिंसन्ति ते सर्वपारसवाः सर्वशत्रुसमूहनाशकराः ॥ १७ ॥ चित्रयोधने विचित्रयुद्धनिमित्तं निहितः पालितः ॥ २२ ॥

इति नैलकण्ठीये भारतभावदीपे वि० प० त्रिचत्वारिंशोऽध्यायः ॥४३॥

[अर्जु० ] सर्पविषोपमाः सर्पाकाराः विषवत्तीव्राश्च ॥ १२ ॥ व्यूहतः घ्नतः ॥ १३ ॥ कलापः तूणः । पञ्चशार्दूललक्षणं व्याघ्र एव लक्षणं चिह्नं यस्य ॥ १५ ॥ सर्वपारशवाः सर्वलौहाः सर्वच्छेदिनो वा । चित्रक्रियोपेताः चित्रक्रियायोग्याः ॥ १७ ॥ चित्रसीवने चित्रं सीवनं सूच्या ग्रथनं तन्तुसंतानो वा यस्मिन् कोषे ॥ २२ ॥

इति श्रीमहा० मर्जु० विरा० त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[चतु०] जातरूपं सुवर्णं तन्मयो ग्रहो मुष्टिर्यस्य ॥ ८ ॥ सर्पविषोपमाः सर्पोपमाः सर्पाकाराः विषोपमाः विषवत्तीव्राः ॥ १२ ॥ चन्द्रबिम्बार्धदर्शनाः अर्धचन्द्राकाराः ॥ १४ ॥ कलापः तूणः ॥ १५ ॥ चित्रक्रियोपेताः चित्ररचनायुक्ताः विचित्रकर्मयोग्या वा ॥ १७ ॥

इति श्रीचतु महाभारतटीकायां वि० त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[सर्व०] कलापः तूणीरः ॥ १५ ॥ सर्वं च तत्पारं परसमूहं सुवते हिंसति ते सर्वपारसवाः ॥ १७ ॥ चित्रयोधने विचित्रयुद्धनिमित्तं निहितः पालितः ॥ २२ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि० त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ विरो० ] से (? सी)वनं स्यूतिः ॥ २२ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

७ घ. व. एतद्धनुरनुत्तमम् । व. एतन्मामुपसंप्राप्तं; ज. एवं मामनुसंप्राप्तं । व. दर्शनात् । ८ घ. व. जातरूपपरिष्कृतम् । ९ दे. त्र. ज. चारुविग्रहं । १० च. व. अ. दे. प्रभासन्ते प्रभासिनः । १२ व. साहस्रा लोम°; सहस्रं । २२ निहितश्चित्रसाधनः । ज. काशे हेमचित्रत्सरुर्महान् । २३ घ. व. यस्त्वयं पिङ्गलः खड्गो । ध. °रय निस्त्रिंशः सर्वभारसहो दृढः । इति त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ४४

अर्जुनेनोत्तरं प्रति कङ्कादीनां युधिष्ठिरत्वादिकथनं तत्प्रत्ययार्थं स्वीयनामदशकनिरुक्तिकथनं च ॥ १ ॥

**उत्तर उवाच—**

सुवर्णविकृतानीमान्यायुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ १ ॥
क नु स्विदर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः ।
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ॥ २ ॥
सर्वे एव महात्मानः सर्वामित्रविनाशनाः ।
राज्यमक्षैः पराकीर्य न श्रूयन्ते कथञ्चन ॥ ३ ॥
द्रौपदी क च पाञ्चाली स्त्रीरत्नमिति विश्रुता ।
जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ॥ ४ ॥

**अर्जुन उवाच—**

अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः ।
बल्लवो भीमसेनस्तु पितुस्ते रसपाचकः ॥ ५ ॥
अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले ।
सैरन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः॥ ६ ॥

**उत्तर उवाच—**

दश पार्थस्य नामानि यानि पूर्वं श्रुतानि मे ।
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ ७ ॥

**अर्जुन उवाच—**

हन्त तेऽहं समाचक्षे दश नामानि यानि मे ।
वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ॥८॥
एकाग्रमानसो भूत्वा शृणु सर्वं समाहितः ।
अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ॥९॥

**उत्तर उवाच—**

केनासि विजयो नाम केनासि श्वेतवाहनः ।
किरीटी नाम केनासि सव्यसाची कथं भवान् ॥१०॥
अर्जुनः फाल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च ।
धनंजयश्च केनासि ब्रूहि तन्मम तत्त्वतः ॥ ११ ॥
श्रुता मे तस्य वीरस्य केवला नामहेतवः ।
तत्सर्वं यदि मे ब्रूयाः श्रद्दध्यां सर्वमेव ते ॥ १२ ॥

**अर्जुन उवाच—**

सर्वाञ्जनपदाञ्जित्वा वित्तमादाय केवलम् ।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ॥ १३ ॥
अभिप्रयामि संग्रामे यदहं युद्धदुर्मदान् ।
नाजित्वा विनिवर्तामि तेन मां विजयं विदुः ॥१४॥
श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः ।
संग्रामे युद्ध्यमानस्य तेनाहं श्वेतवाहनः ॥ १५ ॥
उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः ॥१६ ॥

---

[ विष० ] मामिति धनुर्दर्शनहर्षोत्कर्षादात्मगोपनविस्मरणम् ॥ ७ ॥ शराः सर्पविषोपमाः इति वीर्यतो विषोपमाः । सर्पसमा दीर्घाः । विषोपमा वीर्यतो मारकाः ॥ १२ ॥ व्यूहतः शत्रून्निघ्नतः ॥ १३ ॥ सर्वपारसवाः सर्वलौहाः ॥ १७ ॥ अयःपिङ्गलः अयः सुवर्णं तेन पिङ्गलः पिञ्जरः सुवर्णविचित्रः ॥ २३ ॥

इति श्रीमहा० विषम० विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ लक्षा० ] विपन्ना भीमसेनस्येत्यत्र विपदस्त्रायन्तीति विपन्नाः ॥ १४ ॥ कोशे निक्षिप्तो रुचिरत्सरुरित्यत्र 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यभिधानात् त्सरुः खड्गस्य आदौ मुष्टिग्रहणप्रदेशो यस्य ॥ २२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ नील० ] सुवर्णेति ॥ १ ॥ पराकीर्य अपास्य ॥ ३ ॥ नररूपस्य मम महाविष्णोर्नामानि संकटे स्मर्यमाणानि विजयावहानीत्यभिप्रेत्याह—एकाग्रेति ॥ ९ ॥ नक्षत्राभ्यां ताराभ्यां तत्र स्थिते चन्द्रे इत्यर्थः । उत्तराभ्या च पूर्वाभ्यामिति पाठे नक्षत्रसंधावित्यर्थः ॥ १६ ॥

[ अर्जु० ] धनं जयतीति संज्ञायां खश् ॥ १३ ॥ उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं यतः । जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः ॥ हे उत्तर आभ्यां द्वाभ्यां वक्ष्यमाणाभ्यां यतो यस्मादहं जातः तेन मामाहुर्जना इति शेषः । काभ्यामित्याह—फाल्गुनीभ्यां फाल्गुनस्य पञ्चदशी फाल्गुनी नक्षत्रमपि फाल्गुनी फाल्गुनी च फाल्गुनी च इत्येकशेषात् फाल्गुनीभ्यामिति रूपम् । पञ्चदशी पूर्वाऽपरा

---

१ व. °भासकारिणाम् । ३ व. श्रूयन्ते कदाचन; ज. श्रूयन्ते क ते गताः । ४ व. °ति नः श्रुतम् । ६ व. गोकुली । ७ व. °मेव तत् । ११ म. तन्मम सांप्रतम् । १३ व. वित्तमाच्छिद्य केवलम् । १४ व. यानहं यु° । १५ ज. तिष्ठन्ति मे हयाः । १६ ज. पूर्वार्धस्थाने—उत्तराभ्यां फल्गुनीभ्यां पूर्वाभ्यां च अहं दिवा; व. उत्तराभ्यां न पूर्वाभ्यां फल्गुनीभ्यामहं पुनः ।

पुरो शक्रेण मे दत्तं युध्यतो दानवर्षभैः ।
किरीटं मूर्ध्नि सूर्याभं तेनाहुर्मां किरीटिनम् ॥ १७ ॥
न कुर्यां कर्म बीभत्सं युध्यमानः कथंचन ।
तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः ॥ १८ ॥
उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।
तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥ १९ ॥
पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः ।
करोमि कर्म शुक्लं च तस्मान्मामर्जुनं विदुः ॥ २० ॥
अहं दुरापो दुर्धर्षो दमनः पाकशासनिः ।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥ २१ ॥

च भवति ते तत् (? केयं तत्र)इत्याकाङ्क्षायामाह–पूर्वाभ्यामिति। एतेन पूर्वभिश्र पौर्णमासीति कथितं शुक्लपक्षस्य पूर्वत्वात्। उक्तं च 'पक्षौ पूर्वापरौ शुक्लकृष्णौ मासश्च तावुभौ' इति । एतेन सिंहराशिरर्जुनः ॥ १६ ॥

[ चतु० ] पराकीर्यं हारयित्वा ॥ ३ ॥ रसपाचकः सूपकारः ॥ ५ ॥ केवलाः संबद्धाः ॥ १२ ॥ उत्तराभ्यां पूर्वाभ्यां फल्गुनीभ्यां जातः पूर्वोत्तरफल्गुनीभ्यो जात इत्यन्वयः । द्वयोरपि द्विभावकत्वाद्द्विवचनम् ॥ १६ ॥

[ सर्व० ] पराकीर्य अपास्य ॥ ३ ॥ उत्तराभ्यां ताराभ्यां नक्षत्रसन्धावित्यर्थः ॥ १६ ॥

[ विरो० ] केवलाः शुद्धाः । हेतवो निरुक्तयः ॥ १२ ॥ उत्तराभ्यां फल्गुनीभ्या द्विनक्षत्राद्द्विवचनम् । उत्तरफल्गुन्या राशिद्वयसंबन्धत्वाद्राशिशङ्कायामाह–पूर्वाभ्यां पूर्वपादावछिन्नाभ्याम् । तेन सिंहराशिः । दिवा यतः दिवेत्यादिस्वरूपाख्यानम् । हिमवतः हिमवत्सदृशस्य शतशृङ्गस्य ॥ १६ ॥

[ विष० ] पराकीर्य त्यक्त्वा ॥ ३ ॥ श्रद्दध्यां तथेति प्रत्ययं कुर्याम् ॥ ७ ॥ उत्तराभ्यामिति उत्तराफल्गुनीनक्षत्रं द्वितारकम् । ततो द्विवचनम् । सप्तम्यर्थे तृतीया । सुप्तिङुपग्रहेति विभक्तिव्यत्ययः ॥ १६ ॥

[ लक्षा० ] उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामित्यत्र फल्गुनीशब्दवाच्याभ्यां पूर्वाभ्यां पूर्वानक्षत्रस्य द्विताराभ्याम् उत्तराभ्यां उत्तरानक्षत्रस्य द्विताराभ्यां च क्रमेण अह्निनिशि च युक्ता या पौर्णमासी फाल्गुनमासस्य आरम्भदिनं(?) तत्रोत्पन्नत्वात् फाल्गुन इति भावः ॥ १६ ॥

[ नील० ] बीभत्सुरिति भदि कल्याणे सुखे चेत्यस्य सनि रूपम् ॥ १८ ॥ विकर्षणे शक्ताविति शेषः(?)। सव्येन वामेनापि हस्तेन सचितुं ज्याकर्षणादिक्रियायां संबन्द्धुं शीलमस्येति सव्यसाचीत्यर्थः ॥ १९ ॥ अर्जुन इति ऋज गतिस्थानार्जनोपार्जनेष्वित्यत उनन्प्रत्यये भवति । वर्णो दीप्तिः सम ऋजुः दीप्तिमत्त्वात् समत्वात् शुद्धकर्मकरत्वाचार्जुन इत्यर्थः ॥ २० ॥ जिष्णुर्जयशीलः ॥ २१ ॥

[ अर्जु० ] बीभत्सुः ॥ १८ ॥ उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे । तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥ मम उभौ पाणी दक्षिणवामौ गाण्डीवस्य विकर्षणे दक्षिणावुदारौ समर्थावित्यर्थः । वामेनापि तथैव करणात् सव्यश्च सव्यश्च एकशेषात् । साची क्षेपकः ॥ १९ ॥ चतुरन्तायां समुद्रान्तायाम् ॥ २० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां
वि० प० चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ चतु० ] दक्षिणौ प्रगुणौ । सव्यो वामोऽपि सचते ज्याकृष्टौ समरे यस्येति सव्यसाची ॥ १९ ॥

[ सर्व० ] बीभत्सुरिति भदि कल्याणे सुखे चेत्यस्येदं रूपम् ॥ १७ ॥ विकर्षणे दक्षिणौ दक्षौ सव्येन वामेनापि हस्तेन सचितुं ज्याकर्षणादिक्रियायां संबद्धुं शीलमस्येति सव्यसाची ॥ १९ ॥ दीप्तिमत्वाच्छुद्धकर्मैकरत्वाचार्जुनः ॥ २० ॥ जिष्णुः जयशीलः ॥ २१ ॥

[ विरो० ] बीभत्सुरिति नञ्लोप आर्षः । विरोधिलक्षणा वा ॥ १८ ॥ दक्षिणौ समर्थौ । 'सव्यं दक्षिणवामयोः' । तेन सव्यौ उभौ पाणी सचते समवैति अर्थाज्ज्याकर्षणे अतः सव्यसाची ॥ १९ ॥ वर्णो गुणकथनम् ॥ २० ॥

[ विष० ] चतुरन्तायां चतुःसागरपर्यन्तायाम् । मम समः सदृशो वर्णः रूपम् अर्जुननामनिर्वचनम् । यथा श्रुतिराह–" फल्गुनीष्वग्नीनादधीतैता वा इन्द्रनक्षत्रम् । " ' यत् फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनोऽह वै नामेन्द्रो यदस्य गुह्यं नामाऽर्जुन्यो वै नामैतास्ता यत्परोक्षमाचक्षते फल्गुन्य इति । को ह्येतस्याऽर्हति गुह्यं नाम ग्रहीतुमिन्द्रो ह वै यजमानस्तत्सत्र एवैतन्नक्षत्र आदधीत । " अर्जुननाम ॥ २० ॥ दुरापः दुराकलनीयः । शत्रूणां दमनः ॥ २१ ॥

[ लक्षा० ] न कुर्यां कर्म बीभत्समित्यत्र बीभत्सामेव बीभत्सयतीति कृत्वा बीभत्सुरिति भावः ॥ १८ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे
विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

१९ ज. मे विक्षतौ पाणी । २० क. शुद्धत्वाद्रूपवत्त्वाच तेन मा° ।

कृष्ण इत्येव दशमं नाम चक्रे पिता मम ।
कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै ॥ २२ ॥

वैशम्पायन उवाच—

ततः स पार्थं वैराटिरभ्यवादयदन्तिकात् ।
अहं भूमिञ्जयो नाम नाम्नाहमपि चोत्तरः ॥ २३ ॥
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय ।
लोहिताक्ष महाबाहो नागराजकरोपम ॥ २४ ॥
यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम ।
यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ॥ २५ ॥

इति श्रीमहाभारते विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ४५

बृहन्नलायामर्जुनत्वनिश्चयोत्तरमुत्तरेण शीघ्रं गाण्डीवाद्यायुधानां रथे निधानम् ॥ १ ॥ पार्थेन तदाश्वासनपूर्वकमस्त्राणामभिध्यानम् ॥ २ ॥ अस्त्रदेवतासंनिधानम् ॥ ३ ॥ प्रणिपातपूर्वकं तासां युद्धे मनसि सन्निधानप्रार्थना ॥ ४ ॥

उत्तर उवाच—

आस्थाय रुचिरं वीर रथं सारथिना मया ।
कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ १ ॥

अर्जुन उवाच—

प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव ।
सर्वान्नुदामि ते शत्रून् रणे रणविशारद ॥ २ ॥
स्वस्थो भव महाबाहो पश्य मां शत्रुभिः सह ।
युध्यमानं विमर्देऽस्मिन् कुर्वाणं भैरवं महत् ॥ ३ ॥
एतान्सर्वानुपासङ्गान् क्षिप्रं बध्नीहि मे रथे ।
एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ ४ ॥

वैशम्पायन उवाच—

अर्जुनस्य वचः श्रुत्वा त्वरावानुत्तरस्तदा ।
अर्जुनस्यायुधान् गृह्य शीघ्रेणावातरत्ततः ॥ ५ ॥

अर्जुन उवाच—

अहं वै कुरुभिर्यास्याम्यवजेष्यामि ते पशून् ॥ ६ ॥

---

[ नील० ] कृष्णावदातस्य कृष्णभास्वरवर्णस्य । कर्षति चित्तमिति मनोहरत्वाद्वा कृष्ण इत्याह–प्रियत्वादिति ॥ २२ ॥ नागराज ऐरावतस्तस्यैव करोपमा हस्तयोः सादृश्यं यस्य हस्तिहस्तोपमकरेत्यर्थः ॥ २४ ॥ कर्म दिग्विजयादि ॥ २५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ चतु० ] कृष्णावदातस्य शुद्धस्य कृष्णवर्णस्य ॥ २२ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ सर्व० ] कृष्णावदातस्य कृष्णभास्वरवर्णस्य कर्षति चित्तमिति वा कृष्णः ॥ २२ ॥ नागराजकरोपम हस्तिहस्तोपमकर ॥ २४ ॥ कर्म दिग्विजयादि ॥ २५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ विरो० ] अवदातो वर्णः प्रियत्वात् गुणैराकर्षकत्वात् ॥ २२ ॥ करोपमः करो यस्येति । अन्त्यकरशब्दस्यार्षो लोपः ॥ २४ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ विष० ] ईषत्कृष्णः ईषदवदातो बालत्वात् ईषत्कृष्णत्वम् । कृष्णवदवदातस्योज्ज्वलस्य ॥ २२ ॥ अन्तिकात् समीपे आगत्येति शेषः । एकस्य नामदशकम् । आत्मनोऽपि नामद्वयं निवेदितवान् । नाम संबोधनेऽव्ययम् ॥ २३ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. चतुश्चत्वारिंशोऽध्यायः ॥४४॥

[ नील० ] आस्थायेति ॥ १ ॥ नुदामि दूरीकरोमि ॥ २ ॥ भैरवं भयानकं महत्कर्म कुर्वाणम् ॥ ३ ॥ उपासङ्गान् तूणीरान् ॥ ४ ॥ गृह्य गृहीत्वा शीघ्रेण वेगेन ततः शमीतोऽवातरत् । इतरेषामायुधानि तत्र निधायेति शेषः ॥ ५ ॥ अवजेष्यामि हेलया जेष्यामि ॥ ६ ॥

[ अर्जु० ] विमर्दे युद्धे । उपासङ्गान् तूणीरान् ॥ ३ ॥ ४ ॥

[ चतु० ] आयुधानिति व्यत्ययेन पुंस्त्वम् ॥ ५ ॥ ते तव ॥ ६ ॥

[ सर्व० ] नुदामि दूरीकरोमि ॥ २ ॥ उपासङ्गाः बाणकोशाः ॥ ४ ॥

[ विरो० ] उपासङ्गान् तूणान् ॥ ४ ॥

[ विष० ] विमर्दे संग्रामे ॥ ३ ॥ उपासङ्गान् कलापानक्षयत्वाद्गौरवार्थं बहुवचनम् ॥ ४ ॥

---

२३ क. नाम प्रणतोऽस्मि धनञ्जय । २५ व. यदज्ञानन्नवोचं । इति चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

१ घ. व. विपुलं वीर । २ क. राजपुत्रेति न । ३ व. ज. महायुद्धे । क. भैरवं स्वनम् । ४ ज. क्षिप्रमाहर मे रथे; व. एनं चाहर मे रथे । अस्मादुत्तरं च. ज. गाण्डीवं देवदत्तं च तथाक्षय्ये महेषुधी । रथमारोपयैतन्मे प्रत्यानेष्यामि ते पशून् ॥

**संकल्पपक्षविक्षेपं बाहुप्राकारतोरणम् ।**
**त्रिदण्डतूणसंबाधमनेकध्वजसंकुलम् ॥ ७ ॥**

[लक्षा०] क्षिप्रं नह्य हि वै रथे इत्यत्र नह बन्धन इतिधातोः । सन्नद्धं कुरु ॥ ४ ॥

[नील०] त्वं तु भयं त्यजेत्याह—संकल्पेति त्रिभिः । इदं मया गुप्तं रक्षितं रथोपस्थं रथोपरिभागस्ते तव नगरं नगरवद्रक्षकं भविष्यति । तत्र रथाङ्गेषु नगराङ्गसंपत्तिमाह—संकल्पपक्षविक्षेपमिति । संकल्पः सम्यक्कल्पनं चक्राक्षध्वजकूबरयुगादीनामङ्गानां दार्ढ्येन समर्थनं तदेव पक्षयोर्वीथीनां पार्श्वयोर्विक्षेपो विस्तारो यस्मिन् । बाहू एव स्वीयौ बाहुतुल्यत्वाद्बान्धवा एव वा प्राकारः पुरपरिधिभित्तिस्तस्मिंस्तोरणं पुरद्वारं यस्मिन् रथिसारथ्योरपि रथाङ्गत्वविवक्षया एतदुक्तम् । त्रिदण्डः ईषा तदुभयपार्श्वदारुणी चेति मिलित्वा त्रिदण्ड उच्यते । स च तूणो निषङ्गश्च ताभ्या संबाधं संकटं दुष्प्रवेशम् । पक्षे त्रिदण्डं सैन्यत्रयं रथिना हस्तिसादिनां हयसादिनां चेति त्रीणि सैन्यानि तेषां तूणोपलक्षितानि आयुधानि तैः संबाधम् । अनेकध्वजसंकुलं बहुध्वजव्याप्तम् । अनेकेन अनन्येन ध्वजेन वानरेण संकुलं भयंकरम् । 'एके मुख्यान्यकेवलाः' इति नानार्थः ॥ ७ ॥ ज्या धनुर्मौर्वी सैव क्षेपणानि गोलासनानि नालिकाख्यानि यस्मिन् । क्रोधेन परजिघांसाहेतुना चित्तवृत्तिविशेषेण निमित्तभूतेन कृतं परिष्कृतं द्वयमपि ॥ ८ ॥

[अर्जु०] संकल्पपक्षविक्षेपं बाहुप्राकारतोरणम् ॥ त्रिदण्डतूणसंबाधमनेकध्वजसंकुलम् ॥ ज्याक्षेपणं क्रोधकृतं नेमीनिनददुन्दुभि । नगरं ते मया गुप्तं रथोपस्थे भविष्यति ॥ संकल्पो मानसं कर्म स एव पक्षविक्षेपो यस्मिन् । पक्षः शाखानगरे विक्षेपस्तस्य विकारः । बाहुरेव प्राकारतोरणं यस्मिन् । त्रिदण्डः त्रिवेणुः तूण इषुधिः ताभ्यां संबाधम् । ज्याक्षेपणमेव क्रोधकृतं कन्दलादि (? कलहादि) यत्र । नेमी चक्रान्तस्तस्य निनद एव दुन्दुभिर्यस्मिन् । नगरं शरीरं रथोपस्थे रथोपरिभागे गुप्तं भविष्यति तस्मान्मा भैरिति भावः ॥ ७ ॥ ८ ॥

[चतु०] संकल्प एव पक्षविक्षेपः नगरे हि पक्षौ पार्श्वौ भवतः । बाहव एव प्राकारतोरणं यत्र त्रिदण्डं त्रिवेणुकम् । रथोपस्थमेव नगरं नगरे एव आत्मानं स्थितं विद्धि । टीकान्तरम् । रथोपस्थेन क्रोडेन परं भविष्यतत्यिन्वयः । तमेव निरूपयति संकल्पेन मनोरथेनैव पक्षविक्षेपः खण्डनं यत्र बाहुरेव प्राकारो वेष्टनं यत्र त्रिदण्डं च त्रिवेणुः

**ज्याक्षेपणं क्रोधकृतं नेमीनिनददुन्दुभि ।**
**नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ ८ ॥**

ज्यैव क्षेपणं यत्र । क्रोधकृतं क्रोधमयम् । नेमी चक्रान्तः । तस्य निनद एव दुन्दुभयो यत्र ॥ ७ ॥

[सर्व०] सम्यक्कल्पनं चक्रादीनां दार्ढ्येन समर्थनं तदेव पक्षयोर्वीथीनां पार्श्वयोर्विक्षेपो विस्तारो यस्मिन् । बाहू एव प्राकारः पुरपरिधिस्तस्मिन् तोरणं पुरद्वारं यस्मिन् । त्रिदण्डः ईषा तदुभयपार्श्वदारुणी चेति मिलित्वा त्रिदण्डः उच्यते । स च तूणो निषङ्गश्च ताभ्यां संबाधं संकटं दुष्प्रवेशम् । पक्षे त्रिदण्डं सैन्यत्रयं रथिनां हस्तिसादिनां हयसादिनां चेति त्रीणि सैन्यानि तेषां तूणोपलक्षितान्यायुधानि तैः संबाधम् । ज्या धनुर्मौर्वी सैव क्षेपणानि नालिकाख्यानि यस्मिन् । क्रोधेन परजिघांसाहेतुना कृतं परिष्कृतम् । एवं रथोपस्थं रथोपरिभागः ते नगरं नगरवद्रक्षकं भविष्यति ॥ ७ ॥ ८ ॥

[विरो०] संकल्पा मनोरथा एव पक्षाः सहायास्तैर्विरुद्धानां शत्रूणां क्षेपो निकटानागमनं यत्र । बाहू प्राकारस्तोरणं च यत्र । त्रिदण्डा धनुःशरासयः तूणश्च संबाधो दुर्गं यत्र ॥ ७ ॥ ज्यैव क्षेपणं यन्त्रं यत्र । क्रोध एव कृतं कर्म यत्र । नेमी चक्रान्तः तन्निनदो दुन्दुभिर्यत्र । रथोपस्थे रथोपरि ते तव नगरमुपवेशनस्थानम् ॥ ८ ॥

[विष०] संकल्पो मनोरथ एव पक्षस्य शाखानगरस्य विक्षेपो विस्तारो यस्मिन्नगरे तत् । बाहू एव प्राकारस्य दुर्गस्य तोरणं यस्मिन्नगरे तत् । त्रयो दण्डा वेणवो यत्र । सारथिस्थानम् । नगरपक्षे [दण्डाक्षावासनं चर्म दण्डः ?] दण्डा रथ्याः । तूणाभ्यां संबाधं संकटं युक्तम् । नगरपक्षे पण्यविपणे [? विक्रय] तूणा इत्यनेकार्थः ॥ ७ ॥ ज्या प्रत्यञ्चा तस्याः क्षेपणमाकर्षणं तदेव क्रोधकृतं क्रोधकारणं यत्र नगरे । नगरे हि कलहादिना भाव्यम् । रथनेमिश्चक्रधारा तस्या निनदः शब्दः स एव दुन्दुभिर्यत्र तत् । रथोपरि स्थितं नगरमिव ते तव शरीरं भविष्यति । रथोपरिस्थिते मयि ते तव नगरं रक्षितं भविष्यति ॥ ८ ॥

[लक्षा०] संकल्पगाढपरिखमित्यत्र सम्यक्कल्पः कल्पना यस्याः सा संकल्पगाढा परिखा यस्मिन् । त्रिदण्डतूणसंबन्धं त्रिमानदण्डप्रमाणाः त्रिदण्डाः तूणाः । तेषां संबन्धा यस्मिन् ॥ ७ ॥ ज्याक्षेपनिनदारावं ज्याक्षेपनिनदैः सह आरावो वादित्रध्वनिर्यस्मिन् । नेमीनिनदैः सह दुन्दुभयो यस्मिन् । शरैर्जालैः गवाक्षैः वितानैः उल्लोचैश्च आढ्यम् ॥ ८ ॥

८ क. ज्याक्षेपनिनदारावं नेमिदुन्दुभिनिस्वनम् । शरजालवितानाढ्यमाक्ष्वेडितमहास्वनम् ॥

अधिष्ठितो मया संख्ये रथो गाण्डीवधन्वना ।
अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ ९ ॥

उत्तर उवाच—

बिभेमि नाहमेतेषां जानामि त्वां स्थिरं युधि ।
केशवेनापि संग्रामे साक्षादिन्द्रेण वा समम् ॥ १० ॥
इदं तु चिन्तयन्नेवं परिमुह्यामि केवलम् ।
निश्चयं चापि दुर्मेधा न गच्छामि कथञ्चन ॥ ११ ॥
एवं युक्ताङ्गरूपस्य लक्षणैः सूचितस्य च ।
केन कर्मविपाकेन क्लीबत्वमिदमागतम् ॥ १२ ॥
मन्ये त्वां क्लीबवेषेण चरन्तं शूलपाणिनम् ।
गन्धर्वराजप्रतिमं देवं वाऽपि शतक्रतुम् ॥ १३ ॥

अर्जुन उवाच—

भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।
चरामि व्रतचर्यं च सत्यमेतद्ब्रवीमि ते ॥ १४ ॥
नास्मि क्लीबो महाबाहो परवान्धर्मसंयुतः ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ १५ ॥

उत्तर उवाच—

परमोऽनुग्रहो मेऽद्य यतस्तर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्ति तु नरोत्तम ॥ १६ ॥
सहायवानस्मि रणे युध्येयममरैरपि ।
साध्वसं हि प्रनष्टं मे किं करोमि ब्रवीहि मे ॥ १७ ॥
अहं ते संग्रहीष्यामि हयान् शत्रुरथारुजान् ।
शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ ॥ १८ ॥
दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ॥ १९ ॥
यस्य याते न पश्यन्ति भूमौ क्षिप्तं पदं पदम् ।
दक्षिणां यो धुरं युक्तः सुग्रीवसदृशो हयः ॥ २० ॥
योऽयं धुरं धुर्यवरो वामां वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ २१ ॥
योऽयं काञ्चनसंनाहः पार्ष्णिं वहति शोभनः ।
समं शैब्यस्य तं मन्ये जवेन बलवत्तरम् ॥ २२ ॥
योऽयं वहति मे पार्ष्णिं दक्षिणामभितः स्थितः ।
बलाहकादपि मतः स जवे वीर्यवत्तरः ॥ २३ ॥
त्वामेवायं रथो वोढुं संग्रामेऽर्हति धन्विनम् ।
त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम ॥ २४ ॥

वैशम्पायन उवाच—

ततो विमुच्य बाहुभ्यां वलयानि स वीर्यवान् ।
चित्रे काञ्चनसन्नाहे प्रत्यमुञ्चत्तदा तले ॥ २५ ॥

---

[नील०] फलितमाह—अधिष्ठित इति ॥ ९ ॥ केशवेन इन्द्रेण वा समं सार्धं संग्रामे त्वां स्थिरं जानामि ॥ १० ॥ युक्ताङ्गरूपस्य युक्तानि समीचीनान्यङ्गानि युद्धाङ्गानि शस्त्रास्त्रनैपुणादीनि रूपमाकृतिश्च यस्य । लक्षणैः पञ्चरक्तत्वादिभिः ॥ १२ ॥ परवान् नाथवान् उत्तीर्णमापद्भ्य इति शेषः ॥ १५ ॥ शत्रुरथारुजान् शत्रुरथभञ्जकान् मूलविभुजादित्वात्कः तीर्थतो गुरुतः ॥ १८ ॥ याते गमने पदं पदं सर्वमपि पदं भूमौ क्षिप्तं तत उद्धृतं वा न पश्यन्ति वेगवत्त्वात् सुग्रीवमेघपुष्पशैब्यबलाहका भगवतोऽश्वास्तत्साम्यमेषां वाहानामुक्तम् ॥ २० ॥ पार्ष्णिं पुरःस्थितयोरश्वयोः पृष्ठभागं पाश्चात्यं युगमिति यावत् । 'पार्ष्णिः स्यादुन्मदस्त्रियाम् ॥ स्त्रियां द्वयोः सैन्यपृष्ठे' इति मेदिनी ॥ २२ ॥ पर्यमुञ्चत्तदा शुभे इति पाठे तु कुण्डले इति शेषः ॥ २५ ॥

[अर्जु०] शूलोपलक्षितः पाणिर्विद्यते अस्येति व्रीह्यादित्वादिनिः शूलपाणिनं छान्दसो वा नुम् ॥ १३ ॥ परवान् पराधीनः । धर्मसंयतः धर्मपाशबद्धः ॥ १५ ॥ प्रतर्कः परामर्शः ॥ १६ ॥ तीर्थतः गुरोः । 'तीर्थमृषिजुष्टजले गुरौ' इत्यमरः ॥ १८ ॥ यस्य याते गमने ॥ २० ॥ पार्ष्णिं पश्चाद्भागम् । अञ्चितोद्यतः अञ्चितमाकुञ्चितम् उद्यतं पदं यस्य ॥ २३ ॥ विमुच्य त्यक्त्वा प्रत्यमुञ्चत्तले शुभे । तले ज्याघातवारणे [पिनद्धाने स्वरूपबाधयोः खड्गमुष्टिचपेटयोः । 'ज्याघातवारणेऽपि स्यात् तलं स्थानतबाधयोः'?] इति विश्वः ॥ २५ ॥

[चतु०] परवान्कार्यवशः ॥ १५ ॥ तीर्थतो गुरोः ॥ १८ ॥ याते गतौ ॥ २० ॥ धुरमग्रिमं भारम् ॥ २१ ॥ पार्ष्णिं पश्चाद्भागम् ॥ २२ ॥ अञ्चितोद्यतः शोभनोद्यमः ॥ २३ ॥ निर्मुच्य अवतार्य । दुन्दुभ्योरिव सन्नादो यत्र । तले ज्याघातवारणे प्रत्यमुञ्चत्पिनद्धवान् ॥ २५ ॥

[सर्व०] परवान् पराधीनः ॥ १५ ॥ शत्रुरथारुजान् शत्रुरथभञ्जकान् । तीर्थतः गुरुतः ॥ १८ ॥ सुग्रीवमेघपुष्पशै-

---

११ क. निश्चयं नाधिगच्छामि नावगच्छामि किञ्चन । १२ घ. व. °णैरुचितस्य च; ज. लक्षणै रुचिरस्य च । व. क्लैब्यं त्वामि° । १४ ज. ब्रह्मचर्यं वै स° । १६ व. यत्प्रतर्को । घ. व. भवन्तीति नरोत्तमाः । १८ व. हयाञ्छत्ररथध्वजान्; ज. हयाञ्छत्रुनिषूदन । घ. व. °थ्ये वीर्यतः पुरुषोत्तम । च- पुरुषर्षभात् । २० व. यस्य याने । व. घ. पदं गवाम् । २१ ज. तं विद्धि मे । २२ व. वामां शैब्यस्य । २३ क. ङ. व. मंचितोद्यतः । ज. द्वितीयार्धस्थाने—बलाहकादनवरः स वीर्यबलवत्तरः । २४ व. त्वं च मे र° । २५ ज. ततो निर्मुच्य । व. मुञ्चत्तले शुभे । घ. ङ. च. द्वितीयार्धस्थाने—चित्रे दुन्दुभिसन्नादे प्रत्यमुञ्चत्तले शुभे ।

कृष्णान् भङ्गिमतः केशान् श्वेतेनोद्ग्रथ्य वाससा ।
अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।
अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ॥ २६ ॥
ऊचुश्च पार्थं सर्वाणि प्राञ्जलीनि नृपात्मज ।
इमे स्म परमोदाराः किंकराः पाण्डुनन्दन ॥ २७ ॥
प्रणिपत्य ततः पार्थः समालभ्य च पाणिना ।
सर्वाणि मानसानीह भवतेत्यभ्यभाषत ॥ २८ ॥
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ २९ ॥
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महाध्वनिः ।
यथा शैलस्य महतः शैलेनेवावजघ्नतः ॥ ३० ॥
स निर्घातोऽभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
पपात महती चोल्का दिशो न प्रचकाशिरे ।
भ्रान्तध्वजं खं तदासीत्प्रकम्पितमहाद्रुमम् ॥ ३१ ॥
तं शब्दं कुरवोऽजानन् विस्फोटमशनेरिव ।
यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे ॥ ३२ ॥

उत्तर उवाच—

एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान् ।
कथं जेष्यसि सङ्ग्रामे सर्वशस्त्रास्त्रपारगान् ॥ ३३ ॥
असहायोऽसि कौन्तेय ससहायाश्च कौरवाः ।
अत एव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ॥ ३४ ॥

वैशम्पायन उवाच—

उवाच पार्थो मा भैषीः प्रहस्य स्वनवत्तदा ॥ ३५ ॥
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदाऽऽसीत्सखा मम ॥ ३६ ॥
तथाप्रतिभये तस्मिन् देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कस्तदासीत्सखा मम ॥ ३७ ॥
निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाऽभवत् ॥ ३८ ॥
स्वयंवरे तु पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदाऽभवत् ॥ ३९ ॥
उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ॥ ४० ॥
पिनाकपाणिनं चैव कथमेतान्न योधये ।
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ॥ ४१ ॥

इति श्रीमहाभारते विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

व्यवलाहकाः कृष्णस्याश्वाः तत्साम्यमेषाम् ॥ २० ॥ पार्ष्णिं पुरस्थितयोरश्वयोः पृष्ठभागम् ॥ २२ ॥ तलं पाणौ ज्याघातनिवारणम् । 'पर्यमुञ्चत्तदा शुभे' इति पाठे कुण्डले इत्यर्थः ॥ २५ ॥

[विरो०] शरं रावा (?) तले ज्याघातवारणे ॥ २५ ॥

[विष०] मया रथस्थेनेति ॥ ९ ॥ धर्मसंयतो धर्मपाशबद्धः । धर्मेण युधिष्ठिरेण संयतो वा परवान् परायत्तः ॥ १५ ॥ साध्वसं बालभावप्रसिद्धं भयम् ॥ १७ ॥ तत्त्वत आम्नायगुरोः सकाशात् ॥ १८ ॥

इति श्रीमहा० विषमपदविवरणे वि.प. पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

[लक्षा०] परवान् नाथवान् ॥ १५ ॥ यस्य यातो न पश्यन्तीत्यत्र । यातः खे गच्छतः यस्य.अश्वस्य ॥ २० ॥ ततो विमुच्य बाहुभ्यामित्यत्र विमुच्य शवाका(र)चर्मणो विमुच्य ॥ २५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[नील०] भङ्गिमतः कौटिल्यवतः । अभिदध्यौ स्मृतवान् ॥ २६ ॥ मानसानि प्रयोजनकाले स्मृतिगोचराणि ॥ २८ ॥ प्रतिगृह्य अनुकूलानि कृत्वा व्याक्षिपत् टणत्कारितवान् ॥ २९ ॥ अवजघ्नतः अवहन्यमानस्य अभिनिघ्नत इति पाठान्तरम् ॥ ३० ॥ भूभित् भूविदारकः । प्रचकाशिरे प्रकाशवत्योऽभूवन् । भ्रान्ता इतश्चलिता ध्वजा यस्मिन् । एतेन परसैन्यवाहेषु शब्दजात्रासादुत्पथगामित्वं व्यज्यते । प्रकम्पितमहाद्रुममित्यनेन भूमिकम्पो व्यज्यते ॥ ३१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[अर्जु०] भङ्गिमतः कुटिलान् ॥ २६ ॥ मानसानि भवतेति ···मात्राधीनानि अर्थसंपादकानीत्यर्थः ॥ २८ ॥ अभिजघ्नुषा अभिहतवता ॥ ३० ॥

इति श्रीमहा० मर्जु० वि० प० पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[चतु०] भङ्गिमतः कुटिलान् ॥ २६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

२६ घ. संयमितान्केशा० । २७ पूर्वार्धे च. ज. अभ्युपेयुर्महास्त्राणि कुरूणां रथसत्तमे; व. अभ्युपेयुर्महाभागमस्त्राणि भरतर्षभ । व. इमानि स्म महोदार किंकराणीन्द्रनन्दन । २८ व. विभजन्त्विति भारत । ३० व. ज. व्याक्षिप्यमाणस्य । ३१ घ. च व. सनिर्घाताभवद्भूमिर्दि° । व भ्रान्तद्विजं खं । ३२ ज. °क्षिपद्रणे । अस्मादुत्तरमधिकं व. तदस्य कुरवो जानन्छक्रस्येव हि गर्जितम् । ३६ व. सखे मम । ३७ व. ज. कस्तदागात्सहायताम् । ४० श्लोकमध्येऽधिकं व. समासाद्य तु वार्ष्णेयं योगाना ( योगिना ) मीश्वरं प्रभुम् । पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ४६

अर्जुनस्य चिन्तनमात्रेण वानरलक्षणध्वजोपस्थितिः ॥ १ ॥ तथा स्वशङ्खनिनादश्रवणसंत्रस्तमुत्तरं समाश्वास्य पुनरर्जुनेन शङ्खाध्मापनम् ॥ २ ॥ रथनिर्घोषश्रवणेनानिमित्तदर्शनेन चार्जुनागमनं शंसताऽऽचार्येण सेनां व्यूह्यावस्थानविधानम् ॥ ३ ॥

**वैशम्पायन उवाच—**

उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय प्रययौ पाण्डवर्षभः ॥ १ ॥
ध्वजं सिंहं रथात्तस्मादपनीय महारथः ।
प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ॥ २ ॥
दैवीं मायां रथे युक्तां विहितां विश्वकर्मणा ।
काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ॥ ३ ॥
मनसा चिन्तयामास प्रसादं पावकस्य च ।
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यदेशयत् ॥ ४ ॥
सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ।
खात्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ॥ ५ ॥
रथं तमागतं दृष्ट्वा दक्षिणं प्राकरोत्तदा ।
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ॥ ६ ॥
बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं च कपिप्रवरकेतनः ॥ ७ ॥
स्वनवन्तं महाशङ्खं बलवानरिमर्दनः ।
प्राधमद्बलमास्थाय द्विषतां लोमहर्षणम् ॥ ८ ॥
ततस्ते जवना धुर्या जानुभ्यामगमन्महीम् ।
उत्तरश्चापि संत्रस्तो रथोपस्थ उपाविशत् ॥ ९ ॥
संस्थाप्य चाश्वान् कौन्तेयः समुद्यम्य च रश्मिभिः
उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ॥ १० ॥

---

[ सर्व० ] भङ्गिमतः कौटिल्यवतः ॥ २६ ॥ भूमित् भूविदारकः । द्विजाः पक्षिणः ॥ ३१ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ विरो० ] प्रकम्पितमहाद्रुमं शब्दम् ॥ ३१ ॥ यत् यदा आक्षिपत्तदा कुरवो 'मेनिरे' ( शे ) ॥ ३२ ॥ स्वयंवरे आदावनिश्चितवरकाविवाहे ॥ ३९ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ नील० ] उत्तरमिति ॥ १ ॥ सिंहं सिंहाकारम् ॥ २ ॥ दैवीं मायामित्यद्भुतत्वं ध्वजस्य दर्शितम् । मायामय इव ध्वजोऽद्भुत इत्यर्थः । विश्वकर्मणा ब्रह्मणा भौमेन ? वा । काञ्चनं काञ्चनवर्णम् । सिंहं हिंस्रं लाङ्गूलं यस्य पुच्छविक्षेपणेनैव बहून् हस्त्यादीन्पोथयन्तमित्यर्थः । वानरलक्षणं वानरस्वरूपम् ॥ ३ ॥ प्रसादं प्रसादप्राप्तम् । सः पावकः । तच्चिन्तितम् अर्जुनचिन्तितम् । अदेशयत् अयोजयत् ॥ ४ ॥ ते जवनाः प्रसिद्धाः वेगवन्तोऽग्निदत्तरथस्थाः ॥ ९ ॥ संस्थाप्य यथावत्कृत्वा ॥ १० ॥

[ अर्जु० ] प्रणिधाय स्थापयित्वा ॥ २ ॥ रश्मिभिरिति रश्मिरश्वावलम्बनरज्जुः प्रग्रह इति यावत् । तैश्चेत्यर्थः । 'किरणप्रग्रहौ रश्मी' इत्यमरः ॥ १० ॥

[ चतु० ] सः पावकः ॥ ४ ॥ सोपासङ्गं तूणसहितम् । खात्पपात ध्वजमित्यनुषज्यते ॥ ५ ॥ ध्वजं रथं प्रत्यागतं दृष्ट्वा प्रदक्षिणमकरोदित्यन्वयः ॥ ६ ॥ संस्थाप्य स्थिरीकृत्य ॥ १० ॥

[ सर्व० ] सिंहं हिंस्रं लाङ्गूलं यस्य ॥ ३ ॥

[ विरो० ] सिंहशार्दूलं सिंहश्रेष्ठं सिंहोपरि वानरोऽर्जुनस्य ध्वज इत्यर्थः ॥ ३ ॥ संवारकः (?) भूतान्यदृश्यानि ॥ ४ ॥ रथं प्रति ध्वजं पपातेत्यर्थः ॥ ५ ॥ तं ध्वजं रथं प्रति आगतम् ॥ ६ ॥

[ लक्षा० ] शङ्खशब्देन पार्थस्य मुखेनाश्वासयन् क्षिताविवत्यत्र आश्वासयन् दीर्घश्वासममुञ्चन्, क्षितौ विद्यमानाः प्राणिनः ॥ ९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

१ व. °दाय ततः प्रायाद्धनंजयः; ज. भ्रातॄणां पाण्डुनन्दनः । २ ज. दवतीर्थे महा° । ३ ज. सिंहशार्दूलं । ४ ज. व. भूतान्यचोदयत्; घ. भूतान्यनोदयत् । ५ ज. व. सुपताकं महाचित्रं सोपासङ्गं ( महारथम् ) हिरण्मयम्; घ. सुपावकं महाचित्रं सोपासङ्गं महारवम् । ज. रथस्तूर्णं । ६ ज. अथापतन्तं तं । ७ व. बद्धासिः सतलत्राणः । ज. प्रायात्पाण्डुपुत्रः क° । ८ ज. प्रदध्मौ । १० ज. प्रत्याश्वासय° ।

१ नवमपूर्वार्धस्थाने पाठोऽयम् ।

**अर्जुन उवाच—**

मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।
कथं तु पुरुषव्याघ्र शत्रुमध्ये विषीदसि ॥ ११ ॥
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥१२॥
स त्वं कथमिहानेन शङ्खशब्देन भीषितः ।
विवर्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ १३ ॥

**उत्तर उवाच—**

श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां निनदतां व्यूढानीकेषु तिष्ठताम् ॥ १४ ॥
नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं नहीदृशम् ॥ १५ ॥
धनुषश्चैव निर्घोषः श्रुतपूर्वो न मे क्वचित् ।
अस्य शङ्खस्य शब्देन धनुषो निःस्वनेन च ॥ १६॥
अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ।
रथस्य च निनादेन मनो मुह्यति मे भृशम् ॥ १७ ॥
व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे ।
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे॥१८॥
गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ।
स मुहूर्तं मयातं तु पार्थो वैराटिमब्रवीत् ॥ १९ ॥

**अर्जुन उवाच—**

एकान्तं रथमास्थाय पद्भ्यां त्वमवपीडयन् ।
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः॥२०॥

**वैशम्पायन उवाच—**

ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान् ।
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ।
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ॥ २१ ॥
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च घोषेण पृथिवी समकम्पत ॥ २२ ॥
तं समाश्वासयामास पुनरेव धनञ्जयः ॥ २३ ॥

**द्रोण उवाच—**

यथा रथस्य निर्घोषो यथा मेघ उदीर्यते ।
कम्पते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ॥२४॥
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाजिनः ।
अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनम् ॥२५॥
प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः ।
ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनम् ॥२६॥
शकुनाश्चापसव्या नो वेदयन्ति महद्भयम् ॥ २७ ॥
गोमायुरेष सेनायां रुदन्मध्येन धावति ।
अनाहतश्च निष्क्रान्तो महद्वेदयते भयम् ॥ २८ ॥
भवतां रोमकूपाणि प्रहृष्टान्युपलक्षये ।
ध्रुवं विनाशो युद्धेन क्षत्रियाणां प्रदृश्यते ॥ २९ ॥
ज्योतींषि न प्रकाशन्ते दारुणा मृगपक्षिणः ।
उत्पाता विविधा घोरा दृश्यन्ते क्षत्रनाशनाः ॥३०॥

---

[ नील० ] एकान्तं सुदृढम् । सप्तम्यन्तपाठस्तु लेखकप्रमादः । रथं सुदृढमवलम्ब्येत्यर्थः ॥ २० ॥ अनाहतः अक्षतो धावति ॥२८॥ ज्योतींषि सूर्यचक्षुर्वाङ्मनांसि ॥३०॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ अर्जु० ] ज्योतींषि न प्रकाशन्ते चक्षूंषि न प्रसन्नानि ॥ ३ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ चतु० ] प्रत्यादित्यं पूर्वोयां दिशि ॥ २६ ॥ शकुनाः पक्षिणः । नोऽस्माकम् ॥ २७ ॥

इति श्रीचतु० महाभारतटीकायां वि. प. षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ सर्व० ] एकान्तं सुदृढम् ॥ २० ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ विरो० ] एकान्ते एकान्तेन पीडय ॥ २० ॥ ज्योतींषि रविप्रभाः ॥ ३० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ विष० ] व्याकुला व्यामूढाः ॥ १८ ॥ एकान्ते एकपक्षमध्ये ॥ २० ॥ हे नदीज गाङ्गेय । लङ्का राक्षसपुरी तस्या ईशो रावणस्तस्य वनं तस्याऽरिः समूलोन्मूलनात् । हनूमान्स केतुः पताकायां यस्य स वानरध्वज इति । नूनं निश्चितम् । नगानां पर्वतानामरिः पक्षच्छेदकत्वादिन्द्रः ।

---

११ व. ज. कथं पुरुषशार्दूल । १२ ज. वीरशब्दाश्च । व. शब्दाश्च सर्वशः । व. च निनदा व्यू° । १७ ज. अमानुपेण १८ घ. रजसा पिहिताः । १९ व. च ध्वानेन । २० व. पद्भ्यां त्वं पीडयाऽधुना; ज. पद्भ्यां च परिपीडय । २३ श्लोकात्प्रागधिकं व. ततो द्रोणो महाबुद्धिः सर्वशास्त्रभृतां वरः । उवाच कुरवो मध्ये सर्वं संबोधयन्निव । २४ श्लोकात्प्राक् व. नदीज लङ्केशव. °श्लोकः । २५ ज. अस्त्राणि न प्र° । व. न प्रहृष्यति वाहनम् । २६ ज. सर्वे खगाः । व. घोरप्रणादिनः; घोरप्रवासिनः । २८ वं. ज. °न्मध्ये प्रधावति; क. चाषा नदन्ति चाकाशे वेदयन्ते महद्भयम् । २९ ज. युद्धेषु क्षत्रि° ।

विशेषत इहास्माकं निमित्तानि विनाशने ।
उल्काभिश्च प्रदीप्ताभिर्बाध्यते पृतना तव ।
वाहनान्यप्रहृष्टानि रुदन्तीव विशाम्पते ॥ ३१ ॥
उपासते च सैन्यानि गृध्रास्तव समन्ततः ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ।
पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति ॥ ३२ ॥
विवर्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ।
गाः संप्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः ॥ ३३ ॥

इति श्रीमहाभारते विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ४७

द्रोणवचनेनार्जुनागमनं निश्चित्य विभ्रान्तमनसां सैनिकानां दुर्योधनेन प्रोत्साहनम् ॥ १ ॥ कर्णेन द्रोणोपालम्भश्च ॥ २ ॥

**वैशम्पायन उवाच—**

अथ दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ १ ॥
उक्तोऽयमर्थ आचार्यौ मया कर्णेन चासकृत् ।
पुनरेव प्रवक्ष्यामि नहि तृप्यामि तं ब्रुवन् ॥ २ ॥
पराभूतैर्हि वस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदे ज्ञातैरेष एव पणो हि नः ॥ ३ ॥
तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम् ।
अज्ञातवासो बीभत्सुरथास्माभिः समागतः ॥ ४ ॥
अनिवृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ५ ॥
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत् ।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६ ॥
अर्थानां च पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ॥ ७ ॥
उत्तरं मार्गमाणानां मत्स्यानां च युयुत्सताम् ।
यदि बीभत्सुरायातस्तदा कस्यापराङ्मुखः ॥ ८ ॥

---

तस्य सूनुरिन्द्रात्मज इति । नगाह्वयोऽर्जुनवृक्षाभिधानः । जित्वावयमिति ओ इति संबोधने 'ए ऐ ओ अव संबुद्धौ' इत्यभिधानात् । वो युष्मान् जित्वा गाः नेष्यति ॥ २४ ॥ अग्नयश्च न भासन्ते इति । द्रोणस्य साग्निकत्वाद्रथेऽग्निहोत्राणि इत्यर्थः । हुता एव धूमायन्ते इति दुर्निमित्तानि ॥ २५ ॥ गोमायुः शृगालः । शब्दायमानो रुदन्निव । मध्येनेति तृतीया । समविषमयोश्च ? ॥ २८ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[नील०] अथेति ॥ १ ॥ आचार्यौ द्रोणं कृपं च प्रति मयाऽयमर्थ उक्तः । पाठान्तरेऽयमाचार्योऽस्मिन्नर्थे विषये मया कर्णेन चोक्त इति योजना ॥ २ ॥ हीनेति न जातमधिकं वाऽज्ञातवासकालं ज्ञातुमर्हति ॥ ६ ॥ तत्र ऊनपक्षे इष्टमेव सिद्धम् । अधिकपक्षेऽपि दोषमाह—अर्थानामिति । द्वैधे द्विप्रकारत्वे संशयो भवति अर्थानां प्रयोजनानाम् । अयं भावः । यदि ते निस्तीर्णप्रतिज्ञास्तर्हि तेषां स्वांशलाभार्थं मामुपगतानां मत्प्रसादतस्तत्प्राप्तिरप्राप्तिर्वेति द्वैधे संभवति संशयाक्रान्तानामकस्माद्युद्धार्थमागमनं दोष एवेति । पूर्ववैरेण सत्यपि संशयेऽस्मज्जिघांसया आगतानां पराजयोऽपि संभाव्यत इत्याहान्यथेति । अन्यायेन युध्यतः पराजयेऽप्यधिकैव नष्टिरस्तीति भावः ॥ ७ ॥ उत्तरं गोग्रहं मार्गमाणानामिच्छतामस्माकम् अनादरे षष्ठी अस्माननादृत्येत्यर्थः । वालिसुग्रीवयोर्युद्धे प्रविशन् राम इवार्जुनोऽपि कुरुमत्स्यसंनिपाते प्रविशन्नपराधी स्यादित्यर्थः ॥ ८ ॥

[चतु०] तमर्थम् ॥ २ ॥ वने वस्तव्यमिति पूर्वेणान्वयः ॥ ३ ॥ अर्थाना कार्याणाम् ॥ ७ ॥ उत्तरं वैराटिम् अभिसंधाय पुरोधाय । नियमाद्वा (?) ॥ ८ ॥

[सर्व०] कुरुमत्स्ययोर्युद्धे प्रविशन्नप्यर्जुनोऽपराधीत्याह—उत्तरं गोग्रहं मार्गमाणानां अत्रानादरे षष्ठी ॥ ८ ॥

[विरो०] आचार्य उ संबोधने ॥ २ ॥ त्वया कथं न ज्ञायत इत्यत्राह—अर्थाना संशयो भवति । द्वैधे कोटिद्वयस्य साम्येनोपस्थितौ । अन्यथा विशेषादर्शनेन चिन्तितो निश्चितोऽपि विशेषदर्शनादन्यथा बाधितो भवति ॥ ७ ॥ उत्तरं श्रेष्ठं गोधनम् ॥ ८ ॥

[विष०] अयमाचार्यो द्रोणः । अर्थे पाण्डवत्रयोदशव-

---

३१ व. रुदन्त्येव । ३२ ज. च नः सेना । इति षट्चत्वारिंशोऽध्यायः॥४६॥ २ व. °मर्थ आचार्यो मया । ३ ज. ज्ञातैस्तैरेष समयः कृतः । ४ व. अज्ञावतासे; ज. अज्ञातवासं । ६ घ. व. लोभ आविशत् । ७ सप्तमाग्रे ज. स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः इत्यधिकम् । ८ ज. व. मत्स्यसेनां युयुत्सताम् । व. °तस्तेषां कः स्यात्पराङ्मुखः; क. कः स्यात्पराक्रमः ।

त्रिगर्तानां वयं हेतोर्मत्स्यान्योद्धुमिहागताः ।
मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्तयन् ॥ ९ ॥
तेषां भयाभिभूतानां तदस्माभिः प्रतिश्रुतम् ।
प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत् ।
सप्तम्यामपराह्णे वै तथा तैस्तु समाहितम् ॥ १० ॥
अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति ।
इमा गावो ग्रहीतव्या गते मत्स्ये गवां पदम् ॥११॥
ते वा गाश्चानयिष्यन्ति यदि वा स्युः पराजिताः ।
अस्मान्वा ह्युपसंधाय कुर्युर्मत्स्येन संगतम् ॥ १२ ॥
अथवा तानपाहाय मत्स्यो जनपदैः सह ।
सर्वया सेनया सार्धं संवृतो भीमरूपया ।
आयातः केवलं रात्रिमस्मान्योद्धुमिहागतः ॥ १३ ॥
तेषामेव महावीर्यः कश्चिदेष पुरःसरः ।
अस्मान्जेतुमिहायातो मत्स्यो वाऽपि स्वयं भवेत् ॥१४॥
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ॥ १५ ॥
अथ कस्मात्स्थिता ह्येते रथेषु रथसत्तमाः ।
भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च ॥१६॥
संभ्रान्तमनसः सर्वे काले ह्यस्मिन्महारथाः ।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथाऽऽत्मा प्रणिधीयताम् ॥१७

र्षोऽज्ञातवासलक्षणम् । मया कर्णेन चासकृद्वारंवारमुक्तः । पुनरपि वक्ष्यामि । नहि मृष्यामि तितिक्षामि । मृष तितिक्षायाम् ॥ २ ॥ द्वैधे द्विधाभावे ॥ ७ ॥

[ नील० ] ननु तर्हि मत्स्यत्रिगर्तविमर्दे कुरुभिरपि किमर्थं गन्तव्यमित्याशङ्क्याह—त्रिगर्तानामित्यादिना । ते तव समक्षमिति शेषः ॥ ९ ॥ तेषां त्रिगर्तानामर्थे तत् मत्स्यैः सह युद्धं प्रतिश्रुतम् ॥ १० ॥ न केवलं मित्रपक्षपातमात्रमस्माकमस्ति अपि तु स्वार्थोऽप्यस्तीत्याह—अष्टम्यामिति । तथा च स्वार्थे युध्यतां नास्माकमपराधोऽस्ति । मत्स्ये गवां त्रिगर्तैर्हृतानां पदं मार्गं गते सति अस्माभिरिमा गावो ग्रहीतव्याः ॥ ११ ॥ ते त्रिगर्ताः उपसन्धाय वञ्चयित्वा मत्स्येन संगतं स्नेहं कुर्युः सर्वथा पक्षत्रयेऽपि अस्माभिरिदानीं योद्धव्यमेवेत्यर्थः ॥ १२ ॥ तान् त्रिगर्तान् अपाहाय गोभिः सह उपेक्ष्य केवलं रात्रिं रात्रौ स्वगृहमायात इदानीं प्रातरस्मान्योद्धुमिहागत इति संबन्धः ॥ १३ ॥ पक्षान्तरमाह—तेषामिति ॥ १४ ॥ फलितमाह—सर्वैरिति । सर्वैरस्माभिरेकीभूय ये आगतास्तैः सह योद्धव्यमेवेत्यर्थः ॥ १५ ॥ आत्मा चित्तं प्रणिधीयतां सावधानं क्रियताम् ॥ १७ ॥

[ अर्जु० ] विप्रकाराणि विशुद्धप्रकाराणि ॥ ९ ॥ समाहिता प्रतिज्ञातम् ॥ १० ॥ ते वा गाव इत्यादि अवश्यमस्माभिर्योद्धव्यं तत् कथमेते पुरुषसत्तमा द्रोणादयः तिष्ठन्तीति दुर्योधनाभिप्रायः । कस्मिन् प्रकारे वृत्त इत्याह ते वा गाव इत्यादि ते त्रिगर्ता (गाः?)नयिष्यन्तीति विभक्तिव्यत्ययात् । यदि वा तथापि योद्धव्यं पराजिता वा अस्मानुपसंधाय संगम्य । अपसंधायेति पाठे अपगतसन्धिं कृत्वा मत्स्येन विराटेन सह संगतिं संधिं कुर्युः तथापि योद्धव्यमिति तात्पर्यम् । आयात्वा आगम्य । तथात्मा प्रणिधीयताम् प्रयत्नतः क्रियताम् ॥ १२ ॥

[ चतु० ] तैस्त्रिगर्तैर्गोधनं ग्रहीतव्यमिति समाहितं स्थापितम् ॥ १० ॥ अस्माभिश्च उदयसमये अष्टम्यां गोधनं ग्रहीतव्यमिति ॥ ११ ॥ (आयात्वा ?) अनतिवाह्य रात्रावेवेत्यर्थः ॥ १३ ॥ आत्मा यत्नः प्रणिधीयताम् ॥ १७ ॥

[ सर्वं० ] तर्हि मत्स्यत्रिगर्तयोर्युद्धे त्वमपि किमर्थमागतो नेत्यत आह—त्रिगर्तानामिति । तेषां त्रिगर्तानामर्थे तन्मत्स्यैः सह युद्धं प्रतिश्रुतं प्रतिज्ञातम् ॥ १० ॥ ते त्रिगर्ता उपसंधाय वञ्चयित्वा मत्स्येन संगतं स्नेहं कुर्युः । अस्माभिरिदानीं तु योद्धव्यमेवेत्यर्थः ॥ १२ ॥ तान् त्रिगर्तानपाहाय गोभिः सहोपेक्ष्य केवलं रात्रिं रात्रौ स्वगृहं आयात इदानीं प्रातरस्मान्योद्धुमिहागतः ॥ १३ ॥ पक्षान्तरमाह—तेषामिति ॥ १४ ॥ आत्मा चित्तं प्रणिधीयतां सावधानं क्रियताम् ॥ १७ ॥

[ विरा० ] तेषामस्माकं संबन्धे यदि (?) गवां दक्षिणदिक्स्थानाम् ॥ ११ ॥ ते त्रिगर्ताः । उपसंधाय मध्ये कृत्वा; अपसंधाय (दे) । संगतं प्रीतिम् ॥ १२ ॥ तान् त्रिगर्तान् । रात्रिम् आयात्वा तत्र सम्यक् क्षिप्त्वा । आयात्वा (दे) २ । आया (च ? त्वा) अनतिवाह्य (च) ॥ १३ ॥

[ विष० ] विप्रकारान्पराभवान् ॥९॥ तैः सुशर्मप्रभृतिभिरस्माभिः समाहितं मन्त्रितम् ॥ १० ॥ संगतं मैत्रीम् । ते त्रिगर्ता अस्माभिः सह कदाचित्संधिविरोधं विधाय मत्स्येन मैत्रीं कृतवन्तः स्युः वहुच्छला हि राजान इति ॥ १२ ॥

९ क. त्रिगर्तानां कृतं कार्यं पाण्डवानां च मार्गणम् । विप्रकारैर्हि मात्स्येन सुशर्मा बाधितः पुरा । व. बहूनस्मान्स्वकीर्तयन्; ज. °नस्मान्सुकीर्तयन् । १० व. वा तथा नस्तैः प्रतिश्रुतम् । १२ व. घ. गा नैव पश्यन्ति यदि । व. यदि वा ते पराजिताः । ज. ते वा गावस्तु नेष्यन्ति यदि वान्तःपराजिताः । व. प्युपसन्धाय; अतिसन्धाय । ज. अभिसन्धाय । व. मत्स्येन संगमम् । १३ ज. अथवा तानुपायातो; व. तानुपादाय । व. आयात्वा केवलां रात्रि° । व. योद्धुमुपागतः । १४ व. कश्चिदेकः पुरःसरः । व. ज. योद्धुमुपायातो । १५ व. सर्वैर्योद्धुमिहास्माभिः । १७ ज. संभ्रान्तनयनाः ।

आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा ।
यमेन वाऽपि संग्रामे को हास्ति न पुरं व्रजेत् ॥ १८ ॥
शरैरेभिः प्रणुन्नानां भग्नानां गहने वने ।
को हि जीवेत्पदातीनां भवेदश्वेषु संशयः ॥ १९ ॥
दुर्योधनवचः श्रुत्वा राधेयस्त्वब्रवीद्वचः ।
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ॥ २० ॥
जानाति हि मतं तेषामतस्त्रासयतीह नः ।
अर्जुने चास्य संप्रीतिमधिकामुपलक्षये ॥ २१ ॥
तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति ।
यथा सेना न भज्येत तथा नीतिर्विधीयताम् ॥ २२ ॥
हेषितं ह्युपशृण्वाने द्रोणे सर्वं विघट्टितम् ।
अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गताः ।
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् ॥ २३ ॥
इष्टा हि पाण्डवा नित्यमाचार्यस्य विशेषतः ।
आसयन्नपरार्थाश्च कथ्यते स्म स्वयं तथा ॥ २४ ॥
अश्वानां हेषितं श्रुत्वा कः प्रशंसापरो भवेत् ।
स्थाने वाऽपि व्रजन्तो वा सदा हेषन्ति वाजिनः ॥ २५ ॥
सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ २६ ॥
किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषादस्मासु केवलात् ॥ २७ ॥

---

आयात्वा आ समन्तात् यात्वा सेनया प्राप्य ॥ १३ ॥ आत्मा मनः प्रणिधीयताम् एकाग्रीक्रियताम् ॥ १७ ॥

[ लक्षा० ] ते वा गाव इत्यत्र गावः गाः ॥ १२ ॥ अथवा तानित्यत्र तान् ( पाण्डवान्? त्रिगर्तान् ) ॥ १३ ॥

[ नील० ] लब्धस्य गोधनस्य नाशे अस्माभिः स्वपुरं न प्रवेष्टव्यमिति प्रतिजानीते—आच्छिन्न इति । पदातयस्त्वस्मिन्युद्धे नङ्क्ष्यन्त्येवाश्वास्तु कदाचिज्जीविष्यन्त्यपीत्याह—शरैरिति प्राचां व्याख्या वक्तुरपकर्षसूचिका । वस्तुतस्तु आच्छिन्नेऽपहृते गोधने निमित्ते देवेन वा सह संग्रामे उपस्थिते सति अस्माकं भीष्मादीनां मध्ये हु इति प्रसिद्धः कोऽस्ति यो न पुरं व्रजेत् अपि तु प्रत्येकं सर्वे एव स्वं पुरं गन्तुं देवानपि जेतुं गाश्चाच्छेत्तुं समर्थाः स्म इत्यर्थः ॥ १८ ॥ शरैरिति । एभिरिति स्वकीयशरप्रदर्शनम् ॥ १९ ॥ आचार्यं रणाद्भीतं पृष्ठतः कृत्वा सेनामुखादपसार्य अस्मिन् भीते सर्वेऽपि भीताः स्युरिति भावः ॥ २० ॥ तेषां पाण्डवानां मतं संमतम् अस्मत्तेजोवधकरणं जानातीति ॥ २१ ॥ द्रोणे भीते सति सर्वं विघट्टितं विचलितं भवेत् सामर्थ्यमिति शेषः । ग्रीष्मे घर्मकाले वसन्ते इत्यर्थः । इतः षण्मासानन्तरं युद्धारम्भस्य शरदि दृष्टत्वात् । अदेशिकाः स्वदेशात् च्युताः व्यूहभङ्गो मा भूदित्यर्थः ॥ २३ ॥ इष्टा हीति । पाण्डवाः अपरार्थाः नास्ति परार्थो येषां तेऽपरार्थाः स्वार्थपरा आसयन् द्रोणं त्वत्समीपे स्थापितवन्तः । परकीयोऽयमित्यर्थः । तत्र हेतुमाह—स्वयं द्रोणेन तथा कथ्यते यथा पाण्डवीयत्वं स्वस्य प्रकाशते तथेत्यर्थः ॥ २४ ॥ एतदेव विवृणोति—अश्वानामित्यादिना ॥ २५ ॥ पार्थस्यार्जुनस्यामगनेऽत्र किं कार्यं किमर्थं वा सोऽनेन प्रशस्यते तत्र हेतुः—अन्यत्र पार्थश्रेयसि कामादभिलाषात् अस्मासु वा द्वेषात् जिघांसातः रोषात्तन्मूलादभिज्वलनात् ॥ २७ ॥

[ अर्जु० ] अर्थे गोधने गृहीते वा वर्तते वा(?) ॥ १८ ॥ सर्वं सैन्यमिति शेषः । विघट्टितं विमर्दितं द्रोणवचनादिति भावः । अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गता । न विभ्रमेद्यथा सेना तथा नीतिर्विधीयताम् । अदेशिकाः अविद्यमानात्मदेशिकाः यद्वा विदेशीया सेना शत्रुवशं गता इत्यत्र सविसर्गपाठे तु वयमित्यध्याहार्यम् ॥ २३ ॥ अन्यत्र कामाद्वेषाद्वा क्रोधाद्वेति चिरानुवन्धी क्रोधो द्वेषः तत्क्षणोत्पन्नो रोषः ॥ २७ ॥

[ चतु० ] आच्छिन्ने व्यावर्तिते ॥ १८ ॥ भग्नानामपथप्रविष्टानाम् ॥ १९ ॥ पृष्ठतः कृत्वा अनादृत्य ॥ २० ॥ हेषितमत्र स्वनम् । विघट्टितं विपरीतम् । अदेशिकाः मार्गाभिज्ञानहीनाः ॥ २३ ॥

[ सर्व० ] अश्वेषु अश्ववारेषु संशयः कदाचिज्जीविष्यन्त्यपि ॥ १९ ॥ तेषां पाण्डवानां मतं संमतम् अस्मत्तेजोवधकरणम् ॥ २१ ॥ हेषितमश्वशब्दम् । द्रोणे भीते सति सर्वं विघट्टितं विचलितं भवेत् अदेशिकाः स्वदेशात् च्युताः । भीष्मे भयानके ॥ २३ ॥ कामात् पार्थश्रेयसि अभिलाषात् ॥ २७ ॥

[ विरो० ] आछिन्ने व्यावर्तिते ॥ १८ ॥ भग्नानां पलायमानानाम् ॥ १९ ॥ अदेशिका २ अदैशिका (च) पथिप्रज्ञहीना ॥ २३ ॥ महासैन्ये युद्धे (?) स्थाने स्वस्थानेऽपि ॥ २५ ॥ किमत्रेति वर्षादीनामन्यजन्यत्वात् । अन्यत्र कामात् अर्जुनप्रीतेः । अस्मासु द्वेषात् ॥ २७ ॥

---

१८ क. अनाच्छिन्ने धनेऽस्माकम् । १९ व. शरैरभिप्रणुन्नानां । २१ व. जानामि हि; ज. अनुजानाति पार्थं हि मनस्त्रासयतीव नः । व. ज. अर्जुनेनास्य । २२ ज. यथा न विभ्रमेत्सेना । २३ व. ह्यपि शृण्वानो द्रोणः सर्वं विचेष्टितम् । व. आदेशिका । २५ व. का प्रशंसा भवेत्पुराः; ज. भवेत्परे । २६ व. तडित्तोयदनिर्घोषः । २७ व. कार्यं मानुष्ये कथं । व. अन्यत्र कामाद्धर्षाद्वा द्वेषाद्वाऽस्मासु ।

आचार्या वै कारुणिकाः प्राज्ञाश्चापापदर्शिनः ।
नैते महाभये प्राप्ते संप्रष्टव्याः कथञ्चन ॥ २८ ॥
प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः॥२९
बहून्याश्चर्यरूपाणि कुर्वाणा जनसंसदि ।
इष्वास्त्रे चोपसन्धाने पण्डितास्तत्र शोभनाः ॥३०॥
परेषां विवरज्ञाने मनुष्यचरितेषु च ।
हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि ॥ ३१ ॥
गोधनेषु प्रतोलीषु वरद्वारमुखेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ ३२ ॥
पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।
विधीयतां तथा नीतिर्यथा वध्यो भवेत्परः ॥ ३३ ॥
गा वश्च संप्रतिष्ठाप्य सेनां व्यूह्य समन्ततः ।
आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परैः ॥३४॥

इति श्रीमहाभारते विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

[ विष० ] आच्छिन्ने गृहीते ॥ १८ ॥ भवेदश्वेषु संशयः अतिवाहितत्वात् । भयातिवाहितोऽश्वोऽपि स्खलित्वा म्रियते ॥ १९ ॥ आचार्यं पृष्ठतः कृत्वा हस्तिनापुरं प्रति गच्छ-तामस्माकं पृष्ठरक्षः क्रियताम् । यद्वा पृष्ठतः पश्चात्कृत्वा त्यक्त्वेत्यर्थः ॥ २० ॥ तेषां पाण्डवानां मतं मन्त्रं जानाति। अतोऽस्मान्भीषयतीत्यर्थः ॥ २१ ॥ सर्वं सैन्यं विघट्टितं मर्दितं विद्रुतं द्रोणवचनादिति शेषः । विचेष्टितमिति पाठे क्लिसंस्थलं संजातम् (?) । अदेशका शत्रुदेशं प्राप्ता अविद्य-मानमार्गा पारकाभिद्रुता न विभ्रमेत् नश्येदिति ॥ २३ ॥ चिरानुबन्धी क्रोधो द्वेषः तत्क्षणोत्पन्नो रोषः । अन्यत्र पाण्ड-वेषु । कामाद्धर्षात् ॥ २७ ॥

[ लक्षा० ] अनाच्छिन्ने पुनरित्यत्र द्रव्ये गोधना-ख्यद्रव्ये अनाच्छिन्ने अस्माभिरपहृते सति ॥ १८ ॥ तथा नीतिरित्यत्र तथा अश्वपदातीनां प्राणसंशयः मरणं यथा न भवति तथा ॥ २० ॥ जानामि विजितमित्यत्र तेषां भीष्मा-दीनां विजितं विजयम् ॥ २१ ॥ इष्वास्त्रे इत्यत्र चापसं-धाने धनुर्विद्याभ्यासकाले ॥ २४ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[नील०] द्रोणमुपहसति–आचार्या इत्यादिना । कारु-णिका इत्यनेन युद्धधर्मानभिज्ञत्वमुक्तम् । अपापमहिंसा तद्-र्शिनः ॥ २८ ॥ आश्चर्यरूपाणि विनोदादीनि इष्वास्त्रे यज्ञा-युधे कपालादौ तेषामुपसंधाने आसादनप्रोक्षणादौ परेषाम् इष्वास्त्रज्ञानां याज्ञिकानां विवरज्ञाने छिद्रदर्शने ॥ ३० ॥ मनुष्यचरितेषु स्नानाचमनभोजनादिषु हस्त्यश्वरथचर्यासु हस्त्यादिना वाहनेन चर्या गमनं खरादीनां कर्मणि चि-कित्सादौ ॥ ३१ ॥ प्रतोलीषु गृहबाह्यावयवेषु प्रदीयमानब-लिदानादावित्यर्थ. । संस्कारो वैश्वदेवादिना, दोषः केशकी-टपातादिना ॥ ३२ ॥ गाः व इति च्छेदः गावश्च संप्रतिष्ठन्तामिति पाठान्तरे गाव इत्येकं पदम् । आरक्षाः रक्षकाः ॥ ३४ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ अर्जु० ] आचार्या इत्यादि । आचार्यादयो बाहुल्ये-नापायदर्शनशीलाः ॥ २८ ॥ इष्वस्त्रे इष्वभ्यासविषये । विषयिणो लक्षणात् विषयज्ञाने ॥ ३० ॥ विवरं छिद्रं ॥ ३१ ॥ अन्नसंस्कारदोषेषु अन्नसंस्कारे पाकादिगुणे दोषे लवणाद्रीणामाधिक्ये ॥ ३२ ॥ आरक्षा समन्तात् परि-पालकाः ॥ ३४ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ चतु० ] उपासनेषु बाणाभ्यासेषु ॥ २९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ सर्व० ] आश्चर्यरूपाणि विनोदादीनि । इष्वास्त्रे य-ज्ञायुधे स्रुग्यादौ तेषामुपसंधाने आसादनादौ परेषां याज्ञिका-नां विवरज्ञाने छिद्रदर्शने ॥ ३० ॥ मनुष्यचरितेषु भोजना-दिषु चर्यासु हस्त्यादिना वाहनेन गमनं खरादीनां कर्मणि चिकित्सादौ ॥ ३१ ॥ प्रतोलीषु गृहबाह्यावयवेषु प्रदी-यमानबलिदानादावित्यर्थः, संस्कारो वैश्वदेवादिना । दोषः केशपातादिना ॥ ३२ ॥ आरक्षाः रक्षकाः ॥ ३४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[विरो०] कारुणिकाः; कारणिकाः परीक्षकाः ॥२८॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ विष० ] उपायदर्शिनः उपायाः सप्त सामदानाद-यस्तान्पश्यन्ति । प्राज्ञाः बुद्धिमन्तः । अपायदर्शिन इति

---

२८ दे. क. घ. ण. च.व. प्राज्ञाश्चापायदर्शिनः; व. 'श्चोपायदर्शिनः । क. नैते महाहवे घोरे संप्रष्ट' । २९ ङ. ज. गोष्ठीषूपासनेषु च । ३० व. कुर्वते; ज. कुर्वन्तो जनसंसदि । व. इष्वस्त्रे चारुसंधाने । ३३ व. वध्येत वै परः ।

३४ व. गावश्चैव प्रतिष्ठ [न्तु] न्तां; ज. सेनां व्यूहन्तु मा चिरम्; व. व्यूहत मा चिरम् । इति सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ४८

कर्णेनात्मश्लाघनपूर्वकमेकाकिनैवात्मनाऽर्जुनपराजयप्रतिज्ञानम् ॥ १ ॥

**कर्ण उवाच—**

सर्वानायुष्मतो भीतान् संत्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ १ ॥
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ २ ॥
मम चापप्रयुक्तानां शराणां नतपर्वणाम् ।
नावृत्तिर्गच्छतां तेषां सर्पाणामिव सर्पताम् ॥ ३ ॥
रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया ।
छादयन्तु शराः पार्थं शलभा इव पादपम् ॥ ४ ॥
शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम्
श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ॥ ५ ॥
समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च ।
जातस्नेहश्च युद्धेऽस्मिन्मयि संप्रहरिष्यति ॥ ६ ॥
पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव ।
शरौघान्प्रतिगृह्णातु मया मुक्तान् सहस्रशः ॥ ७ ॥
एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः ।
अहं चापि नरश्रेष्ठादर्जुनान्नावरः क्वचित् ॥ ८ ॥
इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः ।
दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ॥ ९ ॥
अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम् ।
धार्तराष्ट्राय दास्यामि निहत्य समरेऽर्जुनम् ॥ १० ॥
अन्तरा छिद्यमानानां पुङ्खानां व्यतिशीर्यताम् ।
शलभानामिवाकाशे प्रचारः संप्रदृश्यताम् ॥ ११ ॥
इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसम् ।
अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ १२ ॥
रथादतिरथं शूरं सर्वशस्त्रभृतां वरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ १३ ॥
तमग्निमिव दुर्धर्षमसिशक्तिशरेन्धनम् ।
पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितम् ॥ १४ ॥
अश्ववेगपुरोवातो रथौघस्तनयित्नुमान् ।
शरधारो महामेघः शमयिष्यामि पाण्डवम् ॥ १५ ॥

---

पाठे दूरादेवापायमनर्थं पश्यन्तीत्यर्थः ॥ २८ ॥ इष्वस्त्रे चारुसंधाने इष्वस्त्राभ्यासे ॥ ३० ॥ अन्नसंस्कारदोषेषु लवणहिङ्गुमरीचादीनामाधिक्ये ॥ ३२ ॥ परेषां शत्रूणाम् ॥ ३३ ॥ आरक्षाः समन्तात्पालकाः ॥ ३४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ नील० ] सर्वानिति । सर्वान् भीष्मादीन् अनवस्थितान् चञ्चलान् ॥ १ ॥ अवृत्तिर्लक्ष्यच्युतिर्न ॥ ३ ॥ पुङ्खसक्तानां सक्तपुङ्खानाम् ॥ ५ ॥ गार्ध्रवाजितः गृध्रपक्षैर्वाजो वेगः शब्दः पक्षो वा संजातो येषां तैः 'वाजो निःस्वनपक्षयोः । वेगे पुमान्' इति मेदिनी ॥ ९ ॥ अक्षय्यमितरैः क्षपयितुमशक्यम् ॥ १० ॥ पुङ्खानां पुङ्खवतां शराणाम् ॥ ११ ॥

[ अर्जु० ] सर्वानायुष्मतः अनुकम्प्यान् ॥ १ ॥ आवृत्तिर्निवृत्तिः ॥ ३ ॥ हस्तवता लघुहस्तेन ॥ ४ ॥ प्रशस्तानां पुङ्खलग्नानाम् ॥ ५ ॥ जातस्नेहः जातेच्छुः ॥ ६ ॥ अर्जुनावयवः अर्जुनसदृश इत्यर्थः । अर्जुनादवरो नाम पुमान् कश्चित् ॥ ८ ॥ गार्ध्रराजितैः गार्ध्रपक्षयुतैः ॥ ९ ॥

[ चतु० ] संत्रस्तानुद्विग्नान् ॥ १ ॥ समाहितः सप्रतिज्ञः ॥ ६ ॥ अवरो हीनः ॥ ८ ॥ गार्ध्रवाजितैः प्रपक्षपक्षाच्छादितैः ॥ ९ ॥ अन्तरा मध्ये व्यतिकीर्यतामितस्ततः स्थितानाम् ॥ ११ ॥

[ सर्व० ] अनवस्थितान् चञ्चलान् ॥ १ ॥ अवृत्तिर्लक्ष्यच्युतिर्न ॥ ३ ॥ पुङ्खसक्तानां सक्तपुङ्खानाम् ॥ ५ ॥ गार्ध्रवाजितैः गृध्रपक्षैर्वाजो वेगः संजातो येषाम् ॥ ९ ॥ अक्षय्यमितरैः क्षपयितुमशक्यम् ॥ १० ॥

[ विरो० ] अनवस्थितान् अनुप(च) ॥ १ ॥ शराणां शब्दः ॥ ५ ॥ स्नेह इच्छा ॥ ६ ॥ पाण्डवो युधिष्ठिरोऽग्निवदाराध्यो यस्य तं पाण्डवाग्निम् । अहितं शत्रुं प्रदहन्तम् ॥ १४ ॥ स्तनयित्नुः शब्दः ॥ १५ ॥

[ विष० ] द्रोणादीनां प्रति काकुवाक्यम्—सर्वान्द्रोणभीष्मकृपाश्वत्थाम्नः आयुष्मतः दीर्घायुषः । एतेषां वशे मृत्युस्तिष्ठतीति । द्रोणो युध्यन्न म्रियते । भीष्म इच्छामृत्युः । कृपाऽश्वत्थामानावजरावमरौ । ते कथं शत्रुभ्यो बिभ्यति । अनवस्थितान् स्थैर्यरहितान् ॥ १ ॥ न आवृतिः

---

१ ज. °मनसः सर्वे धनंजयकृताद्भयात् । २ ज. यद्येष; व. °रयाम्येनं वेलेव । ३ व. ज. गच्छतामस्ति । ५ ज. पुंखशब्दानां । व °हतयोर्भृशम् । ६ व. ज. जातस्नेहस्य युद्धस्य मयि । ८ व. ज. वयं चापि कुरुश्रेष्ठादर्जुनान्ना-वराः । ९ ज. शलभैरिव । १० ज. तस्याहं रणमक्ष° । ११ च. ज. ङ. व्यतिकीर्यताम् । १२ व. ज. इन्द्राशनिसमस्पर्शैर्महे°; घ. महेन्द्रसमविक्रमम् ।

मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः ।
शराः समभिसर्पन्तु वल्मीकमिव पन्नगाः ॥ १६ ॥
सुतेजनै रुक्मपुङ्खैः सुधौतैर्नतपर्वभिः ।
आचितं पश्य कौन्तेयं कर्णिकारैरिवाचलम् ॥ १७ ॥
जामदग्न्यान्मया ह्यस्त्रं यत्प्राप्तमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ १८ ॥
ध्वजाग्रे वानरस्तिष्ठन् भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन् भैरवान्रवान् ॥ १९ ॥
शत्रोर्मया विपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः ॥ २० ॥
अद्य दुर्योधनस्याहं शल्यं हृदि चिरस्थितम् ।
समूलमुद्धरिष्यामि बीभत्सुं पातयन् रथात् ॥ २१ ॥
हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निःश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ २२ ॥
कामं गच्छन्तु कुरवो धनमादाय केवलम् ।
रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ २३ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ४९

कृपेणार्जुनचरित्रकथनपूर्वकं कर्णगर्हणम् ॥ १ ॥

कृप उवाच—
सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥ १ ॥
माया हि बहवः सन्ति शास्त्रमाश्रित्य चिन्तिताः ।
तेषां युद्धं तु पापिष्ठं वेदयन्ति पुराविदः ॥ २ ॥

---

आवरणं सन्नाहादि (?) । हस्तवता लघुहस्तेन ॥४॥ बाणो बाणस्य पुङ्खसक्तो याति एकबाण इव ॥ ५ ॥ जातस्नेहः संजातेच्छः ॥ ६ ॥ पात्रीभूत इति पाशुपतायस्त्रसामग्र्यतया मम योग्यः । मुक्तान्मुक्ताफलान् । सहस्रशः लक्षरूपान् ॥ ७ ॥ नावरः न हीनः ॥ ८ ॥ पुरा द्यूतारम्भे अहं धनञ्जयं जेतेति प्रतिज्ञातम् ॥ १० ॥ पुरोवातो पूर्ववातः “ पुरोवातं च विद्युतं च मनसा ध्यायेत् ” इति श्रुतेः । पूर्ववातो वृष्टिहेतुरिति ॥ १५ ॥

[नील०] नतपर्वभिः समीकृतग्रन्थिप्रदेशैः ॥ १७ ॥ विपन्नानां भ्रंशितानाम् ॥ २० ॥ धनं गोधनम् ॥ २३ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. अष्टचत्वारिंशोऽध्यायः॥४८॥

[अर्जु०] सुतेजितैः शाणादिनिर्मलीकृतैः । सुराजितैरिति पाठे शोभनो राजः पक्षो जातो येषु । तारकादित्वादितच् ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[चतु०] सुतेजनैः सुस्पष्टधारैः । आचितमर्पितम् ॥ १७ ॥ अभिपन्नानां पराभूतानाम् ॥ २० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[सर्व०] धनं गोधनम् ॥ २३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[विरो०] सुतेजनैः; सुराजितैः ॥ १७ ॥ शत्रोर्ध्वजवासिनाम् ॥ २० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[विष०] अश्चितं पूजितम् ॥ १७ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[नील०] अर्थानां गवादीनां प्रकृतिं प्राप्तिकारणम् अनुबन्धं प्राप्तौ वा फलं नहि द्यूतमर्थप्राप्तेर्मुख्यं कारणं नापि ततः प्राप्तानामर्थानां परिणामे सुखकरत्वं चास्तीत्यभिसंधिः ॥ १ ॥ माया इति । येषां शकुन्यादीना मायाः कपटानि बहवः बह्वयः सन्ति तेषां दृष्ट्या युद्धं पापिष्ठं नाशकरत्वात् । नहीदानीमर्जुनो द्यूतेनेव मायामात्रेण जेतुं शक्य इति भावः । पाठान्तरे नयाः नीतयः सामाद्यास्तेषां मध्ये युद्धं पापिष्ठम् ॥ २ ॥

[अर्जु०] अर्थानां प्रकृतिं वेत्थ नानुबन्धमवेक्षसे प्रकृतिं मूलकारणम् । अनुबन्धं पश्चाद्भवमनर्थादिकम् ॥ १ ॥ माया, मया, नया, एतानि पाठान्तराणि । नया हि बहवः

---

१७ म. ज. सुतेजसै रु° । व. सुपीतैर्नख° ; ज. सुपानैर्नत° । दे. अर्चितं । १८ ज. संप्राप्तमृषि° । व. अपाश्रित्य; ज. युध्येयममरैरपि । १९ ज. वानरश्रेष्ठो । व. भल्लेनाभिहतो । २० ज. व. मयाभिपन्नानां । ज. दिक्षु प्रद्रवमाणानामस्तु । २२ ज. पौरुषे पर्यवस्थिते । व. कौरवम् । २३. घ. व. वाधितिष्ठन्तो युद्धं पश्यत्वमानुषम् । अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
१. ज. अर्थानां प्रकृतिं । व. वेत्थ नानु° । २ व. ज. नया हि ब° ।

देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह फलं न लभते पुनः ॥
देशे काले च विक्रान्तं कल्याणाय विधीयते ॥ ३ ॥

आनुकूल्येन कार्याणामन्तरं संविधीयते ।
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ॥ ४ ॥

शास्त्राण्येव केवलान्याश्रित्य वर्तमाना इति शेषः । चिन्तिता विमृष्यावधारिताः सन्तीत्यन्वयः । कथं सन्तीत्याह–तेषामिति ॥ २ ॥

[ चतु० ] अर्थानां धनानाम् । प्रकृतिं संग्रहणम् । नार्थानामिति पाठे अर्थानां प्रयोजनानां प्रयोजकानां प्रकृतिं स्वभावं मन्त्रोपमं(?) वा अनुबन्धमौत्तरकालिकं फलम् ॥१॥

[सर्वं०] प्रकृतिं प्राप्तिकारणम् अनुबन्धं प्राप्तौ फलम् ॥ १ ॥ नयाः नीतयः तेषां मध्ये युद्धं पापिष्ठं नाशकरत्वात् ॥ २ ॥

[ विरो० ] अर्थानां फलानां प्रकृष्टा कृतिरस्मात्प्रकृतिमुपायम् । अनुबन्धमुत्तरकालफलम् । नार्थानामिति पाठे प्रकृतिं सूपायम् (?) ॥ १ ॥

[ विष० ] शास्त्राण्याश्रित्य विमृश्य चिन्तिता निर्धारिताः ॥ २ ॥

[ लक्षा० ] नानुबन्धमवेक्षसे इत्यत्र अनुबन्धं युद्धायानुकूलकालसंबन्धम् ॥ १ ॥ नया हि बहव इत्यत्र नयाः सामदानाद्याः संधिविग्रहाद्याश्च । तेषां नयानां मध्ये युद्धं प्रागेव युद्धं सुपापिष्ठम् अतिशयेन पापम् ॥ २ ॥

[ नील० ] देशेति । इदानीं ग्रीष्मो न युद्धकालः श्रान्त्या जलाभावेन च सद्यो वाहनानां नाशापत्तेः । नापि देशो गिरिदुर्गाद्याश्रितोऽस्तीति भावः । युद्धं फलं न लभते फलं न लम्भयेत् । परस्य तु देशकालावनुकूलावेव वर्तेते इति भावः। विक्रान्तं पराक्रमः ॥३॥ देशादेरानुकूल्येन हेतुना कार्याणां युद्धादीनामन्तरं तादर्थ्यं फलवत्त्वमिति यावत् । संविधीयते सम्यक् क्रियते 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इति मेदिनी । मन्त्राणामिति पाठे देशाद्यानुकूल्येन कार्यं विचार्यमित्यर्थः । तत्राभाणकमाह–भारमिति । यथा रथकारेण दिव्योऽयं मया निर्मितो रथः सुदृढाङ्गोऽनेन त्वं देवानपि सर्वथा जेष्यसीत्युक्ते तद्वचसि भारं दत्त्वा देशकालानुकूल्यमनवेक्ष्यैव पण्डिता न व्यवस्यन्ति योद्धुमिति शेषः । एवं त्वद्वचसि भारं दत्त्वा देशाद्यानुकूल्यमनवेक्ष्य कथमस्माभिर्योद्धव्यं तव तु वचनं रथकारवचनवदर्थशून्यमिति भावः । सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्ष्य इति यत्कर्णेनोक्तं तस्यैतदुत्तरम् ॥ ४ ॥

[ अर्जु० ] आनुकूल्येन कार्याणामन्तरं न विधीयते । भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः । आनुकूल्येन देशादीनामन्तरं विशेषः । अननुकूलदेशकालादेः कार्यानुदयात् भारं देशकालपात्रावस्थानुसारेण व्यापारकलापं रथकारस्य रथिनः न व्यवस्यन्ति न निश्चिन्वन्ति पण्डिता इत्युपालम्भे भवद्विधाः । यद्वा कार्याणां युद्धादिकार्याणा कल्यानामन्तरं प्रस्तावः आनुकूल्येनात्मनोऽनुकूलत्वेन संविधीयते न तु प्रतिकूलतया । काले देशे च युद्धादीनां प्रस्तावः क्रियते । अथवात्रैवोक्तं 'काले देशे च विक्रान्तं कल्याणायोपकल्पते' इति । केचिदेवं पठन्ति–आनुपूर्व्या च कार्याणामित्यादि व्याचक्षते च प्रकरणात् 'हे राधेय कार्याणां मित्रसंग्रहादीनां संविधानं निष्पादनमानुपूर्व्येण साम्ना दानेन भेदेन दण्डेनेति क्रमेण विधीयते न तु प्रागेव युद्धं, तेषां युद्धं तु पापिष्ठमितीहैवोक्तत्वात् । संविधानं संविदैर्विधिनयविद्भिः (?) न तु भवद्विधैरित्यर्थादिति । कुत इत्यत आह–भारं हीत्यादि । हि यस्माद्रथकारस्य भारं रथचक्रादीनां यथास्थानं विन्यासं पण्डिताः शास्त्रेण न व्यवस्यन्ति किंतु रथकार एव । एतेन भवद्भिरपि सामादिविधानं न ज्ञायत इति तात्पर्यम् । अथवा रथं कारयतीति रथकारः घटनस्योपदेष्टा सारथिः तस्य भारं रथस्योपकारं पण्डिता अस्मद्विधा न व्यवस्यन्ति तव मतानुसारिणो वयमित्यर्थः । तर्हि किं कर्तव्यमित्याशङ्कायामाह–'परिचिन्त्य तु पार्थेन सानुपातो न नः क्षमः' इति । इदमत्रोन्नेयं सामाद्युपायैस्तावन्मित्रसंग्रहादीनि साध्यन्ते न तावदर्जुनः सामसाध्यः यतः 'ऋजवो मृदवश्चैव सामसाध्याः प्रकीर्तिताः' । नापि दानसाध्यः यतः 'ऋजवो लोभयुक्ताश्च दानसाध्याः सदा नराः' । नापि भेदसाध्यः समुत्पन्नज्ञानत्वात् 'अनुत्पन्नधियश्चैव भेदसाध्या नराः स्मृताः' । नापि दण्डसाध्यः अनिवृत्तोपगमत्वात् (?) । एतत् परिचिन्त्य पार्थेन सह सानुपातः संबन्धो नोऽस्माकं न क्षमः न मत इत्यर्थः । आनुपूर्व्येणेत्यादेरयमर्थः–आनुपूर्व्येण यथाक्रमं सामादीनामुपायानां किमर्जुनः सामसाध्यः न तावद्दण्डसाध्य इत्यादि पूर्ववत् । न चैषामेकतरेऽपि पक्षेऽर्जुनो वर्तते उक्तं च 'दूरपाती कृतास्त्रश्च दृढमुष्टिर्युवा बली । मन्युमांश्च बलोपेतस्तेनाशक्योऽयमर्जुनः' अथ सामाद्युपायैरशक्योऽयमर्जुन इति सामाद्युपायक्रमयोगेन च कर्मणां मित्रसंग्रहादिकार्याणां संविधीयते । संविधानमिति पाठे न चासाध्यत्वान्नापेक्षणीय एवायं पार्थ इति युक्तं वैरस्योत्थापितत्वात् । अतः कथंचिद्दण्डसाध्योऽयं पार्थः । न च युद्धादन्यो दण्डः संभवति तत्रापि चा(ना)

३ व. देशकालेन विक्रान्तं । म. कल्याणमभिधीयते । ४ व. संविधीयताम् । ज. भावं हि ।

**परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः ।**
**एकः कुरूनभ्यगच्छदेकश्चाग्निमतर्पयत् ॥ ५ ॥**

स्य भीष्मः प्रतियोगी शिखण्डिसाध्यत्वात्, नापि कर्णो घृणित्वात्, न चाप्यश्वत्थामा पार्थेन सह संजातहार्दत्वात् तस्मात् द्रोणस्यायं भारो नान्यस्य इत्यभिप्रेत्याह–भारं हीति उक्तार्थे, तस्माद्द्रोण एव संमानदानादिभिः संवर्धनीय इति भावः । एकैकेनेति पाठः साधीयान् प्रतिभाति । संवर्धनीय इति भारसहायेनेत्यर्थः ॥ ४ ॥

[ चतु० ] आनुकूल्येनाप्रतिबन्धेन । अन्तरमवकाशम् । रथकारस्य वर्धकेर्न व्यवस्यन्ति । रथकारो हि रथनिर्माता । ये योद्धारस्ते तस्य वाहनादावकुरुते । प्रकृते रथकारस्य सूतजातीयस्य तव वैराहरणं सुकरमेव । तत्पुना राजन्यवे पतिष्यतीति भावः । अथवा रथकारस्य यादृशो भावो रथकारणलक्षणघटनादिलक्षणः तं पण्डिता न व्यवस्यन्तीति । नीचाचरितं कर्म साधवो न व्यवस्यन्तीति न बलवद्विरोधः कर्तुं नोचित इत्यर्थः । अविपन्नानां द्रोणोऽर्जुनं न योधयिष्यतीति । यतोऽर्जुनो रथः । द्रोणस्तु रथकारः । यद्वा । कर्णस्य को भारः । अस्माकमयं भारः । रथं गुरुकुर्वतोऽपि नुर्वोढुः । टीकान्तरम् ॥ ४ ॥

[सर्व०] अन्तरं तादर्थ्ये फलत्वमिति यावत् । संविधीयते सम्यक् क्रियते । यथा रथकर्ताऽनेन रथेन देवानपि त्वं जेष्यसीत्युक्ते तद्वचसि भारं दत्त्वा देशकालानुकूल्यमनपेक्ष्यैव पण्डिता योद्धुं कथं व्यवस्यन्ति । तथा केवलं त्वद्वचसि भारं दत्त्वा कथमस्माभिर्योद्धव्यम् ॥ ४ ॥

[ दुर्घ० ] आनुपूर्व्येण कार्याणां सविधानं विधीयते । भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः । गोग्रहे युद्धे भारद्वाजादिभिः शिरोग्रीवादिलिङ्गं वीक्ष्यार्जुनोयमिति उक्ते दुर्योधनो ब्रूते आनुपूर्व्येणेत्यादि । यथाक्रमेण सामाद्युपायानां किमर्जुनः सामसाध्यः उत दानसाध्यः आहोस्विद्भेदसाध्यः उत दण्डसाध्य इति । तत्र न तावत्सामसाध्यः यतो नायमृजुः नापि मृदुः । उक्तं च 'ऋजवो मृदवश्चैव सामसाध्याः प्रकीर्तिताः' । नापि दानसाध्यः । यतः–' ऋजवो लोभयुक्ताश्च दानसाध्याः सदा नराः' । नापि भेदसाध्यः । यतः–' समुत्पन्नभियश्चैव भेदसाध्या नराः स्मृताः' नापि दण्डसाध्यः । यतः–' अनिवृत्तोपशमना दण्डसाध्या नराधमाः' । न चैषामेकतरपक्षेऽप्यर्जुनोऽस्ति । स पुनः 'दूरपाती कृतास्त्रश्च दृढमुष्टिर्युवा बली । मन्युमांश्च बलोद्रिक्त [श्चरते धृष्ट] स्तेनाऽसाध्योऽयमर्जुनः' । सामाद्युपाय [द्युप] क्रमयोगेन

**एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।**
**एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ॥ ६ ॥**

च मित्रसंग्रहादिकार्याणां संविधानं सिद्धिर्विधीयते । न चासाध्यत्वादुपेक्षणीय एवायमर्थ इति युक्तं स्वयमेव वैरस्योत्पादितत्वात् । अतः कथं चिद्दण्डसाध्योऽयमर्थः । न तावद्युद्धादन्यो दण्डः संभवति न चास्य भीष्मः प्रतियोगी शिखण्डिसंनिधानात् । नापि कर्णः घृणित्वात् । नाप्यश्वत्थामा पार्थेन समं संजातहार्दत्वात् । तस्माद्द्रोणस्यायं भारो नान्यस्येत्यभिप्रेत्याह–भारं हीति । रथकारस्य हि भारो रथघट्टनं यथास्थानं युगचक्राक्षकूबरदण्डवरूथादिनिवेशनम् । तत्र पण्डिताः कर्तुमभिलषन्ति । किंतु रथकार एव । किंतु बुद्धिरेव तेषां परायणं न कर्माणीति भावः । अतो द्रोण एव संमानदानादिभिरस्माभिः संवर्धनीय [ समर्थनीय ] इति भावः ॥ ४ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ विरो० ] अन्तरं मनः । यथा कार्यानुकूल्यं तथैव मनसा चिन्तनीयमित्यर्थः । अशक्योऽध्यवसायो न युक्त इत्याह—भारमिति । रथकारस्य भारं रथनिर्माणानुकूलचेष्टां व्यवस्यन्ति अध्यवस्यन्ति । वयं रथानुकूलव्यापारं करिष्याम इति नोत्सहन्ते । तदज्ञानादित्यर्थः ॥ ४ ॥

[ विष० ] देशकालेन विक्रान्तं देशकालपात्रानुसारेण व्यापारकलापकम् ॥ ३ ॥ आनुकूल्येन अनुकूलतयाऽऽत्महिततयेत्यर्थः । अन्तरं संविधीयताम् संनिधानं क्रियतामन्तरमनन्तरकरणीयम् । आत्महिततया देशादीनामन्तरं विशेषः । भारं हि रथकारस्येति । रथकारेण रथो घटितः स रथो महान्तं भारं वोढुं क्षमः । परंतु रथकारः रथवाह्यं भारं वोढुं न क्षमते । तथाऽहमपि । अर्जुनोऽस्माभिः शिक्षितः । रथवदर्जुनोऽधिकः । रथकारवन्नाहं भारं वोढुं क्षमः । इति चिन्तयित्वा पार्थेनाऽर्जुनेन सह संग्रामो न युक्तः तस्मात्संधानं क्रियते न संग्रामः । रथेन युद्धकरणाद्रथकारो रथी तस्य भारं संग्रामसामर्थ्यं पण्डिता इति पण्डितं मन्वाना न व्यवस्यन्ति न निश्चयं कर्तुं शक्नुवन्ति । पण्डिता इत्युपालम्भे भवद्विधाः ॥ ४ ॥

[लक्षा०] भारं हि रथकारस्येत्यत्र 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठकृत्' इत्यमरः । रथकारस्य कर्मकारस्य भारं मनसिनिहितकार्यभारम् ॥ ४ ॥

[नील०] विचारफलमाह–परिचिन्त्येति ॥ ५ ॥

[ चतु० ] पार्थेनेति ॥ ५ ॥ आरोप्य सत्कृत्य ॥ ६ ॥

[ विरो० ] द्वैरथे युद्धार्थम् अकृष्णं बलरामम् आह्वयत्

५ घ. व. कुरूनभ्यरक्षत् ।

एकः किरातरूपेण स्थितं रुद्रमयोधयत् ।
अस्मिन्नेव वने पार्थो हृतां कृष्णामवाजयत् ॥ ७ ॥
एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ।
एकः सोऽयमरिं जित्वा कुरूणामकरोद्यशः ॥ ८ ॥
एको गन्धर्वराजानं चित्रसेनमरिन्दमः ।
विजिग्ये तरसा संख्ये सेनां प्राप्य सुदुर्जयाम् ॥९॥
तथा निवातकवचाः कालखञ्जाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ १० ॥
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशे कृताः ॥ ११ ॥
इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥१२॥
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अवमुच्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ १३ ॥
अथवा कुञ्जरं मत्तमेक एव चरन्वने ।
अनङ्कुशं समारुह्य नगरं गन्तुमिच्छसि ॥ १४ ॥
समिद्धं पावकं चैव घृतमेदोवसाहुतम् ।
घृताक्तश्चीरवासास्त्वं मध्येनोत्सर्तुमिच्छसि ॥ १५॥
आत्मानं कः समुद्बध्य कण्ठे बद्ध्वा महाशिलाम् ।
समुद्रं तरते दोर्भ्यां तत्र किं नाम पौरुषम् ॥ १६॥
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः॥ १७॥
अस्माभिर्ह्येष निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥ १८॥
एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम्॥१९॥
सह युध्यामहे पार्थमागतं युद्धदुर्मदम् ।
सैन्यास्तिष्ठन्तु सन्नद्धा व्यूढानीकाः प्रहारिणः २०॥
द्रोणो दुर्योधनो भीष्मो भवान् द्रौणिस्तथा वयम् ।
सर्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥ २१ ॥
वयं व्यवसितं पार्थं वज्रपाणिमिवोद्धतम् ।
षड्रथाः प्रतियुध्येम तिष्ठेम यदि संहताः ॥ २२ ॥
व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः ।
युध्यामहेऽर्जुनं संख्ये दानवा इव वासवम् ॥ २३ ॥

इति श्रीमहाभारते विराटपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

मनसा (शेषः) । यद्वा आरोप्य गृहे स्थापयित्वा अकृष्णं कृष्णसदृशमिन्द्रं खाण्डवदाहार्थम् ॥ ६ ॥

[ विष० ] एकेनार्जुनेन बहूनि महान्ति कर्माणि विहितानि नाऽस्माभिरिति दर्शयति—एकः कुरूनित्यादिभिः सार्धपञ्चभिः श्लोकैः ॥ ६ ॥

[ लक्षा० ] एकः कुरूनित्यत्र कुरून् दिग्विजयकाले उत्तरकुरून् ॥ ५ ॥

[ नील० ] प्रदेशिन्या तर्जन्या ॥ १३ ॥ मध्येन मध्यत उत्सर्तुमुत्सर्पितुम् ॥ १५ ॥ यत्तूक्तम् 'कामं गच्छन्तु कुरवो धनमादाय केवलम् ॥ रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकम्' इति तत्राह—षड्रथा इति । संहताः षडपि एकीभूय तेनैकेन योद्धुं कथंचिच्छक्ष्यामो न त्वेकैकश इति भावः ॥ २२ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
एकोनपञ्चाशत्तमोऽध्यायः ॥४९॥

[ अर्जु० ] शर्वं किरातरूपिणं रुद्रम् ॥ कृष्णोऽर्जुनः कृष्णां द्रौपदीम् ॥७॥ अवमृष्य अभिभूय प्रदेशिन्याङ्गुष्ठानन्तरतर्जनाङ्गुल्या ॥ १३ ॥ निकृतो वञ्चितः॥ १८ ॥ प्रत्यवस्कन्द्य प्राप्य ॥ १९ ॥

इति श्रीमन्म० मर्जु० विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ चतु० ] शर्वमीशानम् । हृतां जयद्रथेनेति शेषः ॥ ७ ॥ पाशविनिर्मुक्तौ वेति वा शब्द इत्यर्थः । पाशविनिर्मुक्त इत्यपि वा पाठः । रूपकम् ॥ १८ ॥ अवस्कन्द्य समुपेत्य ॥ १९ ॥ सैन्याः सेनानायकाः ॥ २० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि
एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

[ सर्व० ] तर्जन्या ॥ १३ ॥ उत्सर्तुम् उत्सर्पितुम् । चीरं कुशनिर्मितं वस्त्रम् ॥ १५ ॥ संहताः मिलिताः ॥ २२ ॥

इति श्रीसर्व० भारतार्थ० वि० एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

[ विरो० ] एको गन्धर्वराजानम् एको मुख्यः सन् एकपदप्रयोगमात्रे तात्पर्यात् ॥ ९ ॥ एक एकेन एकैकेन हे एक अन्य अयोग्य । यद्वा एको मुख्यश्चासौ एकश्चेति तेन । कचित् मुख्येन कचिदेकेनेत्यर्थः ॥ ११ ॥ निर्मुक्तः विमुक्तो वाचा (?)॥ १८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

७ घ. ज. व. एक एव वने कृष्णो । ८ घ. एकश्च नव । ११ ज. एकेन हि यथा तेन भूमि० । १२ घ. योद्धुमिच्छति । व. यस्ते नाशंससे । १३ व. अविमृश्य प्र°; ज. अवमृश्य । १५ व. ज. °नोत्तर्तुमिच्छसि । १६ व. ज. यः खमुद्बध्य, व. बद्ध्वाथवा शिलाम् । १७ ज. कर्ण पार्थं त्वं योद्धुमिच्छसि । १८ ज. न वः शेषं । २० व. पार्थं मातङ्गं । २२ घ. ज. व्यवसिता पार्थे । व. वज्रवेगमिवोद्यतम् ॥ एकोनपञ्चाशोऽध्यायः ।

## पञ्चाशत्तमोऽध्यायः ५०

द्रोणनिन्दया क्रुद्धेनाश्वत्थाम्ना कर्णदुर्योधनयोररुन्तुदेन वचसाऽधिक्षेपः ॥ १ ॥

**अश्वत्थामोवाच—**

न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे ॥ १ ॥
संग्रामांश्च बहूञ्जित्वा लब्ध्वा च विपुलं धनम् ।
विजित्य च परां सेनां नाहुः किंचन पौरुषम् ॥ २ ॥
दहत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ॥ ३ ॥
चातुर्वर्ण्यस्य कर्माणि विहितानि स्वयंभुवा ।
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ ४ ॥
अधीत्य ब्राह्मणो वेदान् याजयेत यजेत वा ।
क्षत्रियो धनुराश्रित्य यजेचैव न याजयेत् ॥ ५ ॥
वैश्योऽधिगम्य वित्तानि ब्रह्मकर्माणि कारयेत् ।
शूद्रः शुश्रूषणं कुर्यात्त्रिषु वर्णेषु नित्यशः ॥
वन्दनायोगविधिभिर्वैतसीं वृत्तिमास्थितः ॥ ६ ॥
वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
सत्कुर्वन्ति महाभागा गुरून्सुविगुणानपि ॥ ७ ॥

---

[ विष० ] हृतां जयद्रथेन गृहीताम् । तथा जटासुरेण च युद्धे । कर्तव्यं तस्य भेषजम् उन्मादशान्तये चिकित्सायोग्योऽसीत्यर्थः । उन्मत्तवत्प्रलपसि ॥ १२ ॥ चरं वने वनेचरम् । व्यत्ययो वहुलम् ॥ १४ ॥ निकृतः पराभूतः ॥ १८ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ लक्षा० ] एकः संयमनीं जित्वेत्यत्र संयमनीं यमपु-(त्रीं?रीं)म् ॥ ८ ॥ समुद्रं प्रतरन्नित्यत्र *प्रतरन्निव यस्त्वं वर्तसे । हे कर्ण त्वयि तत्र किं पौरुषमस्ति । न किंचिदपी त्यर्थः ॥ १६ ॥ अस्माभिरेष निकृत इत्यत्र निकृत्या कपटेन जितः ॥ १८ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ नील० ] न चेति । शूराः परवित्तं जित्वा परसीमामुलङ्घ्य स्वनगरं प्रति नीत्वाऽपि न श्लाघन्ते त्वं त्वेतेषामेकतममप्यकृत्वा कत्थसेऽतो निर्लज्जोऽसीति भावः ॥ १ ॥ यदुक्तं नैते महाभये प्राप्ते संप्रष्टव्या इत्यादिना ब्राह्मणानां भोजनादावेव कौशलं न युद्धे इति तत्र तवापि वैश्यत्वान्न युद्धे सामर्थ्यमस्तीति दर्शयिष्यन् वर्णानां कर्माणि विभजते— चातुर्वर्ण्यस्येत्यादिना ॥ ४ ॥ वित्तान्यधिगम्य कृष्यादिनेति शेषः । ब्रह्मकर्माणि वेदोक्तकर्माण्याधानादीनि कारयेत् । स्वार्थे णिच् ॥ ६ ॥ वर्तमाना इति । न्यायेन पृथिवीं जित्वाऽपि सन्तो विगुणानपि गुरून् सत्कुर्वन्ति । त्वं त्वन्यायेन पाण्डवं जित्वा साधूनपि गुरून् निन्दसीति भावः ॥ ७ ॥

[ अर्जु० ] न च तावज्जिता गावो न च सीमान्तरं गताः । न हास्तिनपुरं प्राप्तास्त्वं तु कर्ण विकत्थसे । अश्वत्थामा वदति त्रिविधाः पुरुषा भवन्ति उत्तमाः मध्यमा अधमाश्चेति ये गा जित्वा हास्तिनपुरं नयन्ति ते उत्तमाः, ये सीमान्तरं नयन्ति ते मध्यमाः, ये स्वदेशाभिमुखाः कुर्वन्ति तेऽधमास्तेषां मध्ये नाप्येकतरस्त्वं किमिति विकत्थसे श्लाघसे आत्मानं, गोग्रहकर्मणां त्रयाणामेकमपि त्वया न कृतमित्यभिप्रायः ॥ १ ॥ नाहुः किंचन पौरुषमिति महाप्रभावा इति भावः ॥ २ ॥ तत्र दृष्टान्तयन्ति-पचतीत्यादि । पचति तण्डुलान् विक्लेदं करोति पचतिस्थाने दहतीति पठ्यते ॥ ३ ॥ चातुर्वर्णस्य चतुर्णां ब्राह्मणादीनां मनीषिभिर्मन्त्रादिभिः ॥ ४ ॥ ब्रह्मकर्माणि वेदोक्तानि कर्माणि अथवा ब्रह्म ब्राह्मणं कर्म कारयेत् । वैतसीं वृत्तिं प्रणतिम् ॥ ६ ॥ गुरून् महत्तमान् प्राप्येत्यन्वयः । सुविगुणान् शक्नुवन्ति जेतुमिति शेषः । वर्तयन्त इति पाठे प्रतिवर्तयन्त इत्यर्थः ॥ ७ ॥

[ चतु० ] ब्रह्मकर्माणि ब्राह्मणार्थानि कृत्यानि ॥ ६ ॥

[ सर्व० ] मध्यमोत्तमकनिष्ठकार्येष्वेकमपि कार्यमस्माकं न जातमित्याह—नेति ॥ १ ॥ ब्रह्मकर्माणि वेदोक्तकर्माणि वैतसीं विनीतताम् ॥ ६ ॥ न्यायेन पृथ्वीं जित्वाऽपि सन्तो विगुणानपि गुरून्सत्कुर्वन्ति त्वं त्वन्यायेन पाण्डवाञ्जित्वा साधूनपि गुरून्निन्दसीति भावः ॥ ७ ॥

[ विरा० ] नाहुः अन्येऽपि (शे) ॥ २ ॥ दहति; पचति (दे) ॥ ३ ॥ यैः कर्मभिः ॥ ४ ॥ ब्रह्मकर्माणि वैदिककर्माणि । वैतसीं प्रणतिम् ॥ ६ ॥

[ विष० ] विकत्थसे आत्मानं श्लाघसे । 'विकत्थनं स्तवः श्लाघा वर्णना च निगद्यते' ॥ १ ॥ पचति तन्दुलविक्लेदं करोति । दहतीति पाठे भस्मसात्करोति । भाति भासयति नवकोटियोजनपर्यन्तं भ्रमति ॥ ३ ॥ यैः कर्मभिः ॥ ४ ॥ ब्रह्म कर्माणि कारयेत् ब्राह्मणं कर्म कारयेदिति ॥ ६ ॥

---

२ घ. ज. ष. परां भूमिं । ३ व. पचत्यग्निरवाक्यो हि. । ४ ज. विहितानि मनीषिभिः । व. वर्णैस्तदिह कर्तव्यं यच्च । ५ व. यजत्येव न याजते । ६ ज. वित्तानि कृषिकर्माणि; वार्ताकर्माणि । व. ज. वचनायोग. । ज. मास्थिताः; व. माचरेत् ७ ज. गुरूनपि गुणानपि ।

प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति ।
तथा नृशंसरूपोऽयं धार्तराष्ट्रश्च निर्घृणः ॥ ८ ॥
तथाऽधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ ९ ॥
कतमं द्वैरथं युद्धं यत्राजैषीर्धनञ्जयम् । *कतमद्विति स्यात्।
नकुलं सहदेवं वा धनं येषां त्वया हृतम् ॥ १० ॥

[ नील० ] एतदेवाह–प्राप्येति । निर्घृणो निर्लज्जः॥८॥ निकृत्या शाठ्येन वञ्चनायोगैश्छद्मोपायैः वितंसो बन्धनोपायस्तेन जीवतीति वैतंसिको व्याधः ॥ ९ ॥ इन्द्रप्रस्थं तत्स्थाः पाडवाः ॥ ११ ॥ मूलमिति । एषां पाण्डवानां मूलं महत् महच्छब्दवाच्यं ब्रह्म श्रीकृष्णाख्यं वेदवाक्यं ब्राह्मणाश्च । यथोक्तमादिपर्वणि–'मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च' इति । तदेतद्वेदविरुद्धमनृतं द्यूतं कुर्वता धार्तराष्ट्रेण धर्मस्य मूलं कृत्तं छिन्नम् । इदानीं च ब्राह्मणानवजानता त्वयाऽपि तदेव कृतम् । अतो धर्मनाशाद्भवतां नाशोऽवश्यं भावीत्यर्थः । मूलं कीदृशं चन्दनं यथा शान्तं शीतलं न तु दाहकं क्रोधरूपम् । तथा च दुर्योधनः केवलं क्रोधमय इत्युक्तं प्राक् 'दुर्योधनो मन्युमयो महाद्रुमः' इति । सारार्थी कर्मकारीयथा इति व्यवहितेन संबन्धः । सारार्थी धनार्थी। 'धने च सारम्' इति मेदिनी । पाण्डवान् कर्मकारानिव कृतवानसि यत्र काले तत्र तदा विदुरः किमब्रवीत् क्षयमूलं द्यूतमिति, तदिदानीं स्मरेति भावः । सूतेति संबोधयन्नक्षत्रियत्वादस्य युद्धेष्वकौशलं व्यनक्ति । ननु "आदित्यो वै दैवं क्षत्रम्" इति श्रुतेर्दिव्यात्क्षत्रात्कुन्त्यां जातस्यास्य कथमक्षत्रत्वं युद्धाकौशलं चेति विदुषाऽप्यश्वत्थाम्ना वक्तुं युक्तमिति चेच्छृणु; सर्वेषां हि वर्णानां द्विविधं जन्म योनिजं संस्कारजं च । तत्र य एव योनिः स एव संस्कर्ता चेत्स एकजो न प्रकृतितश्च्यवते । कर्णस्तु दैवक्षत्रजोऽप्यक्षत्रियेण सूतेन संस्कृत इति द्विजातत्वात् क्षत्रियत्वेन प्रहर्तुं कुशलोऽपि सूतत्वेन परकीयप्रहारं सोढुमशक्त इति युद्धात्पलायते इत्याशयेनैनं सूर्यपुत्रं जानन्नपि सूतेति संबोधयति । तथा च मन्त्रवर्णः–"सहस्व मन्यो अभिमातिमस्मै रुजन्मृणन्प्रमृणन्प्रेहि शत्रून् ॥ उग्रं ते पाजो नन्वारुरुध्रे वशी वशं नयस एकज त्वम्" इति । अस्यार्थः । तापसो मन्युर्ऋषिः संकल्पाधिष्ठात्रीं देवतां मन्युसंज्ञां प्रार्थयते । त्वया मन्यो इतिसूक्ते तृतीयेयमृक् । यस्ते मन्यविति मध्यंदिने सवने श्येनयागे शत्रुमारणार्थेऽस्य सूक्तस्य विनियोगः । हे मन्यो अस्मै शरणागताय राज्याय वा एतद्रक्षणार्थमिति यावत् । अभिमातिं

८ ज. °स्तुष्टिमर्हति; व. स्तोषमर्हति । ९ ज. ततोऽभिगम्य; व. तथा प्राप्तेषु वित्तेषु । व. वञ्चनोपायैश्च° १० ज. कतमद्वैरथं । व. यत्राजैषीद्धनं° ।

युधिष्ठिरो जितः कस्मिन् भीमश्च बलिनां वरः ।
इन्द्रप्रस्थं त्वया कस्मिन्सङ्ग्रामे निर्जितं पुरा ॥ ११ ॥
तथैव कतमद्युद्धं यस्मिन्कृष्णा जिता त्वया ।
एकवस्त्रा सभां नीता दुष्टकर्मन्रजस्वला ॥ १२ ॥
मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।
कर्मकारीयथाः सूत तत्र किं विदुरोऽब्रवीत् ॥ १३ ॥

सर्वतः पीडां पित्रादिभिः सह विरोधं ज्ञातिवधदोषं वा सहस्व क्षमस्व । कथं तेषां रक्षणं स्यादत आह–रुजन् रोगं प्राप्नुवन् मृणन् म्रियमाणो जराग्रस्त इत्यर्थः । प्रमृणन् अत्यन्तं आसन्नमृत्युर्वा शत्रून् प्रेहि प्रकर्षेण जेतुं गच्छ । अत्र शरीरगतं रोगादि तदभिमानिनि चेतसि उपचर्यते । नन्वशक्तेन रोगाद्याक्रान्तेन मया कथं शत्रवो जेतुं शक्या इत्याशङ्क्याह–उग्रमिति । उग्रं परमर्दनक्षमं ते तव पाजस्तेजो ननु निश्चितम् आरुरुध्रे आरोद्धुं शत्रून्समर्थमस्ति । दृढसंकल्पस्य हि तेजः परानवश्यं नाशयेदेवेत्यर्थः । एतदेवाह–वशी सर्वमस्य वशेऽस्तीति वशी संकल्पदार्ढ्यादेव ह्यगस्त्यादिभिः समुद्रपानादीन्यपि कृतानि अत एव सर्वं जगत् त्वमेव वशं नयसे । वशित्वे हेतुः–हे एकज एकस्माज्जात । नन्वेकमेव मनः संकल्पस्योपादानमिति व्यर्थं विशेषणमिति चेन्न कुण्डव्यावृत्त्यर्थत्वात् । स ह्यन्येन जातोऽन्येन च आत्मीयबुद्ध्या संस्कृत इति न दृढसंकल्पो भवति न च परांस्त्रातुं शक्नोति द्विजत्वात् । तथा च लोके आभाणकः– यस्य द्वे वचने स द्विपितृक इति वक्तारो भवन्ति अत एकजेत्यर्थवद्वचनम् । दत्तक्रीतादौ तु शास्त्रीयमेकस्यैव स्वत्वमस्तीति नासौ कुण्डतुल्य इति दिक् ॥ १३ ॥

[ अर्जु० ] तथाप्राप्तेषु तेन प्रकारेण लब्धेषु वैतंसिकः ······ ॥ ९ ॥ इदानीं द्यूतमायया राज्यादिहरणं स्मारयन्नाह–मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा । कर्म कारयथाः शूर तत्र किं विदुरोऽब्रवीत् । हे शूर राधेय कर्ण एषां पाण्डवानां मूलमाद्यं पैतृकं राज्यं कृत्तं छिन्नं द्यूतेनापहृतमित्यर्थः । यथा सारार्थी चन्दनं कृन्तति तथा युष्माभिः कृतमिति यः सारोऽन्तःपरिणतो भोगः अथवा रसः सारो गन्धो वा धनं वा । किंच कर्म कारयथाः दुर्योधनद्वारा 'संमार्जतां वेश्म परैतु शीघ्रम्'इत्यादिभिर्वाक्यैः द्रौपद्याः दास्यं कर्म कारयथाः कारितवानसि अडागमाभावश्छान्दसः । तत्र हास्तिनपुरे द्यूतादिवृत्तान्ते वृत्ते विदुरोऽनागतवेदिता किमब्रवीत् । दुर्योधनो ह्यनर्थाना मूलमित्यवधारय इति विदुरवाक्यं स्मरेति तात्पर्यम् ।

१३ दे. व. कर्मकारयतः शूरस्तत्र; क. क्षुद्रं कर्म समास्थाय ।

यथाशक्ति मनुष्याणां शममालक्षयामहे ।
अन्येषामपि सत्त्वानामपि कीटपिपीलिकैः ॥
द्रौपद्याः संपरिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ॥ १४॥

क्षयाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ।
त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि॥१५॥

एतच्च स्फुटीभविष्यति ‘ मूलमाद्यशिफार्थयोः ’ इति कोषः । ‘सारो बले स्थिरांशेऽपि शक्रे पुंसि जले धने’ इति मेदिनी ॥ कुत्रापि भीष्मवचनात् सारं गोधनमादाय गच्छन्तमवलोक्य पार्थस्योत्तरं प्रति वचनमिति दृश्यते तत्र पाठश्चैवं‐ ‘मूलमेषां महत् कृन्तन् सारार्थी चन्दनं यथा । कर्मकार इवाधीरः तत्र किं विदुरोऽब्रवीत् ।’ अस्य चायमर्थः मूलमादिकारणमेषामस्मदीयवनवासादिदुःखानां दुर्योधनम् । अथवा एषां सैन्यानां मूलं प्रधानं तथैव कृन्तन् भविष्यामि इति शेषः । जितकाशी भविष्यामीति । यथा वनं प्रविष्टः कश्चिद्वृक्षाणां मध्ये सारार्थी बहुमूल्यार्थी वृक्षानन्यान् विहाय चन्दनमेव छिनत्ति किमेभि (रस्मा? र्भीष्मादि)भिर्निकृत्तैरिति भावः । तस्माद्रथमस्यैवोपनय यस्मादयं दुर्योधनः कर्मकार इव विष्टिकारोऽधीरोऽपण्डितश्चञ्चलो वा यतो भीष्मादीन् विहाय स्वप्राणरक्षापरः पलायते तदिति तत्र द्यूतकाले सभायां किं विदुरो नाब्रवीत् किं नाभिहितं परमपण्डितेन विदुरेण–दुर्योधनो ह्यनर्थानां मूलमित्यवधारय । लङ्घिता गुरुपादानां क्रोधनो वैरकृत्पुमानिति । अतोऽयं छिद्यतां पुमानिति ॥ १३ ॥

[ चतु० ] वैतसी संबन्धितानि (?) वैतंसिकः पक्षिहा ॥ ९ ॥ कर्म अकर्मादिलक्षणं कारयथाः कारितवानसि ॥ १३ ॥

[ सर्व० ] निकृत्या शाठ्येन वञ्चनायोगैः छद्मोपायैः वितंसो बन्धनोपायस्तेन जीवतीति वैतंसिको व्याधः ॥९॥ एषां पाण्डवानां मूलं महच्छन्दवाच्यं कृष्णाख्यं चन्दनं यथा शान्तं शीतलम् । न तु दाहकं क्रोधरूपं दुर्योधनवत् । सारार्थी धनार्थी । पाण्डवान् कर्मकरानिव कृतवानासि । यत्र काले तदा विदुरः किमब्रवीत्क्षयमूलमिदं द्यूतमिति ॥ १३ ॥

[ दुर्घ० ] गोग्रहे भीष्मवचनाद्गाः समादाय गच्छन्तं दुर्योधनं समवलोक्यार्जुन उत्तरमाह ‘ मूलमेषामहं कृन्तन्सारार्थी चन्दनं यथा । कर्मकार इवाधीरस्तत्र किं विदुरोऽब्रवीत् ’ अस्यायमर्थः–मूलमादिकारणमेषामस्मदीयवनवासादिदुःखानामथवैषां सैन्यानां मूलं प्रधानं कृन्तंश्छिन्दंश्चरामीत्यर्थः । यथा वृक्षाणां मध्ये सारार्थी बहुधनार्थी पुरुषः चन्दनं छिनत्ति तथा[एवमे]किमेभिर्भी[किं मे भी]ष्मादिभिर्निकृत्तैरिति भावः । तस्माद्रथमत्रै(स्यै)वोपनय यस्मादयं दुर्योधनः कर्मकार इव कर्मकारो गोरक्षक इव गाः समादाय गच्छतीति । अधीरश्चञ्चलः अपण्डितो वा यतो भीष्मादीन् वीरान् विहाय स्व[यमेकाकी गच्छतीति]प्राणरक्षापरः पलायते । तत्र सभायां किं विदुरोऽब्रवीत् ।[तत्र तदीयपलायने] किं नाभिहितं विदुरेण परमपण्डितेन । ‘दुर्योधनो ह्यनर्थानां मूलमित्युपधारय । लङ्घिता गुरुवाक्यानां क्रोधनो वैरकृत्पुमान् ’ अतोऽयमेव प्रथमं छिद्यतामिति श्लोकार्थः ॥ १३ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ विरो० ] चरेत्कः । म्रियते अनुम्रियतेऽनुम्रियते (?) सारः शैत्यम् । कर्म द्यूतम् ॥ १३ ॥

[ विष० ] तथा प्राप्तेषु अधर्मेण प्राप्तेषु निकृत्या मायया अन्यायेन परधनग्रहणम् । वैतंसिको जालिको मत्स्यवेधी ॥ ९ ॥ यथा कश्चित्सारार्थी चन्दनमूलं छिनत्ति । सारः अन्तःपरिणतो रसविशेषः पक्षे रसश्छिन्नः नीरसत्वं कृतम् । हे दुष्टकर्मन् ! द्रौपदीं सभामानयता दुर्योधनेन एषां पाण्डवानां महन्मूलं कृत्तं छिन्नम् । पौरुषस्येति शेषः । तत्र सभायां द्रौपदीं निन्द्यं कर्म कारयतः दासीं भाषमाणान् युष्मान् शूरो दीर्घदर्शी विदुरः किमब्रवीत् । तद्विदुरवाक्यं स्मरध्वमित्यर्थः । यद्वा कर्मकार इवाधीर इति पाठे कर्मकार इव दास इवाऽधीरः विक्षिप्तचित्तो विदुरस्तत्र सभायां किमब्रवीत् । अपि तु सर्वमूचे ॥ १३ ॥

[ लक्षा० ] कुल(मूल)मेषामित्यत्र एषा पुण्यकर्मणा कुरूणाम् ॥ १३ ॥

[ नील० ] ननु मम सूतत्वाद्दोषवत्त्वं चेत् सुजाता अपि ते कुतो न शाम्यन्ति कुतो वा परसाहाय्यार्थमस्मान्योद्धुमागता वालिवधे राम इवेत्याशङ्क्याह–यथाशक्तीति द्वाभ्याम् । पिपीलिकैरपि कृतं शमं लक्षयामहे इति योज्यम् । वालिरामयोर्विरोधाभावेऽपि रामेण वाली हत इति सोऽपराधी । पाण्डवास्तु युष्माभिरपकृता इति युष्मान् जिघांसन्तो नापराध्यन्तीति भावः ॥ १४ ॥

[ अर्जु० ] क्षन्तुं सोढुम् ॥ १४ ॥

[ चतु० ] शममुपशान्तिं आलक्षयामहे ॥ १४ ॥

[ सर्व० ] तस्मान्नु तर्ह्यर्जुन एवेदानीं क्षमां करोत्वित्यत आह–यथाशक्तीति । पिपीलिकैरपि यथाशक्ति कृतं शमं लक्षयामहे नतु सर्वदैव । अत इदानीं पाण्डवो न क्षन्तुमर्हतीत्यर्थः ॥ १४ ॥

१५ व. दुःखाय धा°; घ. दुःखार्तधार्त° । ज. वक्तुमिहार्हसि; क. आचार्य क्षेप्तुमिच्छसि ।

वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ १६ ॥
नैष देवान्न गन्धर्वान्न सुरान्न च राक्षसान् ।
भयादिह न युध्येत कुन्तीपुत्रो धनञ्जयः ॥ १७ ॥
यं यमेषोऽतिसंक्रुद्धः संग्रामे निपतिष्यति ।
वृक्षं गरुत्मान्वेगेन विनिहत्य तमेष्यति ॥ १८ ॥
त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् ॥ १९ ॥
देवं देवेन युध्येत मानुषेण च मानुषम् ।
अस्त्रं ह्यस्त्रेण यो हन्यात्कोऽर्जुनेन समः पुमान्॥२०॥

पुत्रादनन्तरं शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ २१ ॥
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाऽहरः ।
यथाऽऽनैषीः सभां कृष्णां तथा युध्यस्व पाण्डवम्२२
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह ॥ २३ ॥
नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च ।
ज्वलतो निशितान्बाणांस्तांस्तान् क्षिपति गाण्डिवम्२४

---

[ विरो० ] आलक्षयामहे आशास्महे । कीटपिपीलिकैः षष्ठ्यर्थे तृतीया ॥ १४ ॥ अवाचं वचनायोग्यम् ॥ १५ ॥

[ विष० ] शमं नालक्षयामहे । कलत्रपराभवात्कामिकीटपिपीलिका अपि युध्यन्ति । मनुष्याणां किं कथ्यते ॥ १४ ॥ आविर्भूतः प्रकटीभूतः ॥ १५ ॥

[ नील० ] नैव न युध्येत अपि तु युध्येतैवेत्यर्थः ॥ १७ ॥ एष्यति गमिष्यति ॥ १८ ॥ देवेन देवयोग्येन युध्येत ॥ २० ॥ अहरः हृतवानसि आनैषीः आनीतवानसि । यथा उत्साहपूर्वकमेतत्कर्म त्वया कृतं तथैवेदानीमपरावृत्तो युध्यस्वेत्यर्थः ॥ २२ ॥ न चेति चकारात् त्रेताऽपि न भवतीत्यध्याहार्यम् । अयमर्थः—क्रमेण एकद्वित्रिचतुरङ्काङ्कितैः प्रदेशैरङ्कचतुष्टयवान् पाशो भवति । तत्र एकाङ्कः कलिः । द्व्यङ्को द्वापरः । त्र्यङ्कस्त्रेता । चतुरङ्कः कृतम् । तत्र द्यूते पञ्च स्वीया पञ्च परकीयाश्च दीनारादयः स्थाप्यन्ते । तदितः पाशप्रक्षेपे यद्येकाङ्क उपर्यायाति तर्हि स्वीयेष्वेक एव जितो भवति । यदि द्वौ तदा परकीयं दीनारद्वयं स्वीयश्चैको जितः । यदि त्र्यङ्क उपरि पतेत्तदा परकीयं त्रयं स्वीयं च त्रयं जितम् । चतुरङ्कस्योपरिपतने सर्वेऽपि स्वीयाः परकीयाश्च जिता भवन्ति । तथा च कलिपाते जयो नास्ति द्वापरादिपाते उत्तरोत्तरवृद्ध्या जयोऽस्ति । तेन गाण्डीवस्थाः शराः सर्वथा न जयावहा इत्यर्थः ॥२४॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

[ अर्जु० ] निपतिष्यति निश्चयेन गमिष्यति । गरुडो वा वाशब्द इवार्थे ॥ १८ ॥ यथा ऽहरःधेनुहरः (?) कर्णयुद्धे दुर्योधनमाह ॥ २२ ॥ पुनरप्युपहसन्नाह । नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च । ज्वलतो निशितान् बाणान् तीक्ष्णान् क्षिपति गाण्डिवम् । गाण्डिवम् अर्जुनधनुः अक्षान् पाशकान् न क्षिपति येन शकुनिद्वारा जेष्यसीति भावः । न द्वापरं संशयं तत्कारिणं वा शरं क्षिपति एवं तर्हि संशयभव्यर्थम्(?)। किं क्षिपतीत्याह—बाणानिति । निशितान् शाणेन तनूकृतान् अत एव तीक्ष्णान् । 'कृतं युगेऽलमर्थे च' इति मेदिनी च' 'द्वापरौ युगसंशयौ' इत्यमरः। कृतमेकं कक्षं द्वापरं द्वितीयकं न क्षिपतीत्यर्थः । न कृतं न कुथं न द्वापरं न द्वितीयपरं किंतु निशितान् बाणान् इत्यर्थो वा ॥ २४ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

[ चतु० ] निपतिष्यति निपतिष्यन्नुपैति वाशब्द औपम्ये(?)। अनन्तरोऽभिन्नः ॥ २१ ॥ अक्षान्पाशकान् । कृतं चतुष्कम् । द्वापरं द्विकम् ॥ २४ ॥

[ सर्व० ] नैष न युध्येत अपि तु युध्येतैव ॥ १७ ॥ एष्यति गमिष्यति ॥ १८ ॥ अहरः हृतवानसि । आनैषीः आनीतवानसि ॥ २२ ॥ अक्षान् पाशान् चकारोऽनुक्तसमुच्चयार्थः । तेनैवैकाद्वित्रिचतुरङ्काङ्कितैः प्रदेशैश्चतुष्टयवान्पाशो भवति । तत्रैकाङ्कः कलिः । द्व्यङ्कः द्वापरम् । त्र्यङ्कस्त्रेता । चतुरङ्कः कृतम् । तथा च पूर्वं द्यूते पाशा इवेदानीं बाणा न जयावहा इति भावः ॥ २४ ॥

[ विरो० ] अनन्तरोऽभिन्नः ॥ २१ ॥ कृतं चतुष्कं द्वापरं द्विकम् ॥ २४ ॥

[ विष० ] कृतं चतुरस्रमेकमक्षम् । त्रेता तृतीयमक्षम् । एकोऽक्षः कलिः । द्वितीयोऽक्षो द्वापरः । यथा उद्योगपर्वणि 'न तदा भविता त्रेता न कृतं द्वापरं न च । कलिरेव भवेत्तत्र यत्र त्वं कर्ण मन्यसे' इति भगवद्वचनम् । चतुर्युगनाम्ना चत्वारो दुरोदराङ्का हीनरूपा इति । कलिरेव युद्धम् ॥ २४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

१७ ज. व. नैव । १८ व. ज. वृक्षं गरुडवेगो वा । व. निश्चयेन समेष्यति ।

नहि गान्डीवनिर्मुक्ता गार्ध्रपक्षाः सुतेजनाः ।
नान्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ॥ २५ ॥
अन्तकः पवनो मृत्युस्तथाऽग्निर्वडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः ॥ २६ ॥
यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः ।
तथा युध्यस्व संग्रामे सौबलेन सुरक्षितः ॥ २७ ॥
युध्यन्तां कामतो योधा नाहं योत्स्ये धनञ्जयम् ।
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदम् ॥२८॥

इति श्रीमहाभारते विराटपर्वणि पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशत्तमोऽध्यायः ५१

भीष्मेण द्रोणकृपाश्वत्थाम्नां परिसान्त्वनम् ॥ १ ॥ कर्णदुर्योधनाभ्यां द्रोणादिक्षमापनं च ॥ २ ॥

**भीष्म उवाच—**

साधु पश्यति वै द्रौणिः कृपः साध्वनुपश्यति ।
कर्णस्तु क्षत्रधर्मेण केवलं योद्धुमिच्छति ॥ १ ॥
आचार्यो नाभिवक्तव्यः पुरुषेण विजानता ।
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः ॥ २ ॥
यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ३ ॥
स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्माद्राजन् ब्रवीम्येष वाक्यं ते यदि रोचते ॥ ४ ॥
कर्णो हि यदवोचत्त्वां तेजःसंजननाय तत् ।
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ॥ ५ ॥
नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ॥ ६ ॥
भवतां हि कृतास्त्रत्वं यथाऽऽदित्ये प्रभा तथा ।
यथा चन्द्रमसो लक्ष्मीः सर्वथा नापकृष्यते ॥ ७ ॥
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ।
चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ॥ ८ ॥
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुम ।
अन्यत्र भारताचार्यात्सपुत्रादिति मे मतिः ॥ ९ ॥
वेदान्ताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन् को द्रोणादधिको भवेत् ॥१०॥
ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ।
आचार्यपुत्रः क्षमतां नायं कालो विभेदने ॥ ११ ॥
सर्वे संहत्य युध्यामः पाकशासनिमागतम् ॥ १२ ॥
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥१३॥

---

[ लक्षा० ] न कृतं द्वापरं नचेत्यत्र कृतं भवद्द्यूतकर्मणः प्रतिकर्म न क्षिपति । शकुनिं भवच्छकुनिवत् कंचन शकुनिं च न क्षिपति ॥ २४ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ चतु० ] अन्तरेषु मध्येषु ॥ २५ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

[ सर्व० ] शमनः यमः ॥ २६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ विरो० ] वडवामुख और्वः ॥ २६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ नील० ] साध्विति ॥ १ ॥ यस्य दुर्योधनस्य पञ्च पाण्डवाः ॥ ३ ॥ यत् अवोचदाचार्यस्य निन्दारूपं तत्तस्यैव तेजः संजननायैव न तु द्वेषात् ॥ ५ ॥ बलस्य सैन्यस्य व्यसनानि विनाशकानि ॥ १३ ॥

[ अर्जु० ] नाभियोक्तव्यो न क्षेप्तव्य इति वा पाठः ॥ २ ॥

[ चतु० ] नाभियोक्तव्यः नोपालम्भनीयः ॥ २ ॥ ते तुभ्यम् ॥ ४ ॥

[ सर्व० ] भारताचार्यात् भरतवंशोद्भवानामाचार्यात् ॥ ९ ॥ बलं सैन्यम् ॥ १३ ॥

[ विरो० ] योक्तव्यः; वक्तव्यः (दे) ॥२॥ भेदः अन्योन्यविरोधः । पापिष्ठोऽधमः ॥ १३ ॥

[ विष० ] सपत्नाः शत्रवः । प्रहारिणो योद्धारः ॥ ३ ॥ आचार्येणोक्तं कृतं वा सर्वं क्षन्तव्यम् । 'स्वयमाचरते यस्मादाचारं स्थापयत्यपि । आचिनोति च शास्त्राणि ह्याचार्यस्तेन चोच्यते । जिह्वाग्रे चतुरो वेदाः कराग्रे

---

२५ वि. °र्मुक्ता शरा ह्याशीविषोपमाः । २८ क. घ. च. ण. व. वि. काममाचार्यो । पञ्चाशोऽध्यायः ॥ ५० ॥

१ ज. वै द्रोणः । व. ज. यथावद्योद्धु° । २ च. ढ. नाभियोक्तव्यः; क॰ नावमन्तव्यः । ३ व. न प्रयुज्येत । ५ व. कर्णो यदभितोऽचत्तत्तेजःसंजननाय वः । ६ ज. °चार्येण च धीमता । ७ व. लक्ष्म सर्वं° । ११ व. ज. कालः स्वभेदने ।

**अश्वत्थामोवाच—**

नैव न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किं तु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १४ ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ १५ ॥

**दुर्योधन उवाच—**

आचार्य एष क्षमतां शान्तिरत्र विधीयताम् ।
अभिद्यमाने तु गुरौ तद्वृत्तं शेषकारितम् ॥ १६ ॥

**वैशम्पायन उवाच—**

ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपेण च महात्मना ॥ १७ ॥

**द्रोण उवाच—**

यदेतत्प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ।
तेनैवाहं प्रसन्नो वै नीतिरत्र विधीयताम् ॥ १८ ॥
यथा दुर्योधनं पार्थो नोपसर्पति सङ्गरे ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् ॥१९॥
वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः ।
धनं चालभमानोऽत्र नाद्य तत्क्षन्तुमर्हति ॥ २० ॥
यथा नायं समायुञ्ज्याद्धार्तराष्ट्रान्कथञ्चन ।
न च सेना पराजय्यात्तथा नीतिर्विधीयताम् ॥२१॥
उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ २२ ॥

इति श्रीमहाभारते विराटपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

सशरं धनुः । उभयोर्द्रोणसामर्थ्यं शापादपि शरादपि ॥२॥' यदि अस्मभ्यं रोषितः शापं दत्ते, अथ वा पाण्डवानाश्रित्य युद्धं विधत्ते, तथापि दुःखदं भवति । एतेन ब्राह्मणेषु दिव्यास्त्राणि कलङ्करूपाणि । ब्राह्मणे उपशम एव गरीयान् ॥ ६ ॥

[नील०] नैवेति । अस्माकमिदं न्याय्यं वचनं त्वया नैव वाच्यं नैव निन्द्यम् । रोषेण दुर्द्यूतादिदर्शनजेन परीतस्तेन गुरुणा द्रोणेन । गुणा अर्जुनस्य ॥ १४ ॥ हितं बलवता सह निर्बलैर्भवद्भिर्विचार्य योद्धव्यमित्येवंरूपम् ॥ १५ ॥ आचार्य इति । रोषादेतद्वचनमाचार्येणोक्तं न तु भेदार्थमिति भावः । पाठान्तरे अभिषह्यमाणे अभिमृष्यमाणे उपालभ्यमाने इति यावत् । शेषकारितं शेषं कर्तव्यं कारणीयं च तत्सर्वं न कृतं स्यात् । प्रस्तुतकार्यनाशो भवेदित्यर्थः ॥ १६ ॥ प्रथमं मुख्यं भेदो न कार्यः क्षन्तव्यं चेति यदुक्तं तेनैवाहं वाक्येन प्रसन्नोऽस्मि ॥ १८ ॥ धनं चेति । धनं लब्ध्वा अस्मानुपेक्ष्य गृहं गमिष्यति गोधने अत्यन्तं दूरतोऽन्यैर्नीते युध्यतामस्माकं अन्तमेवायं करिष्यतीति भावः ॥ २० ॥ समायुञ्ज्यात् संप्राप्नुयात् पराजय्यात् पराजयं प्राप्नुयात् ॥ २१ ॥ पुरस्ताद्वाक्यमुक्तम् अज्ञातवासकालः पूर्णो न वेति प्रथमं विचार्यमित्येवंरूपम् ॥ २२ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

[अर्जु०] अभिषज्यमाने गुरौ तद्वृत्तं रोषकारितमिति तेदंवाचार्याक्षेपणं वृत्तं यस्मिन् रोषकारितमिदम् ॥ १६ ॥ हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हतीति उक्तं दुर्योधनेन ॥ २२ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[चतु०] अभिषह्यमाने अतिमात्रोक्ते वृत्तमितीति (?) ॥ १६ ॥ परं प्रस्तुतम् ॥ १८ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[सर्व०] नैव वाच्यं नैव निन्द्यम् ॥ १४ ॥ अभिषह्यमाणे अभिमृष्यमाणे उपालभ्यमान इति यावत् । शेषं कर्तव्यं कारणीयं च तत्सर्वं न कृतं स्यात् । प्रस्तुतकार्यनाशो भवेदित्यर्थः ॥१६॥ प्रथमं साधु पश्यतीति ॥१८॥ गोधनं लब्ध्वास्मानुपेक्ष्य गृहं गमिष्यति । गोधनेऽत्यन्तं दूरेऽन्यैर्नीते युध्यतामस्माकमन्त एव करिष्यतीति भावः ॥२०॥ समायुञ्ज्यात्संप्राप्नुयात् । पराजय्यात् पराजयं प्राप्नुयात्॥२१॥ पुरस्ताद्वाक्यम् अज्ञातवासः पूर्णो न वेति ॥ २२ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[विरो०] तद्वृत्तं मम तद्वाक्यम् ॥ १६ ॥ सैनिकान् षष्ठ्यर्थे सैनिकानां मध्ये दुर्योधनमिदमागः अर्जुनेन सह युद्धम् ॥ १९ ॥ धनं गोधनम् ॥ २० ॥ पराजय्यात् पराजयेत् ॥ २१ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

१६ ग. घ. °र्थं एव । व. अभिपह्यमाणे हि । अभिपज्यमाने; ज. आक्षिप्यमाणे । ग. घ. च. वृत्तं रोषकारितम् । १८ व. ज. वै परमत्र; ग. घ. च. परं मन्त्रं । १९ च. यथा दुर्योधनः पार्थं; व. यथा दुर्योधनो यत्तो न गच्छेद्द्विषतां वशम्; ग. घ. यथा दुर्योधने याते नागः स्पृशति सैनिकान्; ज. तथा दुर्योधनेनेदमागः । वि. ण. नायं पश्यति सैनिकान् । २० ज. दर्शयन्स्वयमर्जुनः । ज. व. नः क्षन्तुम° । २१ व. यथा वा (नो) ऽयशसा युज्येद्धार्तराष्ट्रः कथंचन । ज. व. यथा च न पराजीया° । २२ व. ज. पुनस्तद्वाक्य° । इति एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ५२

भीष्मेण दुर्योधनं प्रति पाण्डवानामज्ञातवासकालश्चान्द्रमानेन पूर्ण इत्युपपादनम् ॥ १ ॥ पाण्डवपराक्रमख्यापनपूर्वकं संग्रामराज्यप्रदानयोरन्यतरानुष्ठाननिर्णयचोदना ॥२॥ राज्यदानं प्रतिषेधन्तं दुर्योधनं गोभिः सह नगरं प्रस्थाप्य सेनां व्यूह्यावस्थानम् ॥ ३ ॥

**भीष्म उवाच—**

**कला काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च ।**
**अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ १ ॥**
**ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।**
**एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २ ॥**
**तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।**
**पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ॥ ३ ॥**
**एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।**

[विष०] अभिषह्यमाणे आक्षिप्यमाने । अभिषज्यमाने इति पाठे अभिषङ्गः क्रोधः । तद्वृत्तम् आचार्यक्षेपणं वृत्तं यस्य रोषेण कारितम् ॥ १६ ॥ द्रोणादीनागः भङ्गलक्षणोऽपराधो न स्पृशति हे सैनिकाः ! यथा दुर्योधनो यत्तो यत्नवानमुं दूरवर्तिनमर्जुनं न स्पृशति साहसाद्राभस्येन यदि वा राज्य( तृष्णावि ? )मूढत्वात् तथा नीतिः शूराणामन्तरे भवितव्यमिति ॥ १९ ॥ उक्तं दुर्योधनेनेत्यादि । दुर्योधनेन पुरस्ताद्युक्तम् किं समयः पाण्डवानां समाप्तो नवेति भीष्मः पृच्छ्यतामिति (?) यथावद्वक्तुमर्हति । यद्यसमाप्तः कालस्तदा नायं धनञ्जयः । तदा न किंचिद्भयमित्याशयः ॥ २२ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[लक्षा०] कोपः कारितो येन तत् कोपकारितं कर्णे कोपकरणमित्यर्थः । निवृत्तं युद्धार्थं वैरिषु सन्नद्धेषु सत्सु अन्तःकलहस्य नायं काल इति भावः ॥ १६ ॥ पुरस्ताद्वाक्यमीदृशमित्यत्र ईदृशम् अज्ञातवासकालः पूर्णो नाभूदीदृशम् ॥ २२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे वि. प. एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[नील०] कला काष्ठाश्चेति ॥ १ ॥ अत्र चतुर्विंशत्या पक्षैश्चान्द्रः संवत्सरः चतुष्पञ्चाशदधिकशतत्रयदिनात्मकः । षष्ट्यधिकशतत्रयदिनात्मा सावनः स एव द्वादशवार्षिकादिप्रतिज्ञासु गवामयनादिसत्रादिषु च उपयुज्यते । त्रीणि शतानि पञ्चषष्टिश्च दिनानि पञ्चदशघटिका एकत्रिंशत् पलानि त्रिंशदक्षराणि सौरस्य संवत्सरस्य मानम् । तत्र प्रायेण ज्योतिर्विदः सौरसंवत्सरानुरोधेनैव वर्षप्रवेशादिकं कुर्वन्ति । स्मार्ते वर्धापनादौ तु चान्द्रेणेति विशेषे सत्यपि यदा एतयोरान्तरालिकः सावनाब्दो गण्यते तदा सौरगता वृद्धिस्तत्र गण्यते । एवं गणनायां क्रियमाणायां त्रयोदशस्वब्देषु पञ्च चान्द्रमासाः द्वे दिने सप्तत्रिंशन्नाड्यः पञ्चचत्वारिंशत्पलानि पञ्चदशाक्षराणि च । तथा च किंचिदधिकानि नवदिनान्यवधिपूर्तेरधिकानि जातानि ज्योतिषां नक्षत्राणां व्यतिक्रमात् सूर्येण चन्द्रेण च लङ्घनात् उपजायतः अधिकौ भवतः ॥ ३ ॥ अत्र तु अर्धमासाश्च मासाश्च युज्यन्त इतिग्रहणात् त्रयोदशानां वर्षाणां चान्द्रमासाः षट्पञ्चाशदधिकं शतं भवन्तीति त एव गृहीता इति ज्ञेयम् । तथा च विजयदशम्यां द्यूते पाण्डवपराजयः । लोके तस्यैव प्रायेण द्यूतकालत्वात् । भीष्मे च गोग्रहार्थं प्रवृत्ता इत्युक्तं तेन विजयदशम्यामागामिन्यां त्रयोदशाब्दपूरणं भविष्यतीति दुर्योधनप्रत्याशा । पाण्डवास्तु चान्द्राब्दमानेन त्रयोदशवत्सरानतिवाह्य कृतकृत्या अभूवन् । तत्र विजयदशमीतः पूर्वं पञ्चमासाः द्वादश दिनानि प्रकटीभवितव्यम् तत्र दर्शान्तमासे वैशाखकृष्णसप्तम्यामाविर्भूताः प्रतिज्ञां निस्तीर्यैव कानिचिदधिकान्यपि दिनानि अतिवाह्य आविर्भूता इत्यर्थः ॥ ४ ॥

[अर्जु०] हीनातिरिक्तत्वं निर्भागस्य कालस्य मुख्यया वृत्त्या न घटते किंतूपचारेण । तथैव स्फुटीकरोति—कालतस्तात युज्यन्ते मुहूर्ताश्च दिनानि च इत्यादिना । मुहूर्त इत्युपलक्षणं निमेषादयोऽपि विज्ञेयाः । हे तात दुर्योधन एते मुहूर्तादयः संवत्सरान्ताः कालतः कालेन युज्यन्ते कालेन संबद्धा इत्यर्थः ततो मुहूर्तादिभेदात्कालोऽपि भिद्यते इत्युपचारबीजमिति तात्पर्यम् ॥ १ ॥ एतदुक्तं भवति निमेषादिव्यवहारः कालेन द्विगुणः(?)तथाहि चक्षुःपक्ष्मचलनादिक्रियाभेदेन भिद्यते अत एवाह ‘ एवं कालविभागेन कालचक्रं प्रवर्तते ’ इति । एवं क्रमेण कालविभागेन मुहूर्तादिभेदेन कालचक्रं कालसमूहः प्रवर्तते इति ‘ चक्रः कोषे पुमान् क्लीबं वक्त्रे सैन्यरथाङ्गयोः ’ इति मेदिनी ॥ २ ॥ कालातिरेकेण कालाधिक्येन पञ्चमे पञ्चमे द्वौ मासावुपचीयतः । एषामप्यधिका मासाः पञ्च च द्वादश क्षपाः । त्रयोदशानां वर्षाणामिति मे वर्तते मतिः । उपचीयतः उपचीयेते छान्दसं परस्मैपदम् । उपचीयते इति पाठे तिङां तिङो भवन्ती-

१ च. ज. द. कालाश्चात्र प्रयुज्यन्ते; कला काष्ठा मुहूर्ताश्च निमिषाश्च; कालतस्तात युज्यन्ते । ३ ज. मासावुपचीयतः; द. वुपजायते । ४ ज. एषामप्यधि° ।

**त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ४ ॥**

तिद्वित्वे एकवचनम् । एतेनाष्टादशाहोरात्रोत्तरषण्मासाधिकद्वादशवत्सरैस्त्रयोदश वर्षाणि भवन्तीति संक्षेपः ॥ ३ ॥

[ चतु० ] ज्योतिषां ग्रहनक्षत्रादीनाम् । उपचीयतः अधिकीभवतः । सार्धवर्षद्वयेनैकोऽधिमासः पततीत्यर्थः । 'पञ्चमे पञ्चमे वर्षे द्वौ मासावुपचीयतः । एषामप्यधिका मासाः पञ्च च द्वादश क्षपाः ॥ त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ।' द्वाविति वीप्सार्थो बोध्यः । उपचीयत उपचीयेते वर्धेते इति यावत् । चन्द्रार्काभ्यामिति शेषः । तथा च स्मृतिः 'एवमर्धतृतीयानामब्दानामधिमासकम् । ग्रीष्मे जनयतः पूर्वं पञ्चमेऽब्दे तु पश्चिमम्' ॥ इति अस्यार्थः वर्षद्वयस्य वर्षार्धस्य चान्ते चन्द्रार्कौ पूर्वमधिमासं जनयतः । पञ्चमेऽब्देऽन्ते परमिति ग्रीष्मे माधवादिषट्के । एतच्चौत्सर्गिकत्वादुक्तम् । 'दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्' इत्यन्तोक्तत्वात् ॥ ३ ॥ एषां भवदभिप्रेतानां सौरवर्षाणां त्रयोदशानामित्यर्थः । अधिका एषां पूरकत्वेनाभिविद्यन्त इत्यर्थः । द्वादशार्ध क्षपाः द्वादशक्षपाः शाकपार्थिवादित्वात् षडहोरात्रा इत्यर्थः । यद्वा क्षपाशब्दो मुख्यगौणवृत्त्या रात्रौ दिने च वर्तते तेन षड्दिनानि षड्रात्रयश्चेति मिलित्वा द्वादशक्षपाः । ननु द्वादशाहोरात्रा इति । षड्दिनानीति वक्तव्ये द्वादश क्षपा इति शेषादि( न?नाधिक )त्वेन उद्वेगदुःखमोहादिजनकत्वप्रयोजनसंभवाद्दिनमपि रात्रितया व्यपदिष्टमिति । एवं च पञ्चमे वर्षे द्वौ चान्द्रौ अधिकमासौ इति त्रयोदशवर्षपूर्तिरिति भीष्मस्याभिप्रायः । एषामप्यधि( भ्यधिका ) इत्यर्थेन भवदभिप्रेतसौरत्रयोदशवर्षाणां षड्दिनाधिकपञ्चमासन्यूनता चेति । एतेन चान्द्रादेवेति भीष्माभिप्रायः । एतदेव व्यक्तीभविष्यति 'येषां युधिष्ठिरो राजा' इत्यादौ । अयं च प्रश्नश्चतुर्विंशतिदिनोत्तरषण्मासाधिकसौरद्वादशेषु वर्षेषु सत्सु चान्द्रत्रयोदशवर्षपूर्तौ । स च चतुर्विंशो ज्येष्ठस्य, तस्मिंश्च कृष्णाष्टमी तत्पूर्वसप्तम्यां दक्षिणगोग्रहः घर्ममासस्य सप्तमीमित्युक्तत्वात् । दुर्योधनस्य युधिष्ठिरादिभिः त्रयोदश वर्षाणि पणीकृतानि तानि च सौरमते आगामिकार्तिकसंक्रान्त्यां संपूर्णानि भविष्यन्ति । एतदभ्यन्तर एवार्जुनो दृष्टः । तत्र च भीष्मादयो न किमपि वदन्ति चान्द्रादर एवेति ननु सावनादरः सौरादरो वेति । यदि हि तयोरेकतरादरणं शास्त्रीयं स्यात्तदैतस्मिंश्चान्द्रे त्रयोदशवर्षपूर्तिदिने सावनाद्यसमाप्तौ धर्मवरप्रभावेण दुर्योधनादिभिरर्जुनो न ज्ञातः स्यात् । भीष्मस्यापि भ्रान्तत्वं प्रपद्येत । 'येषां युधिष्ठिरो राजा ते कथं

**सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ।**

धर्मेऽपराध्नुयुः' इति भीष्मोक्तं युधिष्ठिरस्य धर्मशास्त्रज्ञत्वं व्याहन्येत । यस्मिन्दिने गोग्रहः तस्मिन्नेव दिने ( प्रतिप?प्रतिज्ञाया)श्चान्द्रत्रयोदशवर्षपूर्तिरिति काकतालीयन्यायादेव । पूर्वदिने त्रयोदशवर्षापूर्तौ युधिष्ठिरेण भीमस्य वृक्षोत्पाटननिषेध एव मानम् । यच्च ते दिनद्वयानन्तरं विराटं प्रति युधिष्ठिरादयः प्रकटीबभूवुः तत्कयापि परिपाट्या शुभदिनादौ स्वप्रकाशार्थमिति । अत्र च (विराटे?विषये) सौरसावनचान्द्रमानानां किमादरणीयमिति सिद्धान्तमजानतः सर्वशास्त्रतत्त्वज्ञं भीष्मं प्रति प्रश्नो बोध्यः । अयं भावः 'दिवसस्य हरत्यर्कः षष्टिभागमृतौ यतः । करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः' इत्युक्तरीत्या षण्मासाधिकद्वादशवर्षेषु पञ्चमासाः पतन्ति । पञ्चमासेषु पञ्चदिनानि पञ्च दिनेषु दश दण्डाः चतुर्विंशतिदिनेषु अष्टचत्वारिंशद्दण्डाः अष्टपञ्चाशद्दण्डेषु दण्डद्वयमिति षष्टिदण्डा इति षड्दिनानीति ज्येष्ठे चतुर्विंशदिनमादि कृत्वा कार्तिकसंक्रान्त्यां सौरत्रयोदशवर्षपूर्तिः । पूर्वं हि द्यूतजिता पार्था वनवासाज्ञातवासवसत्यां त्रयोदश वर्षाणि पणं कृतवन्तः । वर्षशब्दश्चान्द्र एव शक्तोऽतः सौरपक्षमानिनं दुर्योधनं प्रति भीष्मश्चान्द्रमतेन सिद्धान्तमाह अतश्चापदुन्मुक्तिरभिमन्युविवाहश्च ज्येष्ठे एव बोध्यः । अत्र चतुर्विंशदिने 'स तु श्वो वा परश्वो वा' इति उत्तरोक्तेस्ततस्तृतीये दिवसे इति भगवदुक्तेश्च विजयदिनचतुर्विंशस्य तृतीये इत्यर्थप्राप्तेः तेषां ज्येष्ठस्य षड्विंशे स्वप्रकाशः । तस्य संभावितैक(त्व?द्व)दिनवृद्धिरप्यूहनीयेति । ततश्च पञ्चषदिनाभ्यन्तर एव दूतानामुपप्लव्याद्वारकागमनं द्वारकातश्चाभिमन्युप्रभृतीनामुपप्लव्यागमनं बोध्यम् । तत्र च विद्वद्भिरन्तुदेश्यं तेषां तत्कालीनानां पुरुषविशेषाणां भगवदनुगृहीतानां लोकोत्तरचरितत्वात् । अन्यथा स्त्रीपर्वणि 'एतावानिह संवासो विहितस्ते मया सह । षण्मासात्सप्तमे मासि त्वं वीर निधनं गतः' इति अभिमन्युं प्रत्युत्तराविलापवचनं विरुध्यत इति । मार्गशीर्षपञ्चमीदिने हि अभिमन्युपतनम् । ज्येष्ठादेव हि मार्गशीर्षः सप्तमो भवतीति । 'अस्य पद्यस्य विविधा व्याख्या विद्वद्भिरादृताः । अस्माभिस्ता न दृश्यन्ते सार्वज्ञ्यं हि न कस्यचित्' इति ॥ ४ ॥

[ सर्व० ] अष्टादश निमेषाः काष्ठा । त्रिंशत्काष्ठाः कला ॥ १ ॥ ज्योतिषां सूर्यादीनाम् । अत्र चतुर्विंशत्या पक्षैश्चान्द्रः संवत्सरश्चतुःपञ्चाशदधिकशतत्रयदिनात्मकः । त्रीणि शतानि पञ्चषष्टिश्च दिनानि पञ्चदश घटिका एकत्रिंशत्पलानि त्रिंशदक्षराणि सौरसंवत्सरस्य मानम् । तत्र त्रयोदशस्वब्देषु चान्द्रात्सौरस्य सप्तचत्वारिंशदधिकशतं

दिनान्यधिकानि भवन्ति । तान्येव द्वादशदिनाधिका उत्सर्गेत एकोनत्रिंशद्दिनात्मकाश्चान्द्रा मासाः पञ्च भवन्तीत्याशयेनाह—एषामिति ॥ ४ ॥

[ विरो० ] यदि वत्सराः स्थिराः स्युस्तदा त्रयोदशवर्षाणि न गच्छेयुरिति वत्सराणामादावस्थिरत्वमाह—कालतः विरोधिकालेन । तथा च उत्तरकालस्य मुहूर्तादिरूपस्य पूर्वमुहूर्तादिविरोधित्वादस्थैर्यं पूर्वकालस्येत्यर्थः । ग्रहाः ग्रहभोग्यकालाः ॥ १ ॥ कालविभागेन कालकृतकालास्थैर्येण कालचक्रं युगाद्यपि ॥ २ ॥ ननु भवत्वेवं तथापि त्रयोदशविरोधी चतुर्दशः स तु नागत एवेत्याह—तेषामिति । तेषां वत्सराणां कालातिरेकेण कालवृद्धया । कुत इत्यत्राह—ज्योतिषां सूर्यादीनां व्यतिक्रमात् मन्दक्षिप्रगमनात् पञ्चम इत्यादि । अयं भावो भीष्मस्य—'यज्ञादौ सावनो मतः' इत्यत्र प्रतिज्ञाया आदिपदग्राह्यत्वे मानाभावादादिपदस्य प्रकारवाचित्वेन यज्ञाशौचवेतनादिसाधारणधर्माभावाच्च मुख्यचान्द्रस्यैव प्रतिज्ञायां ग्रहणम् । तथा च द्वाविति वीप्सा । द्वौ द्वौ इत्यर्थः । तथा च त्रयोदशवर्षैः पञ्च मासाः षड्दिनानि च भवन्ति । एवमधिकपञ्चमासैः पञ्चदिनानि । एवं वृद्धेरेकादशदिनानि । तन वर्तमानदिनं परि(त्यज्य? गृह्य) (द्वौ?पञ्च)मासौ (सप्तदश?द्वादश) दिवसा अधिकास्तदाह—यद्वा 'भवति भार्गव । सावने च तदा माने दिनषट्कं प्रपूर्यते'। इति ज्योतिर्वचनेन सावने वर्षे दिनषट्कवृद्धिः । तथा च पञ्चमे पञ्चमद्वये द्वौ मासौ भवतः वर्षत्रयेण च अष्टादश दिनानि तेन वर्तमानदिनं परित्यज्य द्वौ मासौ सप्तदश दिवसा अधिकास्तदाह—एषामिति । मासौ अत्र स्त इति मासा मासद्वययुताः पञ्च च द्वादशक्षपाः सप्तदश क्षपाः । ननु युधिष्ठिरस्तर्हि कथं न प्रकटो भवति । मैवम् । युधिष्ठिरस्यायं भावः—'प्रतिज्ञाया अर्थाद्राज्यभोगत्यागरूपत्वेन सर्वेषां वर्षाणामेव ग्रहणस्योचितत्वात् । यथा चातुर्मासस्य त्रिविधत्वेन विधिः कुत्रचिदेव । निषिद्धद्रव्यत्यागस्तु सर्वत्रैव । तेन सौरोऽपि वत्सरो गृहीतः । तथा च सौराषाढप्रथमदिने कृष्णदशम्यां वनवासारम्भः । एतद्वर्षेऽपि ज्येष्ठकृष्णाष्टम्यां उत्तरगोग्रहः । नवम्यां संक्रान्तिः । दशम्यां प्रकटता । न च ज्येष्ठ इति कुत इति वाच्यम् । घर्मपक्षस्य सप्तमीमित्यभिधानात् घर्मौ ग्रीष्मौ पक्षौ यत्र । तथा च प्रथमोपस्थितत्वेन घर्मकालो ज्येष्ठ एव ग्राह्यः । 'ग्रीष्मे शत्रुवशं गताः' इत्युक्तत्वाच्च । एवं चान्द्रज्येष्ठे उत्तराविवाहः । युद्धमासे मार्गशीर्षस्य सप्तमत्वं च स्त्रीपर्वणि वक्ष्यमाणं चान्द्रेणैव । उपजायत; उपचीयत; उपचीयते एकत्वमार्षम् । वर्षाणामधिकाः ॥ ३ ॥ ४ ॥

[ विष० ] कालाश्चात्रेत्यादि । तथा चोक्तं पुराणे—तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः । तत्र 'काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठा गणयेत्कलां ताम् । त्रिंशत्कलाश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समे ते' । तथा कलामुहूर्तदिनपक्षमासर्तव एव संवत्सरे गण्यन्ते । तथा च श्रुतिः—"अहोरात्राण्यर्धमासा मासाश्च ऋतवः संवत्सरे प्रतिष्ठिताः । अहर्वै संवत्सरः" इति । एतेषां मतेन न्यायेन सर्वं संपूर्णं जातम् । कालतश्चात्र युज्यन्ते कालतः पूर्वापरानवच्छिन्ने युज्यन्ते । उपाधित्वेन मुहूर्ताद्याः सूर्यगतिभेदाः । तेषां ज्योतिषां नक्षत्राणां सूर्यचन्द्राभ्यां व्यतिक्रमात् । यथा प्राप्तविपरीतातिक्रमात्कालातिरेकेण सौरमासापेक्षया कालवृद्धया पञ्चमे वर्षे पञ्चमे मासे द्वौ मासावधिकौ जायेते । यथाह स्मृतिः 'दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः । करोत्येकमहः शेषं तथैवैकं च चन्द्रमाः । द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकाणां चतुष्केण स पतत्यधिमासकः । दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसैश्च सावनो मासः । सौरोऽर्कराशिभोगान्नाक्षत्रश्चन्द्रोडुपरिवर्तः ।' एते चत्वारो मासाः कर्मभेदेनेति । तेषां चतुर्णां मासानां क्रियापृथक्त्वं यथा—'विवाहादौ भवेत्सौरश्चान्द्रः स्यात्पितृकर्मणि । यज्ञे सावनमित्याहुरार्क्षं सर्वव्रतेषु च । ' व्रतं नाम प्रतिज्ञाकरणं त्रयोदशवर्षावधि । 'सर्वव्रते प्रतिज्ञायां नाक्षत्रो मास उच्यते । ' एषां पाण्डवानां त्रयोदशसु वर्षेषु पूर्वगणनया पञ्च मासा द्वादश दिनानि च पतन्ति । अतः सांव्यवहारिकचान्द्रमासापेक्षया त्रयोदशवत्सरनियम एभिः प्रतिश्रुतः । स च सौरमासकृतत्रयोदशवत्सरापेक्षया द्वादशरात्र्यधिकमासपञ्चकन्यूनत्वेऽपि एषां पूर्ण इत्यर्थः । 'पञ्चमे पञ्चमे वर्षे' इति एकत्र पञ्चमे वर्षे पञ्चमे (अन्यत्र ?) मासे छान्दसत्वान्मासशब्दलोप इत्यर्थः ॥ ३ ॥ ४ ॥

[ लक्षा० ] तेषां कालातिरेकेणेत्यत्र तेषां ज्योतिषां सूर्यादिज्योतिषां व्यतिक्रमात् त्रिंशद्दिनैः राशितो राश्यन्तरं गमनमिति सामान्यन्यायमतिक्रम्य पुनर्दिनद्वयानन्तरं राश्यन्तरे यत्संक्रमणं सोयं व्यतिक्रमः । तस्मात्कालातिरेकेण कालस्य अतिवृद्धया । पञ्चमे पञ्चमे वर्षे द्वौ मासौ सार्धवर्षद्वये एकोऽधिमासः । पुनः सार्धवर्षद्वये अपरोऽधिमास इति द्वौ मासावधिमासकौ । तेषां लोकरीत्या अधिकमासैः सह त्रयोदशानां वर्षाणां पञ्च अधिमासाः । दशवर्षाणां चत्वारः । पुनः सार्धवर्षद्वयस्य एको मासः । एवं सार्धद्वादशवर्षाणां पञ्च अधिकमासाः । पुनरुर्वरितषण्मासानां द्वादश क्षपाः । क्षपापदेन त्रिंशद्घटिकात्मकमर्धदिनमुच्यते । संपूर्णाः षड् दिवसा इति यावत् । तस्मात् आपातदर्शिनः त्रयोदशवर्षाणां षड्दिनाधिकपञ्चमासैः न्यूनतामाशङ्कन्ते । विवेकिनस्तु त्रयोदशवर्षान्तर्गतषड्दिनाधिकपञ्चमासानां बहिष्कृततया त्रिंशत्त्रिंशद्दिनात्मकद्वादशद्वादशमा-

एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ५ ॥
सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ॥ ६ ॥
अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्तेऽभ्युपायतः ॥ ७॥
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ ८ ॥
यच्चानृत इति ख्यायाद्यः स गच्छेत्पराभवम् ।
वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ॥ ९ ॥
प्राप्तकाले तु प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तं तथावीर्या हि पाण्डवाः ॥ १० ॥
प्रतियुध्येम समरे सर्वशस्त्रभृतां वरम् ।
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम्॥
तत्संविधीयतां शीघ्रं मा नो ह्यर्थोऽभ्यगात्परम् ॥११॥
नहि पश्यामि संग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ १२ ॥
संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १३ ॥
तस्माद्युद्धोचितं कर्म कर्म वा धर्मसंहितम् ।
क्रियतामाशु राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ १४ ॥

दुर्योधन उवाच—
नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह ।
युद्धोपचारिकं यत्तु तच्छीघ्रं प्रविधीयताम् ॥ १५ ॥

भीष्म उवाच—
अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते ।
सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ॥ १६ ॥

---

सानामेकैकः संवत्सर इति षड्दिनाधिकपञ्चमासन्यूनत्रयोदशवर्षाण्यपि संपूर्णत्रयोदशवर्षाणि वर्णयन्ति । दैवपितृकार्यार्थं साधिकमाससंवत्सरानुसरणेऽपि स्वोक्तनियमरक्षणाय पौर्णमासीतः पौर्णमासीपर्यन्तमेको मास इति चान्द्रमासानुसरणेनैव कृतकृत्यत्वादिति भावः ॥ ३ ॥ ४ ॥

[ नील० ] यच्च यदि च पाण्डवमनृतोऽयमर्जुन इति ख्यायात् कथयेत् स पराभवं गच्छेत् ॥ ९ ॥ धर्मसंहितं कर्म अयुद्धेन एतैः सह ऐक्यं गत्वा राज्यप्रदानम् ॥ १४ ॥

[ अर्जु० ] विक्रान्तमीषुः ऐच्छन् किंतु धर्मरज्जुसंबद्धा न चलितवन्तो नियमादिति भावः ॥ ८ ॥ अभिगात् गच्छेत् ॥ ११ ॥ भावाभावौ जीवितमरणे दृष्टं निश्चितम् ॥ १३ ॥ युद्धावचरितं युद्धौचितम् ॥ १४ ॥

[ चतु० ] अभ्युपायतः अधर्मतः ॥ ७ ॥ परमत्यर्थम् । युद्धावचरितं युद्धौपयिकम् । धर्मसंहितं धर्मप्रधानम् ॥ १४ ॥ मामिका मदीया ॥ १६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ९२ ॥

[सर्व०] यच्च यदि च पाण्डवमनृतोऽयमिति ख्यायात्कथयेत्स पराभवं गच्छेत् ॥ ९ ॥

[विरो०] तत्पाण्डवाचरणम्; । अनृतं छद्म ॥ ९ ॥ अत्यगात्; अभिगात् २ ( दे ) अभिगच्छेत्परमत्यर्थम् ॥ ११ ॥ भावाभावौ जीवितमरणे । जयाजयौ उद्देश्य सिद्धिपलायने ॥ १३ ॥ अपचरितं ? युद्धोचितम् । (दे) अनुचरितं च कर्म राज्यार्धदानम् ॥ १४ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ९२ ॥

[विष०] अनुपायतः अधर्मेण उपायैः सामादिभिरेव वाञ्छन्ति ॥ ७ ॥ वृणुयुर्मरणं पार्था इति । अस्यार्थः अयं युधिष्ठिरोऽनृतोऽसत्य इति यः ख्यापयेत् । युद्धे वा पराभवं गच्छेत् पराजीयात् । उभयोर्मध्यात् पार्था मरणं वृणुयुः । न अनृतत्वमित्यन्वयः ॥ ९ ॥ मा नो ह्यर्थोऽत्यगात् पर इति पाठे नोऽस्माकं पर उत्कृष्टोऽर्थः । अवश्यं करणीयः । समागच्छतु । अन्योऽपि वा द्वितीयोऽर्थः परम् अर्जुनं मातिगात् ॥ ११ ॥ भावाभावौ जीवितमरणे ॥ १३ ॥ धर्मसंहितं धर्मयुक्तं संधानरूपं राज्यदानलक्षणं कर्म ॥१४॥ युद्धाधिकारिकं युद्धाधिकारयोग्यम् ॥ १५ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ९२ ॥

[ लक्षा० ] कस्माद्धर्मे पराययुरित्यत्र पराययुः पराजयं प्राप्नुयुः । जिधातोर्भूधातोश्च पराभवार्थकपरेत्युपसर्गयोगवद्व्यासानुशासनाद्यातेरपि तस्योपसर्गस्य योगो द्रष्टव्यः ॥ ६ ॥ यश्चानृत इति ख्यायेदित्यत्र तावुभौ लोके स्त इति योग्यपदाध्याहारेणान्वयः । एकान्तसिद्धिं नियमेन कार्यसिद्धिम् ॥ १२ ॥ तस्माद्यद्दानचरितमित्यत्र दानचरितं पाण्डवानामर्धराज्यप्रदानस्य चरितम् आचरणं वा । धर्मसंहितं क्षत्रियधर्मेण सहितं कर्म युद्धकर्म वा ॥ १४ ॥

---

७ व. °स्तेऽनपायतः । अ. अनुपायतः । ८ व. विनिष्क्रान्तमीषुः । ज. क्षत्रियव्रताः । ९ व. यश्चानृत इति ख्यायेत्पुत्र [ यत्र ]; ज. तच्चानृतमिति ख्यायेद्यः स । ११ व. तथा शस्त्रभृतां । वरमित्यस्याग्रेऽधिकं ज. आगतं पाण्डवं राजन्सर्वैस्तत्र न संशयः । ज ह्यर्थोऽत्यगात्परम्; व. अर्थोऽतिगात्परः (रान्) । १३ ज. दृष्टमेतन्न संशयः । १४ व. तस्माद्युद्धं विचार्यैकं; ज. अस्माद्युद्धावचरितं । १५ ज. युद्धावचरितं; व. युद्धाधिकारिकं । व. तत्सर्वं ।

क्षिप्रं बलचतुर्भागं गृह्य गच्छ पुरं प्रति ।
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ॥ १७ ॥
वयं चार्धेन सैन्यस्य प्रतियोत्स्याम पाण्डवम् ।
अहं द्रोणश्च कर्णश्च अश्वत्थामा कृपस्तथा ।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ॥ १८ ॥
मत्स्यं वा पुनरायातमागतं वा शतक्रतुम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ १९ ॥

**वैशम्पायन उवाच—**

तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना ।
तथा हि कृतवान्राजा कौरवाणामनन्तरम् ॥ २० ॥
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।
सेनामुख्यान्व्यवस्थाप्य व्यूहितुं संप्रचक्रमे ॥ २१ ॥

**भीष्म उवाच—**

आचार्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः ।
कृपः शारद्वतो धीमान् पार्श्वं रक्षतु दक्षिणम् ॥२२॥
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।
अहं सर्वस्य सैन्यस्य पश्चात् स्थास्यामि पालयन् २३

इति श्रीमहाभारते विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ५३

कुरुसेनामभिपततार्जुनेन द्रोणस्य शराभ्यां पादयोरभिवादनमपराभ्यां कर्णयोः कुशलप्रश्नश्च ॥ १ ॥ द्रोणेन तत्प्रसंशनम् ॥ २ ॥ सेनायां दुर्योधनमपश्यता पार्थेनोत्तरं प्रति दक्षिणमार्गेण रथनयनचोदना ॥ २ ॥ कृपेण तदभिप्रायं विदित्वा तत्पार्ष्णिग्रहणविधानम् ॥ ३ ॥ तत्र गत्वार्जुनेन सैनिकेषु शरैस्ताडितेषु गवां प्रतिनिवर्तनम् ॥ ४ ॥

**वैशम्पायन उवाच—**

तथा व्यूढेष्वनीकेषु कौरवेयेषु भारत ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ १ ॥
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च महास्वनम् ।
दोधूयमानस्य भृशं गाण्डीवस्य च निःस्वनम् ॥ २ ॥
ततस्तु सर्वमालोक्य द्रोणो वचनमब्रवीत् ।
महारथमनुमाप्तं दृष्ट्वा गाण्डीवधन्विनम् ॥ ३ ॥

**द्रोण उवाच—**

एतद्ध्वजाग्रं पार्थस्य दूरतः संप्रकाशते ।
एष घोषः स रथजो रोरवीति च वानरः ॥ ४ ॥
एष तिष्ठन् रथश्रेष्ठे रथे च रथिनां वरः ।
उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् ॥ ५ ॥
इमौ च बाणौ सहितौ पादयोर्मे व्यवस्थितौ ।
अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ ॥६॥

---

[ नील० ] अनन्तरम् अविलम्बितम् ॥ २० ॥

इति श्रीनैल० भारतभावदीपे वि० प० द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

[ अर्जु० ] रुरुचे रुचितवत् ॥ २० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ सर्व० ] दंशितः सन्नद्धः ॥ १३ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[लक्षा०] तद्वाक्यं न कृतं तेनेत्यत्र तद्वाक्यं राज्यं देहीति पूर्वोक्तं वाक्यम् । कौरवाणामनन्तरमित्यत्र कौरवाणां राजा । यत् युद्धकर्म कुरुष्वेत्यनन्तरं वाक्यं तथा कृतवान् हीति योजना ॥ २० ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ नील० ] तथेति ॥ १ ॥ मे मम कर्णौ संपृश्य अतिक्रान्तौ ॥ ६ ॥

[ अर्जु० ] एषः ( घोषः ) घोरः सजलदो मेघ उच्चैस्तात् तेन सह वर्तते वानरः । सजलज इति पाठे शङ्खस्तत्सहितः एष पार्थः ॥ ४ ॥ रथवरप्रणुत् रथवरक्षेपकः ॥ ५ ॥

[ चतु० ] उपायात्समीपमगमत् ॥ १ ॥ रोरवीति अत्यर्थं रौति ॥ ४ ॥ प्रणुदतीति प्रणुत् ॥ ५ ॥

[ विष० ] इमौ हि बाणाविति । 'भीष्मं द्वाभ्यामिषुभ्यामनुचरणगताभ्यां पुरस्तात्प्रणम्य द्रोणं द्वाभ्यां च नत्वा कृपमथविशिखैकेन गुर्वात्मजं च । कर्णं संताड्य गाढं निशितशरशतैराशु दुःशासनादीन्व्यर्थीकृत्येषुवर्षैर्द्रुतरथतुरगोऽन्वे-

---

१८ व. ज. त्वर्धेन सैन्येन । ज. द्रौणिः शारद्वतस्तथा । २२ ज. आचार्यो मध्यतस्तिष्ठेदश्व° । इति द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

१ व. कौरवेयैर्महारथैः, च. ज. कौरवाणां महारथैः । ३ व. ततस्ततस्सर्वं; ज. ततः सर्वं समालोक्य ४ क. मेघः सविद्युत्स्तनितो रोर° । ५. ग. ज. ङ. श्रेष्ठे रथी रथवरप्रणुत् ; पररथप्रणुत्; रथ रथवरं नुदन् ।

निरुष्य हि वने वासं कृत्वा कर्मातिमानुषम् ।
अभिवादयते पार्थः श्रोत्रे च परिपृच्छति ॥ ७ ॥
चिरदृष्टोऽयमस्माभिः प्रज्ञावान्बान्धवप्रियः ।
अतीव ज्वलितो लक्ष्म्या पाण्डुपुत्रो धनञ्जयः ॥८॥
रथी शरी चारुतली निषङ्गी
शङ्खी पताकी कवची किरीटी ।
खड्गी च धन्वी च विभाति पार्थः
शिखी वृतः स्रुग्भिरिवाज्यसिक्तः ॥ ९ ॥

अर्जुन उवाच—

इषुपाते च सेनाया हयान् संयच्छ सारथे ।
यावत्समीक्षे सैन्येऽस्मिन् क्वासौ कुरुकुलाधमः ॥१०॥
सर्वानेताननादृत्य दृष्ट्वा तमतिमानिनम् ।
तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः ॥ ११ ॥
एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम् ।
भीष्मः कृपश्च कर्णश्च महेष्वासाः समागताः ॥१२॥
राजानं नात्र पश्यामि गाः समादाय गच्छति ।
दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ॥ १३ ॥
उत्सृजैतद्रथानीकं गच्छ यत्र सुयोधनः ।
तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम् ।
तं जित्वा विनिवर्तिष्ये गाः समादाय वै पुनः १४

वैशम्पायन उवाच—

एवमुक्तः स वैराटिर्हयान्संयम्य यत्नतः ।
नियम्य च ततो रश्मीन्यत्र ते कुरुपुङ्गवाः ।
अचोदयत्ततो वाहान्यत्र दुर्योधनो गतः ॥ १५ ॥
उत्सृज्य रथवंशं तु प्रयाते श्वेतवाहने ।
अभिप्रायं विदित्वा च कृपो वचनमब्रवीत् ॥ १६ ॥
नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमिच्छति ।
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रयास्यतः ॥१७॥
नह्येनमतिसंक्रुद्धमेको युध्येत संयुगे ।
अन्यो देवात्सहस्राक्षात्कृष्णाद्वा देवकीसुतात् ।
आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात् ॥ १८ ॥
किं नो गावः करिष्यन्ति धनं वा विपुलं तथा ।
दुर्योधनः पार्थजले पुरा नौरिव मज्जति ॥ १९ ॥
तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः ।
शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् ॥ २० ॥
कीर्यमाणाः शरौघैस्तु योधास्ते पार्थचोदितैः ।
नापश्यन्नावृतां भूमिं नान्तरिक्षं च पत्रिभिः ॥२१॥

---

त्यसौ कौरवेन्द्रम्' । नाटकीयः श्लोकोऽयं प्रसङ्गादिह लिखितः ॥ ६ ॥

[ लक्षा० ] द्वाभ्यां द्वाभ्यां बन्धुराग्रनिपातौ । बन्धुरौ स्नेहबन्धनशीलौ अग्रनिपातौ ययोस्तौ ॥ ६ ॥

[ नील० ] चारु तलं हस्तावापश्चारुतलं तद्वान् चारुतली स्रुग्भिः जुहूप्रभृतिभिः ॥ ९ ॥ इषुपाते इषुपातप्रमिते देशे, असौ दुर्योधनः ॥ १० ॥ महेष्वासाः महनीयधनुषः ॥ १२ ॥ रथवंशं रथसमूहम् ॥ १६ ॥ आवृतां भूमिं नापश्यन्निति न अपि तु शरैरावृतामेवापश्यन् ॥ २१ ॥

[अर्जु०] संयच्छ स्थिरबाणं (?) कुरु ॥१०॥ निरामिषं निरुपादानम् 'उपादानेऽपि चामिषम्' इति कोषः ॥ १४ ॥ रश्मीन् प्रग्रहान् वाहान् अश्वान् ॥ १५ ॥ रथवंशं रथसमूहम् 'पुंसि वंशः कुले वेणौ पृष्ठावयवकर्णयोः' इति मेदिनी ॥ १६ ॥ नैषोऽन्तरेण राजानं एष दुर्योधनं विना न स्थातुमर्हतीत्यर्थः ॥ १७ ॥ पुरा नौरिव इति अति निकटे वा प्रयाति ॥ १९ ॥

[चतु०] शङ्के तर्कयामि ॥ १३ ॥ निरामिषं निरुपादानम् ॥ १४ ॥ पुरा अग्रतः ॥ १९ ॥ नावृतामनावृताम् ॥२१॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[ सर्व० ] चारु तलं हस्तावापस्तद्वान् । स्रुग्भिः जुहूप्रभृतिभिः ॥ ९ ॥ रथवंशं रथसमूहम् ॥ १६ ॥ अन्तरेण विना ॥ १७ ॥

[ विरो० ] निरामिषं शत्रुपराभवरहितम् ॥ १४ ॥ वंशं समूहम् ॥ १६ ॥ पुरा अग्रे ॥ १९ ॥ अपश्यत् २ नापश्यत् च । वृतां च ॥ २१ ॥

[विष०] श्रोत्रे चेति । कुशलं योद्धुमनुज्ञां प्रार्थयते ॥ ७ ॥ नास्ति युद्धं निरामिषमिति चिरकालेप्सितप्राप्तिरहितम् ॥ १४ ॥ अन्तरेण राजानं दुर्योधनं विना । 'भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।' एता गावो

---

७ ज. निवर्त्य हि । १० घ. इषुपातेषु; इषुपातेन । ११ व. सर्वानन्याननादृत्य । १२ व. ज. महेष्वासा व्यवस्थिताः । १४ ज. समादाय सर्वशः । १५ व. वाहान्संयम्य सत्वरः । व. यत्र दुर्योधनस्ततः; ज. यतो राजा सुयोधनः । १६ ज. विदित्वा तं; ग. घ. च. व. विदित्वास्य द्रोणो । २१ क. ग. घ. °रिक्षं दिशस्तथा ।

तेषामापततां युद्धे नापयानेऽभवन्मतिः ।
शीघ्रत्वमेव पार्थस्य पूजयन्ति स्म चेतसा ॥ २२ ॥
ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणम् ।
विस्फार्य च धनुःश्रेष्ठं ध्वजे भूतान्यचोदयत् ॥२३॥
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च घोषेण पृथिवी समकम्पत ॥ २४ ॥
अमानुषाणां भूतानां तेषां च ध्वजवासिनाम् ।
ऊर्ध्वं पुच्छान्विधुन्वाना रेभमाणाः समन्ततः ।
गावः प्रतिन्यवर्तन्त दिशमास्थाय दक्षिणाम् ॥२५॥

इति श्रीमहाभारते विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ५४

अर्जुनस्य कुरुसैनिकैस्तुमुलं युद्धम् ॥ १ ॥ कर्णभ्रातुर्वधः ॥ २ ॥ कर्णेन सह युद्धं कर्णापयानं च ॥ ३ ॥

**वैशम्पायन उवाच—**

स शत्रुसेनां तरसा प्रणुद्य
गास्ता विजित्याथ धनुर्धराग्र्यः ।
दुर्योधनायाभिमुखं प्रयातो
भूयो रणं सोऽभिचिकीर्षमाणः ॥ १ ॥
गोषु प्रयातासु जवेन मत्स्यान्
किरीटिनं कृतकार्यं च मत्वा ।
दुर्योधनायाभिमुखं प्रयातं
कुरुप्रवीराः सहसाऽभिपेतुः ॥ २ ॥
तेषामनीकानि बहूनि गाढं
व्यूढानि दृष्ट्वा बहुलध्वजानि ।
मत्स्यस्य पुत्रं द्विषतां निहन्ता
वैराटिमामन्त्र्य ततोऽभ्युवाच ॥ ३ ॥
एतेन तूर्णं प्रतिपादयेमान्
श्वेतान्हयान्काञ्चनरश्मियोक्त्रान् ।
जवेन सर्वेण कुरु प्रयत्न-
मासादयेऽहं कुरुसिंहवृन्दम् ॥ ४ ॥

---

वित्तम्, जिते दुर्योधने भूमिः पृथ्वीराज्यम् । विराटस्य मित्रस्य चाऽर्थप्राप्तिर्गोपालनात् ॥ १७ ॥ दुर्योधनः पार्थजल इति । पुरा पश्चात् । दुर्योधनः अर्जुनसमुद्रे मज्जतीति मङ्क्ष्यति भविष्यत्यर्थे वर्तमानः । नौरिव प्रवहणमिव "यावत्पुरा निपातयोर्लट्" ॥ १९ ॥

[नील०] रेभमाणाः हम्बारवं कुर्वाणाः ॥ २५ ॥

इति श्रीनैल० भारतभावदीपे वि० प० त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

[अर्जु०] अपयाने पलायने ॥ २२ ॥ रेभमाणाः शब्दं कुर्वाणाः । पाठान्तरमवद्यम् ॥ २५ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[सर्व०] रेभमाणाः हम्बारवं कुर्वाणाः ॥ २५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[विरो०] रेटमानाः २ रेभमाणाः (अ दे) शब्दं कुर्वाणाः (दे) ॥ २५ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[विष०] रेभमाणाः शब्दं कुर्वन्त्यः । रेभृ रभि अभि शब्दार्थाः । गावः प्रतिन्यवर्तन्त इति बलीवर्दा अपि निवृत्ताः । "ग्राम्यपशुसंघेष्वतरुणेषु स्त्री" स्त्रीलिङ्गशेषात् । 'एते वर्मभृतोऽभितो मदजलप्रस्यन्दिनो दन्तिनः सौनासीरिमभिद्रवन्ति गिरयो भूयः सपक्षा इव । अप्येते रथिनस्तुरङ्गिण इमे धावन्त्यमी पत्तयः प्रेक्ष्यैवं तु महासुरा इव पुरा वैरं स्मरन्तो हरेः ' क्षेपकोऽयम् ॥ २५ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[लक्षा०] तेषां नैवाभियाने च नाभियाने इत्यत्र अभियाने पार्थे प्रत्यभिगमने । नाभियाने अभियानादन्यस्मिन् परावृत्य गमने ॥ २२ ॥ रेभमाणाः समन्तत इत्यत्र रिभु शब्द इतिधातोः । रेभमाणाः क्रन्दन्त्यः ॥ २५ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[नील० ] स इति ॥ १ ॥ एतेन पथा काञ्चनमया रश्मयो रज्जवस्ता एव योक्त्राणि बन्धनानि येषां तान् । कुरुसिंहस्य दुर्योधनस्य वृन्दं मुख्यम् । बृहि वृद्धौ अस्मात्कप्रत्यये ह्रस्य दः ॥ ४ ॥

---

२२ व.तेषां तु मानिनां । २५ ज.अमानुषाणां सर्वेषां भूतानां ॥ इति त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

१ व. °याभिमुखः प्रयातो । व. भूयो मनःप्रियमाजौ (प्रीतिमज्जौ) चिकीर्षन्; पार्थस्तदा प्रियमाजौ चिकीर्षन्; ज. मत्स्यस्य राज्ञः प्रियमाचिकीर्षुः । ३ क. गाण्डीवधन्वा द्विषतां निहन्ता । ४ व. प्रतिपाद्यमानान् । व. प्रयत्नमासाद्य एनं; मासादयेमां कुरु ।

गजो गजेनेव मया दुरात्मा
योद्धुं समाकाङ्क्षति सूतपुत्रः ।
तमेव मां प्रापय राजपुत्र
दुर्योधनापाश्रयजातदर्पम् ॥ ५ ॥
स तैर्हयैर्वातजवैर्बृहद्भिः
पुत्रो विराटस्य सुवर्णकक्षैः ।
व्यध्वंसयत्तद्रथिनामनीकं
ततोऽवहत्पाण्डवमाजिमध्ये ॥ ६ ॥
तं चित्रसेनो विशिखैर्विपाठैः
संग्रामजिच्छत्रुसहो जयश्च ।
प्रत्युद्ययुर्भारतमापतन्तं
महारथाः कर्णमभीप्समानाः ॥ ७ ॥
ततः स तेषां पुरुषप्रवीरः
शरासनार्चिः शरवेगतापः ।
व्रातं रथानामदहत्समन्यु-
र्वनं यथाग्निः कुरुपुङ्गवानाम् ॥ ८ ॥
तस्मिंस्तु युद्धे तुमुले प्रवृत्ते
पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो
भीमेन भीमानुजमाससाद ॥ ९ ॥
ततो विकर्णस्य धनुर्विकृष्य
जाम्बूनदाग्र्योपचितं दृढज्यम् ।
आपातयत्तं ध्वजमस्य मथ्य
छिन्नध्वजः सोऽप्यपयाज्जवेन ॥ १० ॥
तं शात्रवाणां गणबाधितारं
कर्माणि कुर्वन्तममानुषाणि ।
शत्रुन्तपः पार्थममृष्यमाणः
समार्दयच्छरवर्षेण पार्थम् ॥ ११ ॥
स तेन राज्ञाऽतिरथेन विद्धो
विगाहमानो ध्वजिनीं कुरूणाम् ।
शत्रुन्तपं पञ्चभिराशु विद्ध्वा
ततोऽस्य सूतं दशभिर्जघान ॥ १२ ॥
ततः स विद्धो भरतर्षभेण
बाणेन गात्रावरणातिगेन ।
गतासुराजौ निपपात भूमौ
नगो नगाग्रादिव वातरुग्णः ॥ १३ ॥

---

[ अर्जु० ] एतेन वर्त्मना । काञ्चनरश्मियोक्त्रान् योक्त्रं बन्धनप्रग्रहः ॥ ४ ॥

[ सर्व० ] एतेन पथा । काञ्चनमया रश्मयो रज्जवस्ता एव योक्त्राणि बन्धनानि येषाम् ॥ ४ ॥

[ विरो० ] एतेन पथा ॥ ४ ॥

[ विष० ] मनःप्रियं मनोवाञ्छितम् । आजौ संग्रामे ॥ १ ॥ एतेन मार्गेण आसादयेयं प्राप्नोमि ॥ ४ ॥

[ नील० ] सुवर्णकक्षैः स्वर्णमयौ कक्षौ पल्याणस्य पश्चादञ्चलपल्लवौ येषां तैः । 'कक्षः स्यादन्तरीयस्य पश्चादञ्चलपल्लवे' इति मेदिनी ॥ ६ ॥ अभीप्समानाः कर्णं जीवन्तमिच्छन्तः ॥ ७ ॥ व्रातं समूहम् ॥ ८ ॥ विपाठः स्थूलदण्डो बाणः ॥ ९ ॥ विकृष्य विलिख्य छित्त्वेत्यर्थः । अस्य तं प्रसिद्धं ध्वजं च मथ्य उन्मथ्यापातयत् अपयात् अपायात् ॥ १० ॥ गणस्य बाधितारं तेजोहरं शत्रुन्तपनामा ॥ ११ ॥ नगो वृक्षः नगाग्रात् पर्वताग्रात् । 'शैलवृक्षौ नगावगौ' इत्यमरः ॥ १३ ॥

[ अर्जु० ] कूर्मनखेन शरविशेषेण ॥ ११ ॥ नागो नगाग्रादिवेति पर्वतात्मकत्वात् रक्षा (?) इवेत्यर्थः । वातरुग्णः वातग्रस्तः ॥ १३ ॥

[ चतु० ] सुवर्णकक्षैः सुवर्णरज्जुभिः ॥ ६ ॥ विपाठैः शरजातिविशेषैः ॥ ७ ॥ कूर्मनखैः शरजातिविशेषैः ॥ ११ ॥ नगो वृक्षः । नगाग्राद्गिरिशिखरात् । वातरुग्णः वायुभग्नः ॥ १३ ॥

[ सर्व० ] कक्षौ पल्याणस्य पश्चादञ्चलपल्लवौ ॥ ६ ॥ अभीप्समानाः कर्णं जीवन्तमिच्छन्तः ॥ ७ ॥ व्रातं समूहम् ॥ ८ ॥ विपाठः स्थूलदण्डो बाणः ॥ ९ ॥ विकृष्य छित्त्वेत्यर्थः ॥ १० ॥ नगः वृक्षः ॥ १३ ॥

[ विरो० ] सुवर्णकक्षैः सुवर्णभूषणैः ॥ ६ ॥

[ विष० ] एते चित्रसेनादयश्चत्वारो दुर्योधनभ्रातरः । आपतन्तं युद्धाय प्राप्तुमिच्छन्तं महारथमर्जुनम् । कर्णमभीप्समानं योद्धुकामम् । महारथलक्षणम् 'एको दशसहस्राणि दन्तिनां यस्तु योधयेत् । वेत्ति शस्त्राणि शास्त्राणि स महारथ उच्यते ॥ सहस्रं योधयत्येकः स महारथ उच्यते । आजानुलम्बिबाहुर्यः स्मृतः सोऽपि महारथः ॥

---

५ घ. गजेनेव महादुरासदो योद्धुं । व. यो योद्धुमाका° । ६ व. ज. ततो हयैर्वा°; सितैर्हयैर्वा° । ७ ज. °युर्भ्रांतरमा° । घ. °तन्तं महारथं कर्णमभीप्समानम् । ८ व. धनंजयाग्निः कुरुपुङ्गवाग्र्यः । १० व. °धनुर्विहत्य । व. °त्केतुमपि प्रमथ्य । ११ व. °णां युधि बाधितारं । ज. शत्रुंतपः कोपममृष्यमाणः । व. °त्कूर्मसुखेन पार्थम्; क. च. कूर्मनखेन । १२ ज. शत्रुंजयं पञ्चभि° ।

नरर्षभास्तेन नरर्षभेण
वीरा रणे वीरतरेण भग्नाः ।
चकम्पिरे वातवशेन काले
प्रकम्पितानीव महावनानि ॥ १४ ॥
हतास्तु पार्थेन नरप्रवीरा
गतासवोर्व्यां सुषुपुः सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः
पराजिता वासवजेन संख्ये ॥ १५ ॥
सुवर्णकार्ष्णायसवर्मनद्धा
नागा यथा हैमवताः प्रवृद्धाः ।
तथा स शत्रून्समरे विनिघ्नन्
गाण्डीवधन्वा पुरुषप्रवीरः ॥ १६ ॥
चचार संख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ।
प्रकीर्णपर्णानि यथा वसन्ते
विशातयित्वा पवनोऽम्बुदांश्च ॥ १७ ॥
तथा सपत्नान्विकिरन्किरीटी
चचार संख्येऽतिरथो रथेन ।
शोणाश्ववाहस्य हयान्निहत्य
वैकर्तनभ्रातुरदीनसत्त्वः ।
एकेन सङ्ग्रामजितः शरेण
शिरो जहाराथ किरीटमाली ॥ १८ ॥
तस्मिन् हते भ्रातरि सूतपुत्रो
वैकर्तनो वीर्यमथाददानः ।
प्रगृह्य दन्ताविव नागराजो
महर्षभं व्याघ्र इवाभ्यधावत् ॥ १९ ॥
स पाण्डवं द्वादशभिः पृषत्कै-
र्वैकर्तनः शीघ्रमथो जघान
विव्याध गात्रेषु हयांश्च
सर्वान्विराटपुत्रं च करे निजघ्ने ॥ २० ॥
तमापतन्तं सहसा किरीटी वैकर्तनं वै तरसाऽभिपत्य
प्रगृह्य वेगं न्यपतज्जवेन नागं गरुत्मानिव चित्रपक्षः २१
तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
कर्णस्य पार्थस्य निशम्य युद्धं
दिदृक्षमाणाः कुरवोऽभितस्थुः ॥ २२ ॥
स पाण्डवस्तूर्णमुदीर्णकोपः
कृतागसं कर्णमुदीक्ष्य हर्षात् ।
क्षणेन साश्वं सरथं ससारथि-
मन्तर्दधे घोरशरौघवृष्ट्या ॥ २३ ॥

महारथाच्छतगुणो विज्ञेयोऽतिरथो बुधैः । एकादशसहस्राणि दन्तिनां यस्तु योधयेत् । शस्त्रशास्त्रप्रवीणश्च स्मृतः सोऽतिरथो बुधैः' ॥ ७ ॥ अपयात् अत्र आड्धात्वादिनिषेधः(?) । " बहुलं छन्दस्यमाङ्योगेऽपि । " इति पाणिनिः ॥ १० ॥ शत्रुंतपः औदीच्यो राजा । कूर्मनखेन बाणभेदेनं कूर्मनखाकारफलेन ॥ ११ ॥ गात्रावरणातिगेन गात्रमङ्गमावरणं कवचं चेत्येतदुभयभेदिना । गतासुर्गतप्राणः । नगो वृक्षः । नगाग्रात् पर्वताग्रात् ॥ १३ ॥

[ लक्षा० ] गतासुराजौ निपपातेत्यत्र गतासुः मूर्छां प्राप्तः विकर्णः ॥ १३ ॥

[ नील० ] गतासवः उर्व्यामितिच्छेदः सन्धिरार्षः ॥ १५ ॥ आतपान्ते घर्मस्वरूपे निदाघे । ' अन्तः स्वरूपे नाशे ना ' इति मेदिनी ॥ १७ ॥ शोणाश्वाः वाहे वाहके रथे यस्य तस्य ॥ १८ ॥ आददान आदातुमिच्छन् प्रगृह्य आग्रहेण दन्ताविव पर्वतशिखरतुल्यौ अर्जुनोत्तरौ प्रति अभ्यधावत् । 'दन्तः सानुनि कथ्यते' इति विश्वः । 'दन्तोऽद्रिकटके कुञ्जे' इति मेदिनी ॥ १९ ॥ वेगं प्रगृह्य स्वीकृत्य ॥२१॥ निशम्य युद्धादुपरम्य दिदृक्षमाणास्तस्थुः ॥२२॥

[ सर्व० ] आतपान्ते घर्मस्वरूपे निदाघे ॥ १७ ॥ शोणाश्वा वाहे वाहके रथे यस्य ॥ १८ ॥ दन्ताविव पर्वतशिखरतुल्यौ अर्जुनोत्तरौ प्रति ॥ १९ ॥ पृषत्कैः बाणैः ॥ २० ॥ निशम्य युद्धादुपरम्य ॥ २२ ॥

[ विरो० ] तथा अभिमुखान् ॥ १६ ॥ उन्नदन् २ नुनदन् (?) ( दे स्र ) ॥१७॥ वेगं प्रगृह्य प्रकृष्टं कृत्वा । तमापतन्तम् ॥ २१ ॥ तावुत्तमौ दिदृक्षमाणाः ॥ २२ ॥

[ विष० ] हिमवति गिरौ भवा हैमवता देवद्विपा इति

१४ क. रथर्षभास्ते तु रथर्षभेण । ज. वातजवेन काले । ज. °तानीव महावलानि । १५ व. नरप्रवीरा भूमौ युधानाः; युवानः; प्रधानाः । १६ व. नद्धाः किरीटिनः कुण्डलिनो मनुष्याः । पराजिताः पार्थबलेन संख्ये यथा वने सिंहबलाद्गजेन्द्राः । ज. °मरे निजघ्ने गाण्डी° । १७ व. विशा ( पा ) तयन्वात्यनिलो नुदन्खे; ज. विशातयन्वायुरथो नुदन्वै । १८ ज. स तान्सप° । १९ व. वैकर्तनः शीघ्रमुपाजगाम; च. ज. वैकर्तनश्चापमुपाददानः । व. प्रोद्यम्य दन्तानिव व्याघ्रराजो महर्षभं व्याघ्र इवाभ्यधावत् । २० व. °र्तनः शीघ्रमिवाजघान; शीघ्रमुपाजघान । ज. विराटपुत्रस्य हया°; घ. विव्याध गात्रेषु प्रगृह्य भल्लसरुक्मपुङ्खान्निशितान्निषङ्गान् । २१ ज. प्रगृह्य बाणं । ज. °त्मानिव शीघ्रवेगः । २२ च. ज. ततस्तयोर्युद्धमतीव घोरं दिदृक्ष° । २३ क. °मुदीक्ष्य कोपात्; च. ज. मुदीक्ष्य संख्ये । क. मन्तर्दधे मेघ इवातिवृष्ट्या ।

ततः सुविद्धाः सरथाः सनागा
योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हिता भीष्ममुखाः सहाश्वाः
किरीटिना कीर्णरथाः पृषत्कैः ॥ २४ ॥
स चापि तानर्जुनबाहुमुक्ता-
ञ्छरान् शरौघैः प्रतिहत्य वीरः ।
तस्थौ महात्मा सधनुः सबाणः
सविस्फुलिङ्गोऽग्निरिवाशु कर्णः ॥ २५ ॥
ततस्त्वभूद्वै तलतालशब्दः
सशङ्खभेरीपणवप्रणादः ।
प्रक्ष्वेडितज्यातलनिःस्वनं तं
वैकर्तनं पूजयतां कुरूणाम् ॥ २६ ॥
उद्धूतलाङ्गूलमहापताकध्वजो-
त्तमांसाकुलभीषणान्तम् ।
गाण्डीवनिर्ह्रादकृतप्रणादं
किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ २७ ॥
स चापि वैकर्तनमर्दयित्वा
साश्वं ससूतं सरथं पृषत्कैः ।
तमाववर्ष प्रसभं किरीटी
पितामहं द्रोणकृपौ च दृष्ट्वा ॥ २८ ॥
स चापि पार्थं बहुभिः पृषत्कै-
र्वैकर्तनो मेघ इवाभ्यवर्षत् ।
तथैव कर्णं च किरीटमाली
संछादयामास शितैः पृषत्कैः ॥ २९ ॥
तयोः सुतीक्ष्णान्सृजतोः शरौघा-
न्महाशरौघास्त्रविवर्धने रणे ।
रथे विलग्नाविव चन्द्रसूर्यौ
घनान्तरेणानुददर्श लोकः ॥ ३० ॥

---

॥ १६ ॥ अतिरथलक्षणं पूर्वमुक्तम् । 'रथः स्यात्स्यन्दने काये'। अतिकाय इत्यर्थः। वैकर्तनभ्राता संग्रामजित्॥१८॥ प्रगृह्य दन्तौ दन्तावुद्यम्येत्यर्थः । महर्षभं महाश्रेष्ठमर्जुनम् । महान्तमृषभं वृषम् ॥ १९ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[ नील० ] कर्णस्यान्तर्धानानन्तरमितरेऽपि शरैरन्तर्हिताः कृताः ॥ २४ ॥ प्रक्ष्वेडितो मुक्तो ज्यातलयोर्निःस्वनो येन तं पूजयतां तलतालशब्दः तलेन चपेटया तालः करास्फालनं तज्जः शब्दोऽभूत् । 'तलश्चपेटे तालद्रौ' 'तालः करास्फाले' इति च मेदिनी ॥ २६ ॥ उद्धूतमुपरिकृतं लाङ्गूलमेव महती पताका ध्वजाञ्चलो यस्मिंस्तस्य ध्वजस्य उत्तमौ अंसौ उपरिस्थतिर्यक्फलकाग्रभागौ तत्र आकुला व्यग्राः ये भीषणाः भूतादयः ते अन्ते समीपे यस्य तम् । गाण्डीवनिर्ह्रादेन सहकृतः प्रणादो येन तं गाण्डीवनिर्ह्रादकृतप्रणादं किरीटिनम् । ध्वजोपरिस्थभूतनादैः संवर्धितनादमित्यर्थः ॥ २७ ॥ द्रोणकृपौ च दृष्ट्वा ववर्षेति अनुकृष्यते ॥ २८ ॥ महद्भिः शरौघैरस्त्रौघैश्च विवर्धनं छेदनं यत्र तस्मिन्रणे विलग्नौ संनिहितौ चन्द्रसूर्यौ घनमध्यादिव तौ बाणसंघमध्याल्लोकोऽनुददर्श ॥ ३० ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[ अर्जु० ] पृषत्कैर्बाणैः कर्णरथं प्राप्येति शेषः ॥ २४ ॥ उद्धूतलाङ्गूलमहापताकं ध्वजोत्तमं साकुलभीषयन्तम् । गाण्डीवनिर्ह्रादकृतप्रणादं किरीटिनं वीक्ष्य ननाद कर्णः । ध्वजोत्तमं किरीटिनं च दृष्ट्वा उद्धूतलाङ्गूलमहापताकमुद्धृतम् उत्क्षिप्तं यल्लाङ्गूलं तदेव महापताका यस्य ध्वजोत्तमस्य । साकुलं यथा स्यात् तथा भीषयन्तं बिन्दुलोप आर्षः ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[ चतु० ] ध्वजोत्तमानां ........... कुलभीषणम् ॥ २७ ॥ घनान्तरेण मेघावकाशेन ॥ ३० ॥

[ सर्व० ] तलेन चपेटया तालः करास्फालनम् ॥२६॥ लाङ्गूलमेव महती पताका ध्वजाञ्चलो यस्मिंस्तस्योत्तमौ अंसौ उपरिस्थतिर्यक्फलकाग्रभागौ तत्राकुला व्यग्रा ये भीषणा भूतादयः ते अन्ते समीपे यस्य । ध्वजोपरिस्थभूतनादैः संवर्धितनादमित्यर्थः ॥ २७ ॥ शरौघैरस्त्रौघैर्विवर्धनं छेदनं यत्र तस्मिन्रणे ॥ ३० ॥

[ विरो० ] कर्ण इति स्वगुणप्रतिपादकशब्दग्राहकत्वेन संबन्धेन परेषां कर्णा अस्य सन्तीत्यर्शआद्यच् । तेन न पुनरुक्तिः ॥ २५ ॥ ततो विस्तृतोऽग्निरिव तलतालशब्दः तलानां ज्याघातवारणानां तालानां करतलानां शब्दः ।

---

२४ क. समीक्ष्य किरीटिना कर्णरथं पृषत्कैः; च. भीष्ममुखाश्च योधाः किरीटिना कर्णरथश्च बाणैः । २५ क. प्रतिहत्य तूर्णं । बभौ महात्मा सधनुः । अन्ते च–अन्तर्दधे पार्थमिषुप्रवर्षैर्भृशं ततश्चुक्रुशुराशु योधाः । इत्यधिकम् । २७ व. कुलभीषणं तम्; ज. भीषयन्तम् । २८ ज. पार्थोऽथ वैक° । ज. ससूतं च पृषत्कवर्षैः । ज. ततो ववर्ष प्र°; क. ननाद हर्षात्सहसा । २९ व. प्रच्छादयामास । ३० ज. ततः सृजन्तौ समरे शरौघानन्योन्यघोरास्त्र° । ज. रथे निषण्णानिव चन्द्रसूर्यौ शरान्धकारेण; क. राहुप्रमुक्ताविव चन्द्रसूर्यौ घना° ।

१ सचापीत्यत्र कर्णोऽपीतिपाठोऽस्याभिमत इति प्रतिभाति ।

अथाशुकारी चतुरो हयांश्च
विव्याध कर्णो निशितैः किरीटिनः ।
त्रिभिश्च यन्तारममृष्यमाणो
विव्याध तूर्णं त्रिभिरस्य केतुम् ॥ ३१ ॥
ततोऽभिविद्धः समरावमर्दी
प्रबोधितः सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा ऋषभः
कुरूणामजिह्मगैः कर्णमियाय जिष्णुः ॥ ३२ ॥
शरास्त्रवृष्ट्या निहतो महात्मा
प्रादुश्चकारातिमनुष्यकर्म ।
प्राच्छादयत्कर्णरथं पृषत्कैर्लो-
कानिमान्सूर्य इवांशुजालैः ॥ ३३ ॥
स हस्तिनेवाभिहतो गजेन्द्रः
प्रगृह्य भल्लान्निशितान्निषङ्गात् ।
आकर्णपूर्णं च धनुर्विकृष्य
विव्याध गात्रेष्वथ सूतपुत्रम् ॥ ३४ ॥
अथास्य बाहूरुशिरोललाटं
ग्रीवां वराङ्गानि परावमर्दी ।
शितैश्च बाणैर्युधि निर्बिभेद
गाण्डीवमुक्तैरशनिप्रकाशैः ॥ ३५ ॥
स पार्थमुक्तैरिषुभिः प्रणुन्नो
गजो गजेनेव जितस्तरस्वी ।
विहाय संग्रामशिरः प्रयातो
वैकर्तनः पाण्डववाणतप्तः ॥ ३६ ॥

इति श्रीमहाभारते विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ५५

पार्थेन कुरुबलं विध्वस्य कृपाभियानम् ॥ १ ॥

**वैशम्पायन उवाच—**
अपयाते तु राधेये दुर्योधनपुरोगमाः ।
अनीकेन यथा स्वेन शनैरार्च्छन्त पाण्डवम् ॥ १ ॥
बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः ।
अधारयत वेगं स वेलेव तु महोदधेः ॥ २ ॥

---

'तालः करतले' मेदिनी । प्रचण्डितः सिंहनादानुकूलमुखादिव्यापारः, ज्यया सहितं तलं ताभ्यां निःस्वनौ यत्र तं कर्णम् ॥ २६ ॥ उद्धूतेत्यादि । उद्धूतं वानरलाङ्गूलं यस्यां एतादृशी महापताका यस्य तम्[1] । ध्वजोत्तमस्य वानरस्य । आकुलेन संसृष्टशब्देन भीषणम् । ध्वजोत्तमस्याकुलभीषणं तम् । ध्वजोत्तमास्याकुलभीषणान्तम् । ध्वजोत्तम आस्या स्थितिस्तया आकुलैर्भूतैर्भीषणम् । ध्वजोत्तमाशाकुलभीषणं तम् । ध्वजेन उत्तमा आशा रथोर्ध्वदिक् तया आकुलैः खेचरैर्भीषणं ध्वजोत्तमानां कुलभीषयन्तम् । ध्वजा उत्तमा येषाम् । कुरूणां तेषां कुलं समूहं भीषयन्तम् । २ ध्वजोत्तमं साकुलभीषयन्तम् । ध्वजे उत्तमो वानरो यस्य ध्वजोत्तमं किरीटिनम् । आकुलैः सैन्यैः सह वर्तते साकुलो दुर्योधनः तं भीषयन्तं आर्षः समासः । अर्जुनमिश्रस्तु साकुलं यथा स्यात् बिन्दुलोप आर्ष इत्याह । गाण्डीवनिर्ह्रादेन सहकृतः प्रणादो येन ॥ २७ ॥ विमर्दो बभूव (शे) । घनान्तरेण मेघच्छिद्रेण ॥ ३० ॥

इति श्रीमहा० विरो० विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[लक्षा०] सहतोः शरौघानित्यत्र शरौघान् सहतोः सहमानयोः तयोः ॥ ३० ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[चतु०] संग्रामशिरो रणमुखम् ॥ ३६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[सर्व०] वराङ्गं शिरः ॥ ३५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

[नील०] आर्छन्त आगताः ॥ १ ॥

[अर्जु०] आर्दन्तः व्यथितवन्तः ॥ १ ॥ बहुधा तस्य

---

३१ ज. चतुरस्तुरङ्गान्पार्थस्य विव्याध शरैस्तु कर्णः । ज. त्रिभिरेव केतुम् । ३२ ज. तेनातिविद्धः । च. कर्णमियाय बाणैः । ३३ ज. प्रादुश्चकारास्त्रममोघकर्मा । त्रयस्त्रिंशान्ते च. स पाण्डवो द्वादशभिः पृषत्कैर्वैकर्तनं शीघ्रमुपाजगाम । विव्याध गात्रेषु हयांश्च सर्वान्विराटपुत्रं च करे निजघ्ने ॥ इत्यधिकम् । ३४ व. बाणैरथ सूतपुत्रम् । ३५ व. ग्रीवामथाङ्गानि; व. ण. ग्रीवारथाङ्गानि । उत्तरार्धस्थाने व. स्थितस्य बाणैर्निशितैर्बिभेद गाण्डीवमुक्तैर्विशिखैः प्रणुन्ने ॥ इति चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

१ ज. अनीकेन समासाद्य शरैः पाण्डवमार्दयन् । व. स्वेन शरैरार्छन्त पाण्डवम् । २ व. व्यूहस्यापततः शरैः ।

---

[1] 'उद्धूतलाङ्गूलमहापताकं' इति पाठमादृत्येदं व्याख्यानम् ।

ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं प्रकुर्वाणः प्रत्यायाद्रथसत्तमः ॥ ३ ॥
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
तथा गाण्डीवनिर्मुक्तैः शरैः पार्थो दिशो दश ॥ ४ ॥
न रथानां न चाश्वानां न गजानां न वर्मणाम् ।
अनिविद्धं शितैर्बाणैरासीत् द्व्यङ्गुलमन्तरम् ॥ ५ ॥
दिव्ययोगाच्च पार्थस्य हयानामुत्तरस्य च ।
शिक्षाशिल्पोपपन्नत्वादस्त्राणां च परिक्रमात् ।
वीर्यवत्त्वं द्रुतं चाग्र्यं दृष्ट्वा जिष्णोरपूजयन् ॥ ६ ॥
कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ॥ ७ ॥
तानि ग्रस्तान्यनीकानि रेजुरर्जुनमार्गणैः ।
शैलं प्रति बलाभ्राणि व्याप्तानीवार्करश्मिभिः ॥८॥
अशोकानां वनानीवच्छन्नानि बहुशः शुभैः ।
रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत ॥ ९ ॥
स्रजोऽर्जुनशरैः शीर्णं शुष्यत्पुष्पं हिरण्मयम् ।
छत्राणि च पताकाश्च खे दधार सदागतिः ॥१०॥
स्वबलत्रासनात्रस्ताः परिपेतुर्दिशो दश ।
रथाङ्गदेशानादाय पार्थच्छिन्नयुगा हयाः ॥ ११ ॥
कर्णकक्षविषाणेषु अन्तरोष्ठेषु चैव ह ।
मर्मस्वङ्गेषु चाहत्यापातयत्समरे गजान् ॥ १२ ॥
कौरवाग्रगजानां तु शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्तलम् ॥ १३ ॥
युगान्तसमये सर्वं यथा स्थावरजङ्गमम् ।
कालक्षयमशेषेण दहत्यग्रशिखः शिखी ।
तद्वत्पार्थो महाराज ददाह समरे रिपून् ॥ १४ ॥

सैन्यस्य व्यूढस्यापततः शरैः । अभिज्ञानीयमाज्ञाय वैराटिरिदमब्रवीत् । बहुधा नानाप्रकारेण व्यूढस्य शरैः शरद्वारेणापततः आगच्छतः सैन्यस्य अभिज्ञानीयं चिह्नमाज्ञाय आसमन्तात्प्रकारेण ज्ञात्वा वैराटिरिदं वक्ष्यमाणमब्रवीदित्यन्वयः। अभिज्ञानीयमभिज्ञानमविपर्ययज्ञानं तस्मै हितमिति व्युत्पत्त्या ॥ २ ॥

[चतु०] यथा यथावत् । आर्दयन् व्याप्तवन्तः । आर्च्छन्तेति पाठे समागताः ॥ १ ॥ शरैरुपलक्षिताः । व्यूढस्य व्यूहरचनया स्थितस्य ॥ २ ॥

[सर्व०] आर्छन्त आगताः ॥ १ ॥

[विष०] व्यूहस्य विपुलस्य ॥ २ ॥

[नील०] प्रत्यायात् प्रातिकूल्येनाभिमुखोऽगादित्यर्थः ॥ ३ ॥ दिशो दश प्रच्छादितवान् ॥ ४ ॥ अनिविद्धं नितरामविद्धम् अन्तरम् अवकाशः ॥ ५ ॥ उत्तरस्य हयानां शिक्षाशिल्पोपपन्नत्वादिति संबन्धः । द्रुतं वेगम् अपूजयन् अरय इत्यपकृष्यते ॥ ६ ॥ शैलं प्रति शैलसमीपे बलाभ्राणि बलवन्ति अचञ्चलानि अभ्राणि सूर्यरश्मिव्याप्तानि यथा तथा तान्यनीकानि शरव्याप्तान्यर्जुनसमीपे रेजुरित्यर्थः ॥ ८ ॥ शुभैः पुष्पैः फलसूचकत्वात्तेषां शुभत्वम् ॥ ९ ॥ स्रजः पुष्पं हिरण्मयं स्वर्णचम्पकजं शुष्यत् शरैः शीर्णं च तद्वच्छत्रादीनि च सदागतिः वायुः खे दधार बाणजालान्तर्हितत्वात्तेषामधः पतनं नाभूदित्यर्थः ॥ १० ॥ रथाङ्गदेशान् युगस्यैकदेशान् आदाय हयाः परिपेतुरित्यन्वयः ॥ ११ ॥ गजान् कर्णादिप्रदेशेषु आहत्य विद्ध्वाऽपातयत् पातयति स्म॥ १२ ॥ अग्रगजानां सेनाग्रगामिनां गजानां गतचेतसां मृतानाम् ॥ १३ ॥ कालक्षयं कालस्य ऐश्वर्यं जगदित्यर्थः । अग्रशिखः अग्रवत्तीक्ष्णाः शिखा यस्य ॥ १४ ॥

[चतु०] प्रत्यायात्प्रतिकूलतयाऽऽगतवान् ॥ ३ ॥ अन्तरमवकाशम् ॥ ५ ॥

[सर्व०] प्रत्यायात् प्रातिकूल्येनाभिमुखोऽगात् ॥ ३ ॥ अनिविद्धं नितरामविद्धम् ॥ ५ ॥ द्रुतं वेगम् ॥ ६ ॥ शैलं प्रति शैलसमीपे । बलवन्त्यचञ्चलानि अभ्राणि सूर्यरश्मिव्याप्तानि यथा तथा तान्यनीकानि शरैर्व्याप्तान्यर्जुनसमीपे रेजुः ॥ ८ ॥ शुभैः पुष्पैः ॥ ९ ॥ पुष्पं हिरण्मयं स्वर्णचम्पकजं शुष्यत् शरैः शीर्णं च तद्वच्च छत्रादीनि । सदागतिः वायुः । खे दधार बाणजालान्तर्हितत्वात्तेषामधः पतनं नाभूदित्यर्थः ॥ १० ॥ रथाङ्गदेशान् युगस्यैकदेशानादाय हयाः परिपेतुः ॥ ११ ॥ कालक्षयं कालस्य ऐश्वर्यं जगदित्यर्थः । अग्रवत्तीक्ष्णाः शिखा यस्य ॥ १४ ॥

[विरो०] व्यूढस्यापततः शरैरित्यनन्तरम् ' अधारयत वेगं स ' इत्यादि ' दृष्ट्वा तस्याथ विक्रमम् ' इत्यन्तं श्लोकचतुष्टयं (दी अ स्र)संमतम् ॥ ६ ॥

[लक्ष्मा०] अतिविद्धैः सितैर्बाणैरित्यत्र अतिशयेन विद्धं वेधो येभ्यस्तैः । भावे क्तप्रत्यये कृते विद्धमिति वेधो लभ्यते बाणैः रथानामश्वादिभ्यः अनन्तरं विद्धं वेधो

५ ज. न चाश्वानां न ध्वजानां न चर्मणाम् । ६ व. वीर्यवत्त्वं दृढं चाग्र्यं । ८ क. तिग्मांशोश्च घनाभ्राणि व्याप्तानीव गभस्तिभिः; ज. नवाभ्राणि । ९ उत्तरार्धस्थाने क. पार्थः संरञ्जयामास रुधिरेणाकुलं बलम् । सहस्रशोऽर्जुनशरैच्छिन्नान्युच्चावचानि च । च. ज. ङ. १०–३८ ॥ श्लोका न सन्ति। १२ पूर्वार्धस्थाने क. चक्षुर्नासाविषाणेषु दन्तवेष्टेषु च द्विपान् ।

१ उपलब्धेषु तु पुस्तकेषु ' दृष्ट्वा जिष्णोरपूजयन् ' इत्येव पाठो दृश्यते।

ततः सर्वास्त्रतेजोभिर्धनुषो निःस्वनेन च ।
शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।
भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः ॥ १५ ॥
दैवारिपाच्च बीभत्सुस्तस्मिन्दौर्योधने बले ।
भयमुत्पादयामास बलवानरिमर्दनः ॥ १६ ॥
रथशक्तिममित्राणां प्रागेव निपतद्भुवि ।
सोऽपयात्सहसा पश्चात्साहसाच्चाभ्युपेयिवान् ॥१७॥
शरव्रातैः सुतीक्ष्णाग्रैः समादिष्टैः खगैरिव ।
अर्जुनस्तु खमावव्रे लोहितप्राशनैः खगैः ॥ १८ ॥
अत्रमध्ये यथार्कस्य रश्मयस्तिग्मतेजसः ।
दिशासु च तथा राजन्नसङ्ख्याताः शरास्तदा ॥१९॥
सकृदेवानतं शेकू रथमभ्यसितुं परे ।
अलभ्यः पुनरश्वैस्तु रथात्सोऽतिप्रपादयेत् ॥ २० ॥
ते शरा द्विड्शरीरेषु यथैव न ससज्जिरे ।
द्विडनीकेषु बीभत्सोर्न ससज्जे रथस्तथा ॥ २१ ॥

---

नासीत् किंतु युगपदेव । एवमुत्तरत्रापि योजना ॥ ५ ॥ रथाङ्गदेशमुत्सृज्येत्यत्र रथाङ्गदेशं रथचक्रप्रदेशम् ॥ ११ ॥ चक्षुर्नसि विषाणेष्वित्यत्र चक्षुर्नसि चक्षुर्नसोः । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः ॥ १२ ॥

[ नील० ] दैवारिपात् देवारीनसुरान्पातीति देवारिपः समुद्रस्तत्र जातो दैवारिपः शङ्खस्तस्मात् चात् भैरवं शब्दं कुर्वत इत्यनुकृष्यते ॥ १६ ॥ अमित्राणां वैरिणां रथशक्तिं शरीरसामर्थ्यम् । 'रथः स्यन्दनदेहयोः' इति कोशः । प्रागेव सहसा दर्शनमात्रादेव निपतत् न्यपातयत् । शक्तिरिति पाठे न्यपतत् अडभावादिरार्षः । सोऽर्जुनः अपयात् आगतः । पय गतौ गत्यभावादित्यर्थः । साहसाच्च अशक्तवधरूपात् पश्चात्तान् युद्धार्थमुपेयिवान् ॥ १७ ॥ खगैः पक्षिभिरिव खगैर्बाणैः ॥ १८ ॥ अत्रमध्ये अत्रं अमत्रम् 'अत्राण्यस्मै पड्भिः संभरन्ति' इत्यादाविवात्रापि मध्यमवर्णलोपश्छान्दसः । यदाह शौनको बृहद्देवतायाम्–'वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य वा ॥ अत्राणीति कपिर्नाभादनोयामीत्यघासु च' इति अत्राण्यस्मै पड्भिः अमत्राणीत्यपेक्षिते वर्णस्य लोपः । प्रियातष्टानि मे कपिः वृषाकपिरित्यपेक्षिते वृषा इत्येतयोर्वर्णयोर्लोपः । अयं नाभा वदति नाभानेदिष्ट इत्यपेक्षिते वर्णत्रयलोपः । दनोविशइन्द्र दनोदानमनस इत्यपेक्षिते बहूनां वर्णानां लोपः । दनो दानमनस इति यास्कः । तत्त्वायामि याचामीत्यपेक्षिते । अघासु हन्यन्ते गावः मघास्वित्यपेक्षिते व्यञ्जनलोपः । यथा पात्रे प्रविष्टाः सूर्यरश्मयोऽवकाशाभावात्संकुचन्ति तद्वद्गगनेऽर्जुनबाणा न मान्तीत्यर्थः ॥ १९ ॥ सकृदेव तत्क्षणमेव आनतमुपगतं रथमर्जुनरथं परे रिपवः अभ्यसितुं परिच्छेतुं शेकुः । तुशब्दो हेत्वर्थे । अतः स पुनः क्षणान्तरे अलभ्यः पैर्ज्ञातुमशक्यः । तत्र हेतुमाह अश्वैरिति । सः अश्वैः सह परान् रथात् अतिप्रपादयेत् इमं लोकमतिहापयित्वाऽमुं लोकं नयेत् । दृष्टमात्रोऽर्जुनः शरैः परान्परलोकं प्रापयतीत्यर्थः ॥ २० ॥ न ससज्जिरे न सक्ताः किं तु भित्त्वा परत एव गताः । एवं रथोऽपि द्विषामनीकेष्वित्यर्थः । शराणां रथस्य च गतिर्न कुण्ठिता भवतीत्यर्थः ॥ २१ ॥

[ सर्व० ] देवारीन् असुरान्पातीति देवारिपः समुद्रस्तत्र जातो दैवारिपः शङ्खः । तस्माद्भैरवं शब्दं कुर्वतः ॥१६॥ रथशक्तिं शरीरसामर्थ्यम् । प्रागेव दर्शनमात्रादेव निपतत् न्यपातयत् । सः अर्जुनः अपयात् पय गतौ गत्यभावादित्यर्थः । साहसादशक्तवधरूपात्पश्चात्तान्युद्धार्थमुपेयिवान् ॥१७॥ अत्रमध्ये अत्रम् अमत्रं मध्यवर्णलोप आर्षः । यथा पात्रे प्रविष्टाः सूर्यरश्मयोऽवकाशाभावात्संकुचन्ति तद्वद्गगनेऽर्जुनबाणा न मान्तीत्यर्थः ॥ १९ ॥ सकृदेव तत्क्षणमेव आनतम् उपगतम् अर्जुनरथं रिपवोऽभ्यसितुं परिच्छेतुं शेकुः । यतः सः क्षणान्तरे अलभ्यः परैर्ज्ञातुमशक्यः । तत्र हेतुः सः अश्वैः सह परान् रथादतिप्रपादयेत् इमं लोकमतिहापयित्वाऽमुं लोकं नयेत् । दृष्टमात्रोऽर्जुनः परान्परलोकं प्रापयतीत्यर्थः ॥ २० ॥ न ससज्जिरे न सक्ताः । किंतु भित्त्वा परत एव गताः ॥ २१ ॥

[ लक्षा० ] खगयानाभिसंवीतैः संविष्टैः खगमैरिवेत्यत्र खगानां यानानि गमनसाधनानि पत्राणि । यात्यनेनेति व्युत्पत्त्या यानपदस्य निष्पन्नत्वात् । तैः संवीतैः संवद्धैरिति शराणां विशेषणम् । संविष्टैः वनप्रविष्टैः खगमैः पक्षिभिरिव लोहितेषु रक्तेषु प्रवणैः नम्रैः खगैः खे गच्छन्तीति खगमाः शराः तैः ॥ १८ ॥ सकृतेऽवकृतं शेकुरित्यत्र सकृते कृतेन युद्धकर्मणा सहिते पार्थे सति अवकृतं स्वाधोभागेकृतं रथमर्जुनरथमभ्यसितुमभितो निरसितुं परे न शेकुरिति योजना । तैः अनभ्यस्तः अभितोऽप्यनिराकृतः सः रथः अभिपपात शत्रुसेनां प्रत्येव पपात ॥ २० ॥ तच्छरा द्विः शरीरेष्वित्यत्र तच्छराः पार्थशराः शरीरेषु वैरिशरीरेषु यथा द्विः द्विवारं न ससञ्जिरे तथा बीभत्सोः रथोऽपि अनीकेषु वैरिसेनासु द्विर्न ससज्ज

---

१७ व. °ममित्राणां सा प्रागेव पतद्भुवि । २० क. सकृदेव नतं शेकुः कथमभ्यसितुं परे । अनभ्यस्तः पुनस्तैर्हि रथः सोऽभिपपात तान् । २१ क. द्विषानीकेषु ।

स तद्विक्षोभयामास त्वरातिबलमञ्जसा ।
अनन्तभोगो भुजगः क्रीडन्निव महार्णवे ॥ २२ ॥
अस्यतो नित्यमत्यर्थं सर्वमेवातिगस्तथा ।
अश्रुतः श्रूयते भूतैर्धनुर्घोषः किरीटिनः ॥ २३ ॥
सन्ततास्तत्र मातङ्गा बाणैरल्पान्तरान्तरे ।
संवृतास्तेन दृश्यन्ते मेघा इव गभस्तिभिः ॥ २४ ॥
दिशोऽनुभ्रमतः सर्वाः सव्यदक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ २५ ॥
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तथा गाण्डीवधन्वनः ॥ २६ ॥
मार्गो गजसहस्रस्य युगपद्गच्छतो वने ।
यथा भवेत्तथा जज्ञे रथमार्गः किरीटिनः ॥ २७ ॥
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।
हन्त्यस्मानित्यमन्यन्त पार्थेन निहताः परे ॥ २८ ॥
घ्नन्तमत्यर्थमहितान्विजयं तत्र मेनिरे ।
कालमर्जुनरूपेण संहरन्तमिव प्रजाः ॥ २९ ॥
कुरुसेनाशरीराणि पार्थेनैवाहतान्यपि ।
सेदुः पार्थहतानीव पार्थकर्मानुशासनात् ॥ ३० ॥
ओषधीनां शिरांसीव द्विषच्छीर्षाणि सोऽन्वयात् ।
अवनेशुः कुरूणां हि वीर्याण्यर्जुनजाद्भयात् ॥ ३१ ॥
अर्जुनानिलभिन्नानि वनान्यर्जुनविद्विषाम् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितान्तराम् ॥ ३२ ॥
लोहितेन समायुक्तैः पांसुभिः पवनोद्धृतैः ।
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ॥ ३३ ॥
सार्कं खं तत्क्षणेनासीत्संध्यायामिव लोहितम् ।
अप्यस्तं प्राप्य सूर्योऽपि निवर्तेत न पाण्डवः ॥ ३४ ॥
तान्सर्वान्समरे शूरः पौरुषे समवस्थितान् ।
दिव्यैरस्त्रैरचिन्त्यात्मा सर्वानार्च्छद्धनुर्धरान् ॥ ३५ ॥
स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत् ।
दुःसहं दशभिर्बाणैर्द्रौणिमष्टाभिरेव च ॥ ३६ ॥
दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शान्तनवं षष्ट्या राजानं च शतेन ह ।
कर्णं च कर्णिना कर्णे विव्याध परवीरहा ॥ ३७ ॥
तस्मिन्विद्धे महेष्वासे कर्णे सर्वास्त्रकोविदे ।
हताश्वसूते विरथे ततोऽनीकमभज्यत ॥ ३८ ॥
तत्प्रभग्नं बलं दृष्ट्वा पार्थमाजिस्थितं पुनः ।
अभिप्रायं समाज्ञाय वैराटिरिदमब्रवीत् ॥ ३९ ॥

---

एकवारं परावृत्य पुनर्वैरिसेनायां न सक्तो भवति किं तु पार्थशरवदनिवृत्त एव अग्रे अग्रे गच्छतीति भावः ॥ २१ ॥

[ नील० ] अनन्तभोगः बहुफणः शेष इत्यर्थः ॥ २२ ॥ सर्वमेवातिगः सर्वाधिकः सर्वशब्दाभिभावीत्यर्थः ॥ २३ ॥ तत्र रणभूमौ अल्पान्तरान्तरे अल्पे अन्यान्तरे (?) पदे पदे सन्तता इत्यर्थः । तेन कारणेन ते गभस्तिभिः सूर्यरश्मिभिः संवृता मेघा इव दृश्यन्ते ॥ २४ ॥ सायकासनं धनुस्तस्य मण्डलम् अतिवेगादलातचक्रसदृशमित्यर्थः ॥ २५ ॥ मार्ग इति । गजसहस्रेण वनमिवार्जुनरथेन परसैन्यमुपमृद्यत इत्यर्थः ॥ २८ ॥ विजयमर्जुनं कालमिव मेनिरे ॥ २९ ॥ पार्थेनैव हतानि पार्थहतानीव सेदुर्विशीर्णानि बभूवुरिति । 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवदभूतोपमेयमित्यर्थः । यतोऽत्र पार्थकर्मैवानुशासनमुपमार्थे कर्तव्यं नान्यत्कर्म अतः पार्थहतानीव सेदुरित्यर्थः ॥ ३० ॥ ओषधीनां व्रीह्यादीनां शिरांसि कणिशानि अन्वयात् अनुक्रमात् अवनेशुः नष्टानि अर्जुनजात् अर्जुनकृतात् भयात् छेदरूपात् ॥ ३१ ॥ अर्जुनविद्विषां स्थाणुभूतानां वनानि आलयानि शरीराणीति यावत् । 'वनं नपुंसकं नीरे निवासालयकानने' इति मेदिनी ॥ ३२ ॥ कर्णिना बाणेन कर्णे कर्णदेशे ॥ ३७ ॥

[ चतु० ] अभिज्ञानाय गन्तव्यपरिज्ञानाय । अभिज्ञानीयमाज्ञायेति पाठे अभिज्ञानमविपर्ययज्ञानं तस्मै हितम् । 'एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम्' इत्यादिना प्रागुक्तेन आज्ञाय सम्यक् ज्ञात्वा ॥ ३९ ॥

[ सर्व० ] अनन्तभोगः बहुफणः शेषः ॥ २२ ॥ सर्वमेवातिगः सर्वाधिकः । सर्वशब्दाभिभावीत्यर्थः ॥ २३ ॥ तत्र रणभूमौ । अल्पान्तरान्तरे अल्पान्तरे पदे पदे इत्यर्थः । गभस्तिभिः सूर्यकिरणैः ॥ २४ ॥ सायकासनं धनुः तस्य मण्डलम् अतिवेगादलातचक्रसदृशम् ॥ २५ ॥ विजयमर्जुनम् ॥ २९ ॥ पार्थहतानीव पार्थेनैव हतानि सेदुर्विशीर्णानि बभूवुः ॥ ३० ॥ औषधीनां व्रीह्यादीनां शिरांसि कणिशानि अन्वयात् छेदनाकर्मणा ॥ ३१ ॥ अर्जुनविद्विषां

---

२९ घ्नन्तमत्यर्थमाहिताञ्जयन्तस्तत्र मेनिरे । ३० क. पेतुः पार्थहतानीव । ३१ क. शिरांसीव कालपक्तिसमन्वयात् । क. हि शिरांस्यर्जुनजाद्भयात् । ३६ क. बाणैरर्जुनः समविध्यत । ३७ क. पष्ट्या प्रत्यविध्यत्स्तनान्तरे ।

३९ ज. प्रत्यागमनमाज्ञाय वैराटिः पार्थमब्रवीत्; ग. घ. ञ. अभियानीयमाज्ञाय ।

आस्थाय रुचिरं जिष्णो रथं सारथिना मया ।
कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥४०॥

अर्जुन उवाच—

लोहिताश्वमरिष्टं यं वैयाघ्रमनुपश्यसि ।
नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर ॥ ४१ ॥
कृपस्यैतदनीकाग्र्यं प्रापयस्वैतदेव माम् ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः ॥ ४२ ॥
ध्वजे कमण्डलुर्यस्य शातकौम्भमयः शुभः ।
आचार्य एष हि द्रोणः सर्वशस्त्रभृतां वरः ॥ ४३ ॥
सदा ममैष मान्यस्तु सर्वशस्त्रभृतामपि ।
सुप्रसन्नं महावीरं कुरुष्वैनं प्रदक्षिणम् ॥ ४४ ॥
अत्रैव चावरोहैनमेष धर्मः सनातनः ।
यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति ।
ततोऽस्य प्रहरिष्यामि नास्य कोपो भवेदिति ॥४५॥
अस्याविदूरे हि धनुर्ध्वजाग्रे यस्य दृश्यते ।
आचार्यस्यैष पुत्रो वै अश्वत्थामा महारथः ॥ ४६ ॥
सदा ममैष मान्यस्तु सर्वशस्त्रभृतामपि ।
एतस्य त्वं रथं प्राप्य निवर्तेथाः पुनः पुनः ॥ ४७ ॥
य एष तु रथानीके सुवर्णकवचावृतः ।
सेनाग्र्येण तृतीयेन व्यावहार्येण तिष्ठति ॥ ४८ ॥
यस्य नागो ध्वजाग्रेऽसौ हेमकेतनसंवृतः ।
धृतराष्ट्रात्मजः श्रीमानेष राजा सुयोधनः ॥ ४९ ॥
एतस्याभिमुखं वीर रथं पररथारुजम् ।
प्रापयस्वैष राजा हि प्रमाथी युद्धदुर्मदः ॥ ५० ॥
एष द्रोणस्य शिष्याणां शीघ्रास्त्रे प्रथमो मतः ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं रणे ॥ ५१ ॥
नागकक्षा तु रुचिरा ध्वजाग्रे यस्य तिष्ठति ।
एष वैकर्तनः कर्णो विदितः पूर्वमेव ते ॥ ५२ ॥
एतस्य रथमास्थाय राधेयस्य दुरात्मनः ।
यत्तो भवेथाः संग्रामे स्पर्धते हि सदा मया ॥५३॥
यस्तु नीलानुसारेण पञ्चतारेण केतुना ।
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् ॥५४॥

---

स्थाणुभूतानां वनान्याल्यानि शरीराणीति यावत् ॥३२॥ कर्णिः बाणः। कर्णे कर्णप्रदेशे ॥ ३७ ॥

[ विरो० ] अभिज्ञानीयं गमनोद्देश्यचिह्नम् । आज्ञाय सम्यक्ज्ञातुम् (?) ॥ ३९ ॥

[विष०] एकस्य बहूनभिलक्षीकृत्य गमनमभियानीयम् ॥ ३९ ॥

[ लक्षा० ] सायकासनमण्डलमित्यत्र सायकासनं शरासनं तस्य मण्डलं मण्डलाकारः सततं दृश्यते ॥ २५ ॥ कालपक्तिसमन्वयादित्यत्र कालपक्तेः समन्वयात् । बहुकालसंबन्धात्स्यपरिपाकात् ॥ ३१ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ नील० ] अरिष्टं शुभं वैयाघ्रं व्याघ्रचर्मपरिवृतम् ॥ ४१ ॥ अत्रैव समये एनम् अव मानय अवरोह च अध्यारूढो भव युद्धाय सज्जो भव । एनमनुलक्षीकृत्येत्यर्थः । एतदेव द्वयं प्रकटयति—यदि मे इति । प्रथमप्रहारान्माननं पश्चात्प्रहारेणाधिरोहणं चेत्यर्थः ॥ ४५ ॥ व्यावहार्येण व्यवहारयोग्येन अश्रान्तेनेत्यर्थः ॥ ४८ ॥ नागकक्षा हस्त्यङ्कितपताकाञ्चलः हस्तिशृङ्खलेत्यन्ये ॥ ५२ ॥

नीलानुसारेण नीलपताकावता ताराः सुवर्णमण्डलानि हस्तावापो हस्तत्राणं तद्वान् ॥ ५४ ॥

[ अर्जु० ] अरिष्टं चिह्नम् ॥ ४१ ॥ सेनाप्रधानेन द्वितीयेन भागेन व्यावहार्येण युद्धयोग्येन ॥ ४८ ॥ यस्तु नीलानुसारणे पञ्चतारेण केतुना । हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् ॥ नीलः कृष्णः अनुसारः पताका यस्मिन्, पञ्चताराः कृत्रिमा यत्र, हस्तावापी शरमुष्टिमान् वंशस्य प्रमुखे इत्यग्रिमेणान्वयः ॥ ५४ ॥

[ चतु० ] रुचिरमिति यानक्रियाविशेषणम् ॥ ४० ॥ अरिष्टं ध्वजचिह्नमिति शेषः (?) ॥ ४१ ॥ शीघ्रास्त्रं शीघ्रास्त्रत्वम् ॥ ४२ ॥ सुप्रसन्नमनाः सन्नप्रतिकूलत्वात् ॥४४॥ नागो हस्ती केतनं पताका ॥ ४९ ॥ नागकक्षा हस्तिशृङ्खला रुचिरा काञ्चननिर्मिता ॥ ५२ ॥ यत्तो प्रयत्नवान् ॥ ५३ ॥ नीलानुसारेण नीलपताकेन केतुना ध्वजेन । हस्तावापी काण्डमुष्टिमान् ॥ ५४ ॥

[ सर्व० ] अरिष्टं शुभं वैयाघ्रं व्याघ्रचर्मपरिवृतम् ॥ ४१ ॥ अत्रैव समये एनम् अवरोह च अध्यारूढो भव । युद्धाय सज्जो भवेत्यर्थः ॥ ४५ ॥ व्यावहार्येण व्यवहारयोग्येन अश्रान्तेनेति यावत् ॥ ४८ ॥ नागकक्षा हस्ति-

---

४१ व. ज. लोहिताक्षमरिष्टं । व. पीतां पताका° । ४२ ज. शीघ्रास्त्रत्वं महात्मनः । ४४ व. ज. सुप्रसन्नमना वीर । ४५ व. ज. अत्रैव चावरोह्येयमेष । व. ततोऽहं प्र°; घ. तथैनं प्रहरिष्यामि । ज. कोपो भवेत्तथा; व. भविष्यति ।

४७ दे. सखा ममैष । ४८ व. य एव तुरगानीके; कवचानीके । ४९ ज. हेमकेतनसंश्रितः; व. संभृतः; °ग्रेऽसौ हिरण्यमणिभूषितः । ५४ व. °सारेण केतुना प्रतिलक्ष्यते ।

यस्य तारार्कचित्रोऽसौ ध्वजो रथवरे स्थितः ।
यस्यैतत्पाण्डुरं छत्रं विमलं मूर्ध्नि तिष्ठति ॥ ५५ ॥
महतो रथवंशस्य नानाध्वजपताकिनः ।
बलाहकाग्रे सूर्यो वा य एष प्रमुखे स्थितः ॥५६॥
हैमं चन्द्रार्कसंकाशं कवचं यस्य दृश्यते ।
जातरूपशिरस्त्राणं मनस्तापयतीव मे ॥ ५७ ॥
एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ।
राजश्रियाऽभिवृद्धश्च सुयोधनवशानुगः ॥ ५८ ॥
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ।
एतेन युध्यमानस्य यत्तः संयच्छ मे हयान् ॥ ५९ ॥
ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम् ।
यत्रातिष्ठत्कृपो राजन्योत्स्यमानो धनञ्जयम् ॥६०॥

इति श्रीमहाभारते विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशोऽध्यायः ५६

अर्जुनस्य कुरुभिः सह युद्धं द्रष्टुमाकाशे देवर्षिसिद्धानां विमानैः संप्राप्तिः ॥ १ ॥

**वैशम्पायन उवाच—**

तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनाम् ।
संसर्पन्ते यथा मेघा घर्मान्ते मन्दमारुताः ॥ १ ॥
अभ्याशे वाजिनस्तस्थुः समारूढाः महारिणः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशनोदिताः ।
महामात्रैः समारूढा विचित्रकवचोज्ज्वलाः ॥ २ ॥
ततः शक्रः सुरगणैः समारुह्य सुदर्शनम् ।
सहोपायात्तदा राजन्विश्वाश्विमरुतां गणैः ॥ ३ ॥
तद्देवयक्षगन्धर्वमहोरगसमाकुलम् ।
शुशुभेऽभ्रविनिर्मुक्तं ग्रहाणामिव मण्डलम् ॥ ४ ॥

---

शृङ्खला ॥ ५२ ॥ नीलानुसारेण नीलपताकावता, ताराः सुवर्णमण्डलानि, हस्तावापः हस्तत्राणम् ॥ ५४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ विरो० ] अरिष्टं नृषं च (?) । वैयाघ्रं व्याघ्रचर्मनिर्मितं च ॥ ४१ ॥ एतत् एतच्चिह्नम् ॥ ४२ ॥ केतनं ध्वजः ॥ ४९ ॥ नागकक्षा गजबन्धनरज्जुः ॥ ५२ ॥ नीलानुसारेण नीलवर्णयुतेन पञ्चतारेण पञ्चपताकेन ॥ ५४ ॥

[ विष० ] अत्रैव चावरोहयम् अत्र द्रोणसमीपे रथादवतीर्य नमस्करोमीत्यर्थः ॥ ४५ ॥ सेनानामग्र्येण प्रधानेन तृतीयेन भागेन व्यावहार्येण युद्धव्यवहारयोग्येन ॥ ४८ ॥ हस्तावापी शरमुष्टिमान् ॥ ५४ ॥

[नील०] सूर्यो वा सूर्य इव ॥ ५६ ॥

इति श्रीनैल० भारतभावदीपे वि. प. पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

[अर्जु०] घनाग्रे सूर्यो वा मेघस्योपरि सूर्य इव वाशब्द उपमायाम् ॥ ५६ ॥ अवरुद्धो नियमितः ॥ ५८ ॥ पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् । अयमाशयः एषः भीष्मः सर्वथा दुर्जयः एतेन सह युध्यमानस्य मयाऽन्येन युद्धेन विघ्नः स्यात् तस्माच्छेषेऽनेन सह योद्धव्यमिति ॥ ५९ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ चतु० ] सूर्यो वा सूर्य इव ॥ ५६ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ विरो० ] प्रवृद्धः; अभिवृद्धः; अवरुद्धः नियमितः (दे) ॥ ५८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ विष० ] हेमविकृतं हैमम् ॥५७॥ पश्चात् सर्वसैन्यजयादनन्तरम् ॥ ५९ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

[ नील० ] तानीति । घर्मान्ते प्रावृट्काले ॥ १ ॥ समारुह्य विमानमिति शेषः । सुदर्शनं शत्रुसमागमम् उपायात् । 'सुदर्शनो हरेश्चक्रे द्वीपे शत्रुसमागमे' इति मेदिनी । सुदर्शनं विमानमित्यन्ये ॥ ३ ॥ तत् मण्डलं स भूमिभागः ग्रहाणां मण्डलमिव वृत्तं शुशुभे ॥ ४ ॥

[ अर्जु० ] पश्चादनन्तरं सुदर्शनं नामधेयम् ॥ २ ॥

[ सर्व० ] सुदर्शनं यानम् ॥ ३ ॥

[ विरो० ] अभ्याशे २ आकाशे च । अवकाशे च ॥२॥ सुदर्शनं विमानम् ॥ ३ ॥

[ विष० ] सुदर्शनं नाम विमानम् ॥ ३ ॥

---

५५ ण. तस्यैतत्पाण्डुरं । ५६ व. बलाहकेषु सूर्यो वा । ५७ व. ज. शिरस्त्राणस्त्रासयन्निव मे मनः; घ. कम्पयन्निव मे मनः । ५८ व. राजश्रियापविद्धश्च; घ. राजश्रियानबद्धस्तु ॥ इति पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

१ व. °मुग्रधन्वनाम् । २ च. आकाशे वा° । घ. व. प्रहारिभिः । व. °शचोदिताः॰ च. ज. ङ. महामात्रैरित्याद्यर्धचतुर्थं नास्ति । ३ व. राजन्विश्वेशः समरुद्गणैः । ४ घ. न. ग्रहैरिव नभस्तलम् ।

अस्त्राणां च बलं तेषां मानुषेषु प्रयुञ्जताम् ।
तत्र भीमं महद्युद्धं कृपार्जुनसमागमे ॥
द्रष्टुमभ्यागता देवाः स्वविमानैः पृथक् पृथक् ॥ ५ ॥
शतं शतसहस्राणां यत्र स्थूणा हिरण्मयी ।
मणिरत्नमयी चान्या प्रासादं तदधारयत् ॥ ६ ॥
ततः कामगमं दिव्यं सर्वरत्नविभूषितम् ।
विमानं देवराजस्य शुशुभे खेचरं तदा ॥ ७ ॥
तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः ।
गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ॥ ८ ॥
तथा राजा वसुमना बलाक्षः सुप्रतर्दनः ।
अष्टकश्च शिबिश्चैव ययातिर्नहुषो गयः ॥ ९ ॥
मनुः पूरू रघुर्भानुः कृशाश्वः सगरो नलः ।
विमाने देवराजस्य समदृश्यन्त सुप्रभाः ॥ १० ॥
अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः ।
तथा धातुर्विधातुश्च कुबेरस्य यमस्य च ॥ ११ ॥
अलम्बुषोग्रसेनानां गन्धर्वस्य च तुम्बुरोः ।
यथामानं यथोद्देशं विमानानि चकाशिरे ॥ १२ ॥
सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः ।
अर्जुनस्य कुरूणां च द्रष्टुं युद्धमुपागताः ॥ १३ ॥
दिव्यानां सर्वमाल्यानां गन्धः पुण्योऽथ सर्वशः ।
प्रससार वसन्ताग्रे वनानामिव भारत ॥ १४ ॥
तत्र रत्नानि देवानां समदृश्यन्त तिष्ठताम् ।
आतपत्राणि वासांसि स्रजश्च व्यजनानि च ॥ १५ ॥
उपाशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः ।
दिव्यगन्धानुपादाय वायुर्योधानसेवत ॥ १६ ॥
प्रभासितमिवाकाशं चित्ररूपमलङ्कृतम् ।
संपतद्भिः स्थितैश्चापि नानारत्नावभासितैः ॥ १७ ॥
विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः ।
वज्रभृच्छुशुभे तत्र विमानस्थैः सुरैर्वृतः ॥ १८ ॥
बिभ्रन्मालां महातेजाः पद्मोत्पलसमायुताम् ।
विप्रेक्षमाणो बहुभिर्नातृप्यत्सुमहाहवम् ॥ १९ ॥

इति श्रीमहाभारते विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ नील० ] शतसहस्राणां शतं लक्षशतं कोटिसंख्याः स्थूणाः एका हिरण्मयी स्थूणा च यदधारयत् ॥ ६ ॥ त्रयस्त्रिंशत् "अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्चेति" ब्राह्मणम् ॥ ८ ॥ अलम्बुषोग्रसेनानां तत्प्रभृतीनां गन्धर्वाणाम् ॥ १२ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[अर्जु०] प्रयुञ्जतां प्रयुज्यमानानाम् ॥ ५ ॥ शतसहस्राणां कोटिर्यस्मिन् विमाने । स्थूणाः स्तम्भाः हिरण्मयीः हिरण्मय्यः उपधारयन् अधारयन् ॥ ६ ॥ तत्र देवास्त्रयस्त्रिंशत् इति तत्र विमाने त्रयस्त्रिंशत् द्वादशादित्याः एकादश रुद्राः अष्टौ वसवः द्वावश्विनावित्यर्थः ॥ ८ ॥ देवनिकाया देवसमूहाः ॥ १३ ॥ पुष्पिणां विकसमानानाम् ॥ १४ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ चतु० ] सुदर्शनं यानं बलं(?) च शुशुभे इति पूर्वेणान्वयः शुभं कल्याणरूपम्; सुभम् इति पाठे दीप्तिमत् ॥ ७ ॥ त्रयस्त्रिंशदिति अष्टौ वसव एकादश रुद्रा द्वादशादित्या अश्विनौ चेति ॥ ८ ॥ अलम्बुषोग्रसेनानां गन्धर्वाणाम् ॥ १२ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ सर्व० ] त्रयस्त्रिंशत् अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेति ॥ ८ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[विरो०] बलं द्रष्टुम् ॥ ५ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[विष०] सहस्रं स्वर्णमयी । सहस्रं स्फटिकमयी । सहस्रं रत्नमयी ॥ ६ ॥ द्वादशाऽऽदित्या एकादश रुद्राः अष्टौ वसवः प्रजापतिश्चेन्द्रश्च । अथ वा द्वावश्विनौ ॥ ८ ॥ बलाकः करन्धमनामा 'क्ष्मातयोः करयोर्जज्ञे यतस्तस्याऽरिहारिदम् (?) बलं करन्धमस्तस्मात्स बलाको बभूव ह' इति पुराणवचनात् । बलाक्षः सुप्रतर्दनः पाठः । प्रतर्दनो वसुमनाः, अष्टकः शिबिश्चत्वारो ययातिदौहित्रा माधवी-

---

५ व. तच्च घोरं महद्युद्धं भीष्मार्जुनसमागमे । ६ घ. कोटिः शतसहस्राणां । ज. व. तत्र स्थूणा । ज. प्रासादानुपधारयत् । व. मणिरत्नमयीश्चान्याः प्रासादं तमधारयन् । ७ व. तत्तु का°; ज. यत्तु का° । च.ज. ङ. शुभम् ८ व. सहदानवाः । व. सहर्षिभिः; ज. सहर्षयः । ९ व. बलाक्षः संप्रतर्दनः; हर्यश्वः सुप्रदर्शनः । १० घ. मनुः क्षपो; व. मनुः क्षुपा । घ. व. सगरः शलः; व. शठलः क्षिपः । ११ घ. अग्नेः सूर्यस्य । १२ घ. व. यथाभागं य° । १४ व. ज. तत्र माल्यानां । ज. वसन्तादौ । घ. व. °मिव पुष्पिणाम् १५ घ. तत्र रक्तानि; व. रक्तरक्तानि । व. दिव्यानि स्रजश्च वसनानि च । १७ ण. चित्ररूपमिवाकृतम् । ण. नानावर्णाभिभासितैः । १९ ज. निरीक्ष्यमाणो । इति षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ५७

कृपार्जुनयोः संग्रामः कृपापयानं च ॥ १ ॥

**वैशम्पायन उवाच—**

दृष्ट्वा व्यूढान्यनीकानि कुरूणां कुरुनन्दन ।
तत्र वैराटिमामन्त्र्य पार्थो वचनमब्रवीत् ॥ १ ॥
जाम्बूनदमयी वेदी ध्वजे यस्य प्रदृश्यते ।
तस्य दक्षिणतो याहि कृपः शारद्वतो यतः ॥ २ ॥

**वैशम्पायन उवाच—**

धनञ्जयवचः श्रुत्वा वैराटिस्त्वरितस्ततः ।
हयान् रजतसंकाशान् हेमभाण्डानचोदयत् ॥ ३ ॥
आनुपूर्व्यात्तु तत्सर्वमास्थाय जवमुत्तमम् ।
प्राहिणोच्चन्द्रसंकाशान् कुपितानिव तान्हयान् ॥४॥
स गत्वा कुरुसेनायाः समीपं हयकोविदः ।
पुनरावर्तयामास तान्हयान्वातरंहसः ॥ ५ ॥
प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च ।
कुरून्संमोहयामास मत्स्यो यानेन तत्त्ववित् ॥ ६ ॥
कृपस्य रथमास्थाय वैराटिरकुतोभयः ।
प्रदक्षिणमुपावृत्य तस्थौ तस्याग्रतो बली ॥ ७ ॥
ततोऽर्जुनः शङ्खवरं देवदत्तं महारवम् ।
प्रदध्मौ बलमास्थाय नाम विश्राव्य चात्मनः ॥८॥
तस्य शब्दो महानासीद्धम्यमानस्य जिष्णुना ।
तथावीर्यवता संख्ये पर्वतस्येव दीर्यतः ॥ ९ ॥
पूजयाञ्चक्रिरे शङ्खं कुरवः सहसैनिकाः ।
अर्जुनेन तथा ध्मातः शतधा यन्न दीर्यते ॥ १० ॥
दिवमावृत्य शब्दस्तु निवृत्तः शुश्रुवे पुनः ।
सृष्टो मघवता वज्रः प्रपतन्निव पर्वते ॥ ११ ॥
एतस्मिन्नन्तरे वीरो बलवीर्यसमन्वितः ।
अमृष्यमाणस्तं शब्दं कृपः शारद्वतस्तदा ॥ १२ ॥
अर्जुनं प्रति संरब्धो युद्धार्थी स महारथः ।
महोदधिजमादाय दध्मौ वेगेन वीर्यवान् ॥ १३ ॥
स तु शब्देन लोकांस्त्रीनावृत्य रथिनां वरः ।
धनुरादाय सुमहज्ज्याशब्दमकरोत्तदा ॥ १४ ॥
तौ रथौ सूर्यसंकाशौ योत्स्यमानौ महाबलौ ।
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ १५ ॥
ततः शारद्वतस्तूर्णं पार्थं दशभिराशुगैः ।
विव्याध परवीरघ्नं निशितैर्मर्मभेदिभिः ॥ १६ ॥
पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम् ।
विकृष्य चिक्षेप बहून्नाराचान्मर्मभेदिनः ॥ १७ ॥
तानप्राप्तान् शितैर्बाणैर्नाराचान् रक्तभोजनान् ।
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ १८ ॥

---

कन्यातनयाः ॥ ९ ॥ 'चतुर्णां लोकपालानां गृहीत्वा तेज उत्तमम् । अक्षिपच्च भुवि ब्रह्मा तदा जातः क्षुपो नृपः ।' ॥ १० ॥ अलम्बुस इति गन्धर्वनाम ॥ १२ ॥ विमानं साप्तभौमिकम् । गृहमिति शेषः । विशिष्टो मानो यत्र तद्विमानम् । यद्वा विः पक्षी गरुडः तद्वद्गगनगमनमानं यत्र तद्विमानं तैः ॥ १८ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. षट्पञ्चाशोऽध्यायः ॥५६॥

[ नील० ] दृष्ट्वेति ॥ १ ॥ हेमभाण्डान् स्वर्णालङ्कारान् ॥ ३ ॥ मत्स्यः उत्तरः ॥ ६ ॥ वज्रः अशनिः ॥ ११ ॥ महोदधिजं शङ्खम् ॥ १३ ॥ रथौ रथिनौ ॥ १५ ॥

[ अर्जु० ] हेमभाण्डान् हेमालंकारान् ॥ ३ ॥ मात्स्यो वैराटिः ॥ ६ ॥ महोदधिजं शङ्खम् ॥ १३ ॥

[चतु०] हेमभाण्डान्सुवर्णालङ्कारान् ॥ ३ ॥ मात्स्यः उत्तरः ॥ ६ ॥ देवदत्तं इन्द्रेण दत्तम् ॥ ८ ॥ वीर्यवतः अनिर्वाच्यशक्तिमतः ॥ ९ ॥ संरब्धः क्रुद्धः महोदधिजं शङ्खम् ॥ १३ ॥ नाराचान् दीर्घफलककाण्डान् ॥ १७ ॥ अप्राप्तानन्तरा स्थितान् ॥ १८ ॥

[ सर्व० ] भाण्डम् आभरणम् ॥ ३ ॥ मत्स्यः उत्तरः ॥ ६ ॥ महोदधिजं शङ्खम् ॥ १३ ॥

[ विरो० ] तत्सर्वं धनञ्जयवचः आनुपूर्व्या श्रुत्वा ॥ ४ ॥ शङ्खरवस्य दुःसहत्वबोधाय महोदधिजमिति ॥ १३ ॥

[ विष० ] हेमभाण्डान् हेमालंकारान् । 'भाण्डं भूषणमात्रे स्यात् भाण्डं मूलवणिग्धने । नदीपात्रे तुरङ्गाणां भूषणे भाजनेऽपि च ॥' पात्रं कूलद्वयान्तरम् ॥ ३ ॥ शारदाविव जीमूतौ इति । शङ्खशब्दो गर्जितोपमितः ।

---

१ व. द्वितीयार्धस्थाने—अत्र वैराटिमाभाष्य पाण्डवोऽथाब्रवीदिदम् । ३ व. °स्त्वरितस्तदा । ४ व. आनुपूर्व्या नुदन् शूर आ° । ९ व. महानासीद्धयायमानस्य । व. महावीर्यवता; च. ज. ङ. यथावीर्यवतः । १० व. कुरवस्ते च सैनिकाः । १२ घ. व. प्रथमार्धस्थाने—एतस्मिन्नन्तरे विप्रो बलदर्पसमन्वितः । १३ घ. संयोद्धुं यु° । एतच्छ्लोकमध्ये व. पुस्तके 'ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः' इत्यधिकम् । १८ घ. तान्प्राप्तान्निशितैर्बा° ।

ततः पार्थस्तु संक्रुद्धश्चित्रान्मार्गान्प्रदर्शयन् ।
दिशः संछादयन्बाणैः प्रदिशश्च महारथः ॥
एकच्छायमिवाकाशमकरोत्सर्वतः प्रभुः ॥ १९ ॥
प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ।
स शरैरर्दितः क्रुद्धः शितैरग्निशिखोपमैः ॥ २० ॥
तूर्णं दशसहस्रेण पार्थमप्रतिमौजसम् ।
अर्दयित्वा महात्मानं ननर्द समरे कृपः ॥ २१ ॥
ततः कनकपर्वाग्रैर्वीरः सन्नतपर्वभिः ।
त्वरन्गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः ॥ २२ ॥
चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ।
ते हया निशितैर्बाणैर्ज्वलद्भिरिव पन्नगैः ॥
उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् ॥ २३ ॥
च्युतं तु गौतमं स्थानात्समीक्ष्य कुरुनन्दनः ।
नाविध्यत्परवीरघ्नो रक्षमाणोऽस्य गौरवम् ॥ २४ ॥
स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ।
विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ॥ २५ ॥
ततः पार्थो धनुस्तस्य भल्लेन निशितेन ह ।
चिच्छेदैकेन भूयश्च हस्तावापमथाहरत् ॥ २६ ॥
अथास्य कवचं बाणैर्निशितैर्मर्मभेदिभिः ।
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् ॥ २७ ॥
तस्य निर्मुच्यमानस्य कवचात्काय आबभौ ।
समये मुच्यमानस्य सर्पस्येव तनुर्यथा ॥ २८ ॥
छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम् ।
चकार गौतमः सज्यं तदद्भुतमिवाभवत् ॥ २९ ॥
स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ।
एवमन्यानि चापानि बहूनि कृतहस्तवत् ॥
शारद्वतस्य चिच्छेद पाण्डवः परवीरहा ॥ ३० ॥
स छिन्नधनुरादाय रथशक्तिं प्रतापवान् ।
प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव ॥ ३१ ॥
तामर्जुनस्तदाऽऽयान्तीं शक्तिं हेमविभूषिताम् ।
वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः ॥ ३२ ॥
साऽपतद्दशधा छिन्ना भूमौ पार्थेन धीमता ॥ ३३ ॥
युगपच्चैव भल्लैस्तु ततः सज्यधनुः कृपः ।
तमाशु निशितैः पार्थं बिभेद दशभिः शरैः ॥ ३४ ॥
ततः पार्थो महातेजा विशिखानग्नितेजसः ।
चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् ॥ ३५ ॥
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन च शिरः कायाच्छरेण रथसारथेः ॥ ३६ ॥
त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षं महारथः ।
द्वादशेन तु भल्लेन चकर्तास्य ध्वजं तदा ॥ ३७ ॥
ततो वज्रनिकाशेन फाल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः कृपं वक्षस्यविध्यत ॥ ३८ ॥
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् ॥ ३९ ॥
सा च मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।
अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् ॥ ४० ॥

---

शुक्लोपकरणत्वात् शुभ्रौ । यथा गर्जति शरदि न वर्षति । अवस्थिताविति । युद्धात्पूर्वमुपमानमेतत् ॥ १५ ॥

[ नील० ] कनकपर्वाग्रैः कनकलिप्तफलकैः ॥ २२ ॥ स्थानं स्थैर्यं संज्ञामिति यावत् ॥ २५ ॥ नुन्ना दूरीकृता प्रतिमार्गं विपरीतमार्गम् अगमत् परावृत्तेत्यर्थः ॥ ४० ॥

[ अर्जु० ] युगमध्ये काष्ठमध्ये ॥ ३४ ॥ सुपरिष्कृता सुमण्डिता कृपेण मुक्ता गदाऽर्जुनेन शरैर्नुन्ना अथानन्तरं प्रतिमार्गमगमत् प्रत्यावृत्त्येत्यन्वयः ॥ ४० ॥

[ चतु० ] गौरवं गुरुत्वम् ॥ २४ ॥ हस्तावापं हस्तस्थितकाण्डमुष्टिम् ॥ २६ ॥ अवपीडयद्दत्तभारः ॥ २७ ॥ कवचात्कवचेन ॥ २८ ॥ रथशक्तिः रथवाह्या शक्तिः ॥ ३१ ॥ प्रतिमार्गं यथागतम् ॥ ४० ॥

[ सर्व० ] कनकपर्वाग्रैः कनकलिप्तफलकैः ॥ २२ ॥ कृतहस्तवत् सुशिक्षितहस्तयुक्तं यथा स्यात्तथा ॥ ३० ॥ रथावयवभूतं त्रिशूलाकारकाष्ठं त्रिवेणुम् ॥ ३७ ॥ नुन्ना दूरीकृता प्रतिमार्गं विपरीतमार्गेण ॥ ४० ॥

[ विरो० ] युगमध्ये हस्तद्वयमध्ये ॥ ३४ ॥

[ विष० ] निर्मोकस्य कञ्चुकस्य ॥ २८ ॥ युगमध्ये;

---

१९ च. ज. घ. व. शीघ्रास्त्रत्वं विदर्शयन् । ज. द्वितीयार्धस्थाने–दिशः संछादयामास बाणौघैः प्रदिशस्तथा । ज. °शमकरोद्रथतस्त्वरन्; घ. व. °शं कुर्वन्रथगतः प्रभुः । २० व. सशरैराचितः । २१ व. ननाद समरे । २२ घ. व. कनकपुङ्खाग्रैर्वीरः । एतच्छ्लोकमध्ये ज. पुस्तके–'धनुरादाय विव्याध पार्थो दशभिराशुगैः' इत्यधिकम् । २३ घ. व. निशितैर्विद्धा । २४ व. कुरुपुङ्गवः । २६ व. °दैकेन भल्लेन । ३० घ. °द निशितैः शरैः । ३३ व. भिन्ना भूमौ । ३४ घ. कायमध्ये तु भल्लैस्तु; युगमध्ये तु भल्लैस्तु । व. ततस्तु सशरं धनुः; ततः समधमत्कृपः । व. पार्थो बिभेद । ३७ घ. व. द्वाभ्यामक्षौ । व. ध्वजं तथा । ३८ घ. °न पाण्डवः परवीरहा । घ. व. त्रयोदशेनेन्द्रसमं कृपं वक्षस्यताडयत् ; ग. त्रयोदशेनेन्द्रदमः कृपं वक्षस्यताडयत् इति पाठौ द्वितीयार्धस्थाने । ३९ ण. तूर्णीं चिक्षेप । ४० घ. तदा गुर्वी ।

तं तु योधाः परीप्सन्तः शारद्वतममर्षणम् ।
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् ॥ ४१ ॥
ततो विराटस्य सुतोऽसव्यमावृत्य वाजिनः ।
यमकं मण्डलं कृत्वा तान्योधान्प्रत्यवारयत् ॥ ४२ ॥
ततः कृपमुपादाय विरथं ते नरर्षभाः ।
अपजह्रुर्महावेगाः कुन्तीपुत्राद्धनञ्जयात् ॥ ४३ ॥

इति श्रीमहाभारते विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ५८

अर्जुनस्य द्रोणाचार्येः सह तुमुलं युद्धं द्रोणापयानं च ॥ १ ॥

**वैशम्पायन उवाच—**

कृपेऽपनीते द्रोणस्तु प्रगृह्य सशरं धनुः ।
अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ॥ १ ॥
स तु रुक्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात् ।
अर्जुनो जयतां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ॥ २ ॥

**अर्जुन उवाच—**

यत्रैषा काञ्चनी वेदी ध्वजे यस्य प्रकाशते ।
उच्छ्रिता प्रवरे दण्डे पताकाभिरलंकृता ॥
तत्र मां वह भद्रं ते द्रोणानीकाय सारथे ॥ ३ ॥
अश्वाः शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ।
स्निग्धविद्रुमसंकाशास्ताम्रास्याः प्रियदर्शनाः ॥
युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ ४ ॥
दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।
सर्वलोकेषु विक्रान्तो भारद्वाजः प्रतापवान् ॥ ५ ॥
बुद्ध्या तुल्यो ह्युशनसा बृहस्पतिसमो नये ।
वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ॥ ६ ॥
ससंहाराणि सर्वाणि दिव्यान्यस्त्राणि मारिष ।
धनुर्वेदश्च कात्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः ॥ ७ ॥
क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।
एते चान्ये च बहवो यस्मिन्नित्यं द्विजे गुणाः ॥ ८ ॥
तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।
तस्मात्त्वं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ॥ ९ ॥

**वैशम्पायन उवाच—**

अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषणान् ।
चोदयामास तानश्वान् भारद्वाजरथं प्रति ॥ १० ॥
तमापतन्तं वेगेन पाण्डवं रथिनां वरम् ।
द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ ११ ॥
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादिनम् ।
प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः ॥ १२ ॥

---

कायमध्ये निमेषमध्ये ॥३४॥ युगं धुरं शरीरम् (?) ॥३६॥ अक्षाविति पक्षद्वयम् ॥ ३७ ॥

[नील०] असव्यम् आवृत्य अप्रदक्षिणं कृत्वेत्यर्थः । यमकं शत्रूणां निरोधकं मण्डलं कृत्वा यस्मिन्कृते शत्रुरपमानितो लज्जितस्तिष्ठति ॥४२॥ अपजह्रुर्नीतवन्तः ॥४३॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि. प. सप्तपञ्चाशोऽध्यायः ॥५७॥

[अर्जु०] परीप्सन्तो रक्षितुमिच्छन्तः ॥ ४१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[चतु०] परीप्सन्तो रक्षितुमिच्छन्तः ॥ ४१॥ यमकं विसृतानां मेलकम् ॥ ४२ ॥ अपाजह्रुः पलायितवन्तः ॥ ४३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[सर्व०] सव्यम् अप्रदक्षिणम् । यमकं शत्रूणां निरोधकम् ॥ ४२ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[विरो०] परीप्सन्तः रिरक्षिषन्तः ॥ ४१ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[विष०] परीप्सन्तः रक्षितुमिछन्तः ॥ ४१ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[नील०] कृप इति ॥ १ ॥
[चतु०] हे उत्तर वह अश्वान्प्रेरय ॥ ३ ॥
[सर्व०] मारिष आर्य ॥ ७ ॥

---

४१ व. ततो योधाः । ज. शरव्रातैर॰ । ४२ व. सर्वानावृत्य । ४३ ज. अपाजह्रुर्महावेगाः । इति सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

२ व. ज. रथिनां श्रेष्ठः । ३ ग. घ. च. वेदी प्रदीप्ताग्निशिखोपमा; क. दृश्यतेऽग्निशिखोपमा । ग. घ. ज. ॰काय मारिष व. मानद । ४ व. ॰स्याश्चारुवाहनाः । ५ व. ज. ॰षु विख्यातः; ग. घ. विज्ञातः । ६ ग. ॰र्यं तथोत्तमम् । ७ व. ॰स्त्राणि यानि च । ९ व. तं मां संप्रापयाऽऽचार्यं ।

अथ शोणान्सदश्वांस्तान् हंसवर्णैर्मनोजवैः ।
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त रणे नराः ॥ १३ ॥
तौ रथौ वीरसंपन्नौ दृष्ट्वा सङ्ग्राममूर्धनि ।
आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ १४ ॥
समाश्लिष्टौ तदाऽन्योन्यं द्रोणपार्थौ महाबलौ ।
दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् ॥ १५ ॥
हर्षयुक्तस्ततः पार्थः प्रहसन्निव वीर्यवान् ।
रथं रथेन द्रोणस्य समासाद्य महारथः ॥ १६ ॥
अभिवाद्य महाबाहुः सामपूर्वमिदं वचः ।
उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा ॥ १७ ॥
उषिताः स्मो वने वासं प्रतिकर्म चिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ १८ ॥
अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ ।
इति मे वर्तते बुद्धिस्तद्भवान्कर्तुमर्हति ॥ १९ ॥
ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिम् ।
अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत् ॥ २० ॥
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं विदर्शयन् ॥ २१ ॥
हयांश्च रजतप्रख्यान्कङ्कपत्रैः शिलाशितैः ।
अवाकिरदमेयात्मा पार्थं संकोपयन्निव ॥ २२ ॥
एवं प्रवृत्ते युद्धे भारद्वाजकिरीटिनोः ।
समं विमुञ्चतोः संख्ये विशिखान्दीप्ततेजसः ॥ २३ ॥
तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे ।
उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥
क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान् ॥ २४ ॥
व्यस्मयन्त ततो योधा ये तत्रासन्समागताः ।
शरान्विसृजतोस्तूर्णं साधु साध्वित्यपूजयन् ॥ २५ ॥
द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फाल्गुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरुणा यदयुध्यत ॥
इत्यब्रुवञ्जनास्तत्र सङ्ग्रामशिरसि स्थिताः ॥ २६ ॥
वीरौ तावभिसंरब्धौ संनिकृष्टौ महाभुजौ ।
छादयेतां शरव्रातैरन्योन्यमपराजितौ ॥ २७ ॥
विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम् ।
भारद्वाजोऽथ संक्रुद्धः फाल्गुनं प्रत्यविध्यत ॥ २८ ॥
स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोराच्छादयत्प्रभाम् ॥ २९ ॥
पार्थं च सुमहाबाहुर्महावेगैर्महारथः ।
विव्याध निशितैर्बाणैर्मेघो वृष्ट्येव पर्वतम् ॥ ३० ॥
तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः ।
शत्रुघ्नं वेगवान्हृष्टो भारसाधनमुत्तमम् ॥ ३१ ॥

[ विष० ] आहिताग्नीनां त्रेताग्निस्थानं वेदी । सा च काञ्चनी सुवर्णविकृता ॥ ३ ॥ उद्धूत इव कल्पान्ते पवनचालित इव ॥ १२ ॥

[ नील० ] प्रतिद्वन्द्विनोर्द्रोणार्जुनयोर्वाजिनां मिश्रणेनातिसान्निध्याद्विस्मयो जातः ॥ १३ ॥ यदा तु तौ समाश्लिष्टौ परस्परं रथस्थावेवालिङ्गितवन्तौ तदा भारतानां बलं प्राकम्पत् द्रोणोऽर्जुनेन सख्यं गतोऽस्मानेव प्रहरिष्यतीति शङ्कया ॥ १५ ॥ प्रतिकर्म शत्रूणामपकारम् ॥ १८ ॥ कृतहस्तवत् सुशिक्षितहस्तयुक्तं यथा स्यात्तथा चिच्छेद ॥ २० ॥ सममविशेषेण ॥ २३ ॥ विदुषौ विद्वांसौ ॥ २४ ॥ शिलाधौतैर्दृषदि तेजितैः ॥ २९ ॥ भारसाधनं शत्रुमर्दनक्षमम् अच्छेद्यमित्यर्थः ॥ ३१ ॥

[ अर्जु० ] अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ । त्वया पूर्वं प्रहारे कृते अहं तुभ्यं प्रहरिष्यामीत्यर्थः ॥ १९ ॥

[ चतु० ] आचार्यशिष्यौ द्रोणार्जुनौ ॥ १४ ॥ प्रतिकर्म प्रतिकूलं कर्म दुर्योधनस्य ॥ १८ ॥ प्रहृते प्रहारे कृते ॥ १९ ॥ आच्छादयदपवारितवान् ॥ २९ ॥

[सर्व० ] प्राकम्पयत् द्रोणोऽर्जुनेन सख्यं गतोऽस्मानेव प्रहरिष्यतीति भिया ॥ १५ ॥ प्रतिकर्म शत्रूणामपकारः ॥ १८ ॥ भारसाधनं शत्रुमर्दनक्षमम् ॥ ३१ ॥

[विष०] प्रतिकर्म चिकीर्षवः प्रतिक्रियां कर्तुमिच्छन्तः सभायां द्रौपदीकेशाकर्षणवसनापहारादिकृतनिकारस्य प्रतिक्रिया प्रतीकारकरणम् ॥ १८ ॥ अधिकविंशतिं पञ्चविंशतिम् ॥ २० ॥

१४ व. वीर्यसंपन्नौ क. आचार्यशिष्यौ रथिनौ कृतवीर्यौ तरस्विनौ; । १६ व. प्रहसन्निव दुर्गवान् । १७ व. सान्त्वपूर्वमिदं । १९ च. ज. त्वया तु । ज. °ष्याम्यहं तव । २१ ज. °किरन्रणे द्रोणः । २३ व. प्रवार्तते युद्धे । २५ ज. योधाः सर्वे समागताः । २६ रौद्र इत्यर्धस्थाने घ. अर्जुनं वा विना द्रोणात्कोऽन्यो योद्धुमिहार्हति । २७ क. ग. घ. व. महारथौ । ३० क. अर्जुनस्तु तदा द्रोणं । ३१ व. °राधाय फाल्गुनः ।

विससर्ज शरांश्चित्रान्सुवर्णविकृतान्बहून् ।
नाशयन् शरवर्षाणि भारद्वाजस्य वीर्यवान् ॥
तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ॥ ३२ ॥
स रथेन चरन्पार्थः प्रेक्षणीयो धनञ्जयः ।
युगपद्दिक्षु सर्वासु सर्वतोऽस्त्राण्यदर्शयत् ॥ ३३ ॥
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत तदा द्रोणो नीहारेणेव संवृतः ॥ ३४ ॥
तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः ।
जाज्वल्यमानस्य तदा पर्वतस्येव सर्वतः ॥ ३५ ॥
दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम् ।
स विस्फार्य धनुःश्रेष्ठं मेघस्तनितनिःस्वनम् ॥३६॥
अग्निचक्रोपमं घोरं व्यकर्षत्परमायुधम् ।
व्यशातयच्छरांस्तांस्तु द्रोणः समितिशोभनः ॥३७॥
महानभूत्ततः शब्दो वंशानामिव दह्यताम् ॥ ३८ ॥
जाम्बूनदमयैः पुङ्खैश्चित्रचापविनिर्गतैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥३९॥
ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
वियच्चराणां वियति दृश्यन्ते बहवो व्रजाः ॥ ४० ॥
द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात् ।
एको दीर्घ इवादृश्यदाकाशे संहतः शरः ॥ ४१ ॥
एवं तौ स्वर्णविकृतान् विमुञ्चन्तौ महाशरान् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ४२ ॥
शरास्तयोस्तु विबभुः कङ्कबर्हिणवाससः ।
पङ्क्तयः शरदि खस्थानां हंसानां चरतामिव ॥४३॥
युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः ।
द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ॥ ४४ ॥
तौ गजाविव चासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ४५ ॥
तौ व्यवाहरतां युद्धे संरब्धौ रणशोभिनौ ।
उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ॥ ४६ ॥
अथ त्वाचार्यमुख्येन शरान्सृष्टान् शिलाशितान् ।
न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ॥ ४७ ॥
दर्शयन्वीक्षमाणानामस्त्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ४८ ॥
जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम् ।
आचार्यमुख्यः समरे द्रोणः शस्त्रभृतांवरः ॥
अर्जुनेन सहाक्रीडच्छरैः सन्नतपर्वभिः ॥ ४९ ॥
दिव्यान्यस्त्राणि वर्षन्तं तस्मिन्वै तुमुले रणे ।
अस्त्रैरस्त्राणि संवार्य फाल्गुनं समयोधयत् ॥ ५० ॥
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमर्षिणोस्तदाऽन्योन्यं देवदानवयोरिव ॥ ५१ ॥
ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
द्रोणेन मुक्तमात्रं तु ग्रसति स्म पुनः पुनः ॥५२॥
एवं शूरौ महेष्वासौ विसृजन्तौ शितान् शरान् ।
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ॥ ५३ ॥
तत्रार्जुनेन मुक्तानां पततां वै शरीरिषु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ५४ ॥
ततो नागा रथाश्चैव वाजिनश्च विशाम्पते ।
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ॥५५॥

[ नील० ] विषाणाग्रैर्दन्ताग्रैः ॥ ४५ ॥ व्यवाहरतां व्यवहारं धर्मयुद्धं कृतवन्तौ ॥ ४६ ॥ जिघांसताऽप्यर्जुनेन सह वात्सल्यात् स्वयमक्रीडत् न तु क्रूरोऽभूत् ॥ ४९ ॥

[ अर्जु० ] पूर्णायतोत्सृष्टैः पूर्णमायतेन मण्डलीकृतेन धनुषा उत्सृष्टैः प्रेरितैरित्यर्थः ॥४५॥ तिग्मतेजसं तीक्ष्णपराक्रमम् ॥ ४९ ॥

[चतु०] मत्ताविव इति पाठे वृषभाविति शेषः ॥४५॥

[ सर्व० ] विषाणं दन्तः ॥ ४५ ॥ व्यवाहरतां व्यवहारं धर्मयुद्धं कृतवन्तौ ॥ ४६ ॥ किंशुकाः पलाशाः ॥ ५५ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[विष०] उग्रं पराभवितुमशक्यम् । उग्रं रुद्रं वा । ईश्वरतेजःसंक्रमात् ॥ ४८ ॥

[ लक्षा० ] एको दीर्घ इवापाङ्गादित्यत्र पुङ्खानुपुङ्खतया निरन्तरशरागमनात् दीर्घ एकः शर इव अ-

३३ व. पार्थः प्रेक्षणीयो बभूव ह । ज. सर्वशास्त्राणि दर्शयन् । ३४ ज. चक्रे धनंजयः । क. °णेव पर्वतः । ३५ व. पर्वतस्येव दीर्यतः; ज. °स्येव वह्निना । ३६ व. स तु दृष्ट्वा रणे पार्थशरैः स्व° । व. संविस्फार्य । ३८ व. °मिव दीर्यताम् । ३९ व. °चापवराविगैः । ४१ व. °पुङ्खसंसक्ताः । ४२ ज. आकाशमावृतं; व. आकाशं विकृतं । ४४ व. तत्र तयोः संरब्धयोर्महत् । क. अत्यद्भुतमचिन्त्यं च वृत्र° । ४६ ग. ध. ज. उभौ व्यचरतां शूरौ । ४८ क. ग. ध. व. यत्नैन्द्रिमात्मानमुग्रमुग्रपराक्रमम् । ४९ ज. अर्जुनेन समाक्रामच्छरैः; व. अवारय त्तदा वीरः शरैः । ५० ग. ध. व. °स्त्राणि मुञ्चन्तं भारद्वाजं महारणे । क. °र्यं पार्थो द्रोणमवारयत् । ग. ध. फाल्गुनः स° । ५१ व. अमृष्यमाणयोः ( ग. जयैषिणोः ) संख्ये । क. वलिवासवयोरिव । ५२ व. मुक्तं मुक्तं तु । ५४ व. शुश्रुवे स्वनः । ५५ व. व्यराजन्त पुष्पिता ।

बाहुभिश्च सकेयूरैर्विचित्रैश्च महारथैः ।
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ५६ ॥
योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः ।
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे ॥ ५७ ॥
विधुन्वानौ तु तौ तत्र धनुषी भारसाधने ॥
आच्छादयेतामन्योन्यं ततक्षतुरथेषुभिः ॥ ५८ ॥
तयोः समभवद्युद्धं तुमुलं भरतर्षभ ।
द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव ॥ ५९ ॥
अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः ।
व्यदारयेतामन्योन्यं प्राणद्यूते प्रवर्तिते ॥ ६० ॥
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ६१ ॥
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं देवदैत्यानां सर्वेषां च महारथम् ॥ ६२ ॥
अविभ्रमं च शिक्षां च लाघवं दूरपातिताम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ॥ ६३ ॥
अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ॥ ६४ ॥
तस्य बाणमयं वर्षं शलभानामिवायतिम् ।
दृष्ट्वा ते विस्मिताः सर्वे साधु साध्वित्यपूजयन् ॥६५॥
न च बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ।
अनिशं संदधानस्य शरानुत्सृजतस्तथा ॥ ६६ ॥
ददर्श नान्तरं कश्चित्पार्थस्याददतोऽपि च ॥ ६७ ॥
तथा शीघ्रास्त्रयुद्धे तु वर्तमाने सुदारुणे ।
शीघ्रं शीघ्रतरं पार्थः शरानन्यानुदीरयत् ॥ ६८ ॥
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ६९ ॥
कीर्यमाणे तदा द्रोणे शरैर्गाण्डीवधन्वना ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ७० ॥
पाण्डवस्य तु शीघ्रास्त्रं मघवा प्रत्यपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ७१ ॥
ततो वृन्देन महता रथानां रथयूथपः ।
आचार्यपुत्रः सहसा पाण्डवं पर्यवारयत् ॥ ७२ ॥
अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्याकरोद्भृशम् ॥ ७३ ॥
स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्छरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ७४ ॥
आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ७५ ॥
स तु लब्ध्वाऽन्तरं तूर्णमपायाज्जवनैर्हयैः ।
छिन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ॥ ७६ ॥

इति श्रीमहाभारते विराटपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

पाङ्गात् द्रोणकटाक्षमनुसृत्य महाशराः प्रदृश्यन्ते इति योजना ॥ ४१ ॥

[ नील० ] ततक्षतुः क्षीणं चक्रतुः ॥ ५८ ॥ आयतिं संततिम् ॥ ६५ ॥ अन्तरमवकाशम् ॥ ७५ ॥ निकृत्तः प्रहृतः ॥ ७६ ॥

इति श्रीनै० भारतभावदीपे वि. प. अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ अर्जु० ] संतक्षन्तौ तनूकुर्वाणौ ॥ ५८ ॥

इति श्रीमहा० मर्जु० विरा० अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ चतु० ] सुविद्राणमितस्ततः पलायमानम् । द्रा कुत्सायां गताविति धातो रूपम् ॥ ५७ ॥ पूर्णायतेन मण्डलीकृतेन धनुषा उत्सृष्टैः प्रेरितैः ॥ ६० ॥ अन्तरं छिद्रम् ॥ ६७ ॥ शीघ्रास्त्रं शीघ्रास्त्रत्वम् ॥ ७१ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ विष० ] अनिशमनवरतम् ॥ ६६ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ लक्षा० ] पार्थस्य पततोऽपि चेत्यत्र पततः दिशि दिशि निपततः ॥ ६७ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

५६ प्रागधि. च. ज. अशोकानां वनानीव छन्नानि कुसुमैर्नरैः । रेजुः पार्थशरैस्तद्वत्तदा सैन्यानि भारत । व.ज. विचक्रैश्च । ५७ ङ. °सीत्सुविभ्रान्तं । ५८ ज. तौ वीरौ । क. दिधक्षन्तौ वरेषुभिः; ग. घ. सन्तक्षन्तौ रथेषुभिः । ५९ ग. घ. च. ज. °लं लोमहर्षणम्; व. °लं तु नरर्षभ । व. बलवासवयोरिव । ६२ घ. °ष्टिं तरस्विनम् । ग. घ. ज. व. देवमर्त्यानां सर्पाणां च महात्मनाम् । ६३ घ. च शिष्यस्य । ६७ व. पार्थस्य चरतस्तथा । ६८ ग. घ. च. ज. शीघ्राच्छीघ्रतरं ( व. तरः ) । व. °नुदीरयन् । ७२ व. प्रत्यवारयत् । ७६ ण. निवृत्तः । इति अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ५९

अश्वत्थाम्ना सहार्जुनस्य युद्धम् ॥ १ ॥ धनुर्विस्फारयन्तं कर्णं प्रति युद्धायाभिद्रवणं च ॥ २ ॥

**वैशम्पायन उवाच—**

ततो द्रौणिर्महाराज प्रययावर्जुनं रणे ।
तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ॥
शरजालेन महता वर्षमाणमिवाम्बुदम् ॥ १ ॥
तयोर्देवासुरसमः संनिपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव ॥ २ ॥
न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरजालावृते व्योम्निच्छायाभूते समन्ततः ॥ ३ ॥
महांश्चटचटाशब्दो योधयोर्हन्यमानयोः ।
दह्यतामिव वेणूनामासीत्परपुरञ्जय ॥ ४ ॥
हयानस्यार्जुनः सर्वान्कृतवानल्पजीवितान् ।
ते राजन्न प्रजानन्त दिशं कांचन मोहिताः ॥ ५ ॥
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह ॥
तदस्यापूजयन् देवाः कर्म दृष्ट्वाऽतिमानुषम् ॥ ६ ॥
द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महारथाः ।
साधु साध्विति भाषन्तोऽपूजयन्कर्म तस्य तत् ॥७॥
ततो द्रौणिर्धनुःश्रेष्ठमपकृष्य रथर्षभम् ।
पुनरेवाहनत्पार्थं हृदये कङ्कपत्रिभिः ॥ ८ ॥
ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा ।
योजयामास नवया मौर्व्या गाण्डीवमोजसा ॥ ९ ॥
ततोऽर्धचन्द्रमावृत्य तेन पार्थः समागमत् ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ १० ॥
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेवं सुमहल्लोमहर्षणम् ॥ ११ ॥
तौ वीरौ ददृशुः सर्वे कुरवो विस्मयान्विताः ।
युध्यमानौ महावीर्यौ यूथपाविव सङ्गतौ ॥ १२ ॥
तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ ।
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ॥ १३ ॥
अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ १४ ॥
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं तूर्णमभूत्तेनाधिकोऽर्जुनः ॥ १५ ॥
ततः कर्णो महाचापं विकृष्याभ्यधिकं तथा ।
अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ॥ १६ ॥

[ नील० ] तत इति ॥ १ ॥ न प्रजानन्त अडभाव आर्षः । न च ज्ञातवन्तः ॥ ५ ॥ विवरं रन्ध्रम् ॥ ६ ॥ अपकृष्य आकृष्य ॥८॥ अर्धचन्द्रम् अर्धचन्द्राकारं ललाटम् आवृत्य प्रमृज्य स्वेदेन ज्यां प्रमृज्येत्यर्थः । तेन अश्वत्थाम्ना ॥ १० ॥

[ अर्जु० ] शरैः सान्द्रीकृते निरन्तरीकृते शरसंघैः चिते इत्यपि दृश्यते ॥ ३ ॥ वेणूनां वंशानाम् ॥ ४ ॥ विवरं छिद्रम् ॥ ६ ॥ धनूंष्यष्टौ धन्वन्तराणि ॥ ८ ॥ नवया मौर्व्या अभिनवेन गुणेन ॥ ९ ॥ ततोऽर्धचन्द्रमारोपितज्यं धनुः आवृत्य रक्षित्वा ॥ १० ॥ अभ्यस्यतः सर्वतोभावेन क्षिपतः ॥ १५ ॥

इति श्रीमहा० मर्जु० विरा० एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ चतु० ] शरैः सान्द्रीकृते निरन्तरीकृते । पाठान्तरे छायाभूते कृते इत्यन्वयः ॥ ३ ॥ नवया मौर्व्या अभिनवेन गुणेन ॥ ९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ सर्व० ] धनुर्हस्तचतुष्टयम् ॥ ८ ॥ अर्धचन्द्राकारं ललाटम् आवृत्य प्रमृज्य स्वेदेन ज्यां प्रमृज्य ॥ १० ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ विरो० ] । धनूंष्यष्टौ धनुर्हस्तचतुष्टयम् । अपक्रम्य अपसृत्य ॥ ८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ विष० ] अष्टौ धनूंषि द्वात्रिंशद्धस्ता उपक्रम्य समीपे गत्वा । अपक्रम्येति पाठे पश्चाद्यात्वा अर्जुनस्येत्यर्थः ॥ ८ ॥

१ व. अथ द्रौणि° । ज. महावीर्यं । ग. घ. व. °र्जुनं प्रति । क. °मिवाचलः । क. वर्षमाण इवाम्बुदः । ४ ज. °योर्युध्यमानयोः; व. °योर्भिद्यमानयोः । व. ज. ण. परपुरंजयः; क. परमदारुणः । ५ क. °र्जुनः संख्ये । ज. न्नाभिजानन्ति; व. स राजन्न प्रजानाति°—°हितः । ६ ज. क्षुरेण सः । ज. तदस्य कर्म आलोक्यापूजयन्देवतागणाः । ८ व. द्रौणिर्धनूंष्यष्टावपक्रम्य; °वुपक्रम्य । ९ क. च. °मास तदा । ११ व. तयोरेवं । १२ क. सर्वे ददृशुर्वै° । १३ क. °वीरा परस्परजयैषिणौ । क. व. °रिव पावकैः । १६ ग. घ. व. °धिकं रुषा । व. शब्दो गोघातेन महानभूत् ।

ततश्चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः ।
ददर्श तत्र राधेयं तस्य कोपो व्यवर्धत ॥ १७ ॥
स रोषवशमापन्नः कर्णमेव जिघांसया ।
तमैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गवः ॥ १८ ॥
तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान् ।
त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः ॥ १९ ॥
उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनञ्जयः ।
अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ २० ॥
तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः ।
कामयन् द्वैरथं तेन युद्धे वचनमब्रवीत् ॥ २१ ॥

इति श्रीमहाभारते विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ६०

आहोपुरुषिकापूर्वकः कर्णार्जुनयोः संप्रहारः कर्णाभिभवश्च ॥ १ ॥

**अर्जुन उवाच—**

कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम् ।
न मे युधि समोऽस्तीति तदिदं समुपस्थितम् ॥१॥
सोऽद्य कर्ण मया सार्धं व्यवहृत्य महामृधे ।
ज्ञास्यस्यबलमात्मानं न चान्यानवमन्यसे ॥ २ ॥
अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् ॥ ३ ॥
यत्त्वया कथितं पूर्वं मामनासाद्य किंचन ।
तदद्य कुरु राधेय कुरुमध्ये मया सह ॥ ४ ॥
यत्सभायां स पाञ्चालीं क्लिश्यमानां दुरात्मभिः ।
दृष्टवानसि तस्याद्य फलमाप्नुहि केवलम् ॥ ५ ॥
धर्मपाशनिबद्धेन यन्मया मर्षितं पुरा ।
तस्य राधेय कोपस्य विजयं पश्य मे मृधे ॥ ६ ॥
वने द्वादशवर्षाणि यानि सोढानि दुर्मते ।
तस्याद्य प्रतिकोपस्य फलं प्राप्नुहि संप्रति ॥ ७ ॥
एहि कर्ण मया सार्धं प्रतियुध्यस्व सङ्गरे ।
प्रेक्षकाः कुरवः सर्वे भवन्तु तव सैनिकाः ॥ ८ ॥

**कर्ण उवाच—**

ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर ।
अतिशेते हि ते वाक्यं कर्मैतत्प्रथितं भुवि ॥ ९ ॥
यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इतो गृह्णीम हे पार्थ तव दृष्ट्वा पराक्रमम् ॥ १० ॥

---

अर्धचन्द्राकारं धनुरावृत्य मण्डलीकृत्य तेन अश्वत्थाम्ना सह ॥ १० ॥ अवाक्षिपत् आक्षिप्य मुमोच । गोघातेन वज्रघातेन ॥ १६ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ नील० ]चक्षुर्दधे धृतवान् ॥ १७ ॥ कामयन् कामयमानः ॥ २१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे वि.प. एकोनषष्टितमोऽध्यायः ॥५९॥

[ नील० ] कर्णेति । ते त्वया ॥ १ ॥ ते तव वाक्यं कर्तृ, कर्म अतिशेते अल्पं कर्म वाक्यं तु बहुलमित्यर्थः ॥ ९ ॥ इतःपरं तव पराक्रमं गृह्णीमहे अङ्गीकुर्महे ॥ १० ॥

[अर्जु०] अतिशेते हि ते वाक्यं कर्मेति प्रथितं भुवि हे पार्थ ते वाक्यं कर्मातिशेते अतिशायि भवति प्रथितं व्याख्यातमेव 'हि हेताववधारणे' ॥ ९ ॥

[ चतु० ] अतिशेते इति । ते वाक्यं कर्तृ, कर्मातिशेते कर्मातिक्रामति यथा वाक्यं तथा तव क्रिया नास्तीति ख्यातमेव पृथिव्यां नात्र त्वया प्रमाणान्तरं प्रष्टव्यमित्याशयः ॥ ९ ॥ यन्मया मर्षितमिति यदुक्तं तत्प्रत्याह—यत्त्वयेति । पुनस्तव पराक्रमं दृष्ट्वा । न त्विदानीं दर्शितः पराक्रमो मम मत इति भावः । तदाशक्तेनेति वा पाठः ॥ १० ॥

[ सर्व० ] तव वाक्यं कर्तृ, कर्म अतिशेते । अल्पं कर्म वाक्यं तु बहुलमित्यर्थः ॥ ९ ॥

[ विरो० ] कर्म वाचम् अतिशेते न्यूनां करोति २ वाक्यं (दी) ॥ ९ ॥

[ विष० ] भुवि प्रथितं प्रख्यातं वाचमतिशेते अतिक्रामति । यथा 'ब्रुवते हि फलेन साधवो नतु कण्ठेन निजोपयोगिताम्' पराक्रमेण ब्रुवते नतु वाचा ॥ ९ ॥

---

१७ व. चक्षुर्दधत्पार्थो । ज. राधेयं कोपश्चास्याभवत्ततः । १८ व. समैक्षत वि°; ज. स प्रैक्षत वि° । १९ ज. उपानिन्युः । २१ दे. कोपयन्द्वैरथं° । व. द्वैरथेनैनमिदं व°; ज. द्वैरथेनेदमिदं व° । एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

१ व. बहुधा तु विकत्थितम् । २ ज. ज्ञास्यसे बलमात्मीयं; व. °सेऽवरमात्मानं ज. मामवमंस्यसे; व. नवमंस्यसे । ४ व. मामनादृत्य किंचन । क. तत्सत्यं कुरु । ५ व. क्लेश्यमानां । क. क्लिश्यमानां तदा त्वया । व. फलं प्राप्नुहि दुर्मते; दे. मा फलं ब्रूहि केवलम् । ६ व. विमोक्षं पश्य; ज. विपाकं पश्य; क. फलं प्राप्नुहि दुर्मते । ८ व. सह सैनिकाः । ९ व. वाचं कर्मेति प्रथितं । १० व. तदशक्तेन पाण्डव । प्रतिगृह्णामि तत्पार्थ ।

धर्मपाशनिबद्धेन यत्त्वया मर्षितं पुरा ।
तथैव बद्धमात्मानमबद्धमिव मन्यसे ॥ ११ ॥
यदि तावद्वने वासो यथोक्तश्चरितस्त्वया ।
तत्त्वं धर्मार्थवित्क्लिष्टः स मया योद्धुमिच्छसि ॥१२॥
यदि शक्रः स्वयं पार्थ युध्यते तव कारणात् ।
तथाऽपि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥१३॥
अयं कौन्तेय कामस्ते न चिरात्समुपस्थितः ।
योत्स्यसे हि मया सार्धमद्य द्रक्ष्यसि मे बलम् ॥१४॥

अर्जुन उवाच—

इदानीमेव तावत्त्वमपयातो रणान्मम ।
तेन जीवसि राधेय निहतस्त्वनुजस्तव ॥ १५ ॥
भ्रातरं घातयित्वा कस्त्यक्त्वा रणशिरश्च कः ।
त्वदन्यः कः पुमान्सत्सु ब्रूयादेवं व्यवस्थितः ॥१६॥

वैशम्पायन उवाच—

इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः ।
अभ्ययाद्विसृजन्बाणान् कायावरणभेदिनः ॥ १७ ॥
प्रतिजग्राह तं कर्णः प्रीयमाणो महारथः ।
महता शरवर्षेण वर्षमाणमिवाम्बुदम् ॥ १८ ॥
उत्पेतुः शरजालानि घोररूपाणि सर्वशः ।
अविध्यदश्वान्बाह्वोश्च हस्तावापं पृथक् पृथक् ॥१९॥
सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनम् ।
चिच्छेद निशिताग्रेण शरेण नतपर्वणा ॥ २० ॥
उपासङ्गादुपादाय कर्णो बाणानथापरान् ।
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्यत ॥ २१ ॥
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
स शक्तिं प्राहिणोत्तस्मै तां पार्थो व्यधमच्छरैः ॥२२॥
ततोऽनुपेतुर्बहवो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ २३ ॥
ततोऽस्याश्वान् शरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः ।
आकर्णमुक्तैरभ्यघ्नंस्ते हताः प्रापतन् भुवि ॥ २४ ॥
अथापरेण बाणेन ज्वलितेन महौजसा ।
विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्यवान् ॥२५॥
तस्य भित्त्वा तनुत्राणं कायमभ्यगमच्छरः ।
ततः स तमसाऽऽविष्टो न स्म किंचित्प्रजज्ञिवान् २६
स गाढवेदनो हित्वा रणं प्रायादुदङ्मुखः ।
ततोऽर्जुन उदक्रोशदुत्तरश्च महारथः ॥ २७ ॥

इति श्रीमहाभारते विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

---

[नील०] अवलम्बनं सूत्रं चिच्छेद ॥ २० ॥ ततो निषङ्गे महातूणीरे पतिते सति उपासङ्गात्क्षुद्रतूणीरात् स्वदेहबाह्यात् ॥ २१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[अर्जु०] तथैव धर्मपाशेन ॥ ११ ॥ निषङ्गस्य तूणस्य अवलम्बनं बन्धनरज्जुम् ॥ २० ॥ उपासङ्गात् तूणीरात् ॥ २१ ॥ प्रजज्ञिवान् ज्ञातवान् ॥ २६ ॥ गाढवेदनम् अतिशयिता पीडा यस्य सः । उदक्रोशत् सिंहनादं कृतवान् ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां वि० प० षष्टितमोऽध्यायः ॥ ६० ॥

[चतु०] ननूक्तं धर्मपाशनिबद्धेनेति तत्प्रत्याह—धर्मपाशनिबद्धेनेति । अबमन्यसे अस्मानवमन्यसे वयमविद्वांस इति बुद्ध्या सा ते भ्रान्तिरिति भावः ॥ ११ ॥ वने वासो द्वादशवर्षात्मकः । कृत्स्नं त्रयोदशवर्षात्मकं भेत्तुमिच्छसि त्रयोदशवर्षस्यासम्यक्चीर्णत्वादिति भावः ॥१२॥ नच वक्तव्यमिन्द्रतः शिक्षितं, भवद्भिः मिथ्या विजितोऽहं, अनर्थवंशव्यवस्थितो अभिजातः इत्युपहासमूलं त्वां हनिष्येऽवश्यमित्यत आह—यदीति । यदि शक्रः स्वयमिति ॥ १३ ॥ भवतु नाम तथा त्वया सहावश्यं योद्धव्यमित्यत आह—अयमिति ॥ १४ ॥ अयं कौन्तेय इति त्वन्यो ब्रूयान्न त्वमेव ब्रूया एवमिति भावः ॥ १६ ॥ सोऽर्जुनः ।

---

१२ क. क्लिष्टस्त्वमर्थलोभात्तु समयं छेत्तुमिच्छसि; ज. समयं हन्तुमर्हसि; घ. समयं भेत्तुमर्हसि । १३ व. युध्येत तव । १४ क. सार्धमत्र पश्यामि ते बलम् । १५ व. °पयातो रणाजिरात् । क. कस्माज्जीवसि राधेय । १६ व. घातयित्वा च दृष्ट्वा रण° । व. ज. त्वदन्यः पुरुषः सत्सु; घ. त्वदन्यः पुरुषः कश्चिद्वदेदेवं व्यवस्थितः । १७ क. कर्णो वदन्नेव बीभत्सुमपराजितम् । १८ व. ज. अभिजग्राह तान्कर्णः शरानग्निशिखोपमान् । क. तान्पार्थः । घ. कर्णो जृम्भमाणो धनञ्जयम् । क. °वर्षेण पर्जन्य इव वृष्टिमान् । १९ क. उत्पेतुर्मेघजालानि; व. °तुः शरवर्षाणि । २० ण. शरेणानतपर्वणा । २१ व. पाण्डवं तुस्ते । २३ व. ततो निपेतुर्ब° । २४ ग. घ. च. °श्वान्दृढैस्तीक्ष्णैः । ण. °कर्णपूर्णैरभ्य°; व. °र्णमुक्तैरवधीत्ते हयाः । २५ व ज्वलितेन महाभुजा । २७ च. व. ज. °दुत्तरैश्च महाबलम् । अध्यायान्ते व. दृष्ट्वा कर्णं तदा राजन्नपयान्तं रणाजिरात् इदमर्धमधिकम् ॥ इति षष्टितमोऽध्यायः ॥ ६० ॥

---

१४ शादुत्तरमर्जुनवाक्यारम्भेऽधिकम् च. ज.—

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते च सहस्रांशौ न खद्योतो न चन्द्रमाः ।
प्राकृतान्पुरुषाञ्जित्वा वृथा ते कर्ण गर्जितम् ॥ इति ।

## एकषष्टितमोऽध्यायः ६१

घोरतरसंग्रामदर्शनेनावसीदन्तमुत्तरं समाश्वास्यार्जुनेन भीष्मं प्रत्यभियानं दुःशासनादीनां पराभवनं च ॥ १ ॥

**वैशम्पायन उवाच—**

ततो वैकर्तनं जित्वा पार्थो वैराटिमब्रवीत् ।
एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः ॥ १ ॥
यत्र शान्तनवो भीष्मो रथेऽस्माकं पितामहः ।
काङ्क्षमाणो मया युद्धं तिष्ठत्यमरदर्शनः ॥ २ ॥
अथ सैन्यं महद्दृष्ट्वा रथनागहयाकुलम् ।
अब्रवीदुत्तरः पार्थमपविद्धः शरैर्भृशम् ॥ ३ ॥

**उत्तर उवाच—**

नाहं शक्ष्यामि वीरेह नियन्तुं ते हयोत्तमान् ।
विषीदन्ति मम प्राणा मनो विह्वलतीव मे ॥ ४ ॥
अस्त्राणामिह दिव्यानां प्रभावः संप्रयुज्यताम् ।
त्वया च कुरुभिश्चैव द्रवन्तीव दिशो दश ॥ ५ ॥
गन्धेन मूर्छितश्चाहं वसारुधिरमेदसाम् ।
द्वैधीभूतं मनो मेऽद्य तव चैव प्रपश्यतः ॥ ६ ॥
अदृष्टपूर्वः शूराणां मया संख्ये समागमः ।
गदापातेन महता शङ्खानां निःस्वनेन च ॥ ७ ॥
सिंहनादैश्च शूराणां गजानां बृंहितैस्तथा ।
गाण्डीवशब्देन भृशमशनिप्रतिमेन च ।
श्रुतिः स्मृतिश्च मे वीर प्रनष्टा मूढचेतसः ॥ ८ ॥
अलातचक्रप्रतिमं मण्डलं सततं त्वया ।
व्याक्षिप्यमाणं समरे गाण्डीवं च प्रकर्षता ।
दृष्टिः प्रचलिता वीर हृदयं दीर्यतीव मे ॥ ९ ॥
वपुश्चोग्रं तव रणे क्रुद्धस्येव पिनाकिनः ।
व्यायच्छतस्तव भुजं दृष्ट्वा भीर्मे भवत्यपि ॥ १० ॥
नाददानं न संधानं न मुञ्चन्तं शरोत्तमान् ।
त्वामहं संप्रपश्यामि पश्यन्नपि न चेतनः ॥ ११ ॥

---

अमृष्यमाणः असहमानः । निषङ्गस्यावलम्बनं सूत्रम् ॥ २० ॥ उपासङ्गात्तूणात् ॥ २१ ॥ उदक्रोशत् ही हीत्यकरोत् ॥ २७ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[ सर्व० ] अवलम्बनं सूत्रं निषङ्गो महातूणीरः ॥२०॥ उपासङ्गः क्षुद्रतूणीरः ॥ २१ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[विरो० ] वनेऽवास इत्यत्र मध्ये नञर्थकः अकारः प्रश्लिष्टः । तेन न चरित इत्यर्थः । यदि नञर्थे च (?) ॥ १२ ॥ अवलम्बनमालम्बनरज्जुं (च) ॥ २० ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[विष०] समयोत्पादनात्तथैव बद्धोऽसि पुनर्द्वादशवर्षाणि वनवासं चर नष्टचर्यां च ॥ ११ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[ नील० ] तत इति ॥ १ ॥ न संधानं न संदधानं वर्णलोप आर्षः ॥ ११ ॥

[ अर्जु० ] वसारुधिरमेदसां; हृदयमांसं वसा, रुधिरं रक्तम् । मेदस्तु मांसमित्यपि स्निग्धं शरीरमनेन ॥ ६ ॥ महत्संयत्समागमम् संग्रामसमागमम् । गोधाघातेन हस्तावरणं गोधा ॥ ७ ॥ अलातचक्रप्रतिममिति अलातमङ्गारः अस्य भ्रमणे किल चक्राकारो दृश्यते । अलातचक्रप्रतिमं गाण्डीवं यस्य मण्डलमिति संबन्धः ॥ ९ ॥

[ चतु० ] संयति सङ्ग्रामे समागमं प्रपश्यत इत्यन्वयः । पाठान्तरं स्पष्टम् ॥ ७ ॥ मण्डलं मण्डलाकारम् । अलातमङ्गारस्तस्य भ्रामणेन चक्राकारो यश्चक्रव्यपदेशस्तत्तुल्यम् ॥ ९ ॥ संधानं सम्यग्धरणं धनुष्यर्पणं यस्मात्तम् । संदधानं मुञ्चन्तं वा इति वा पाठः । यद्वा संधानं तवेति शेषः ॥ ११ ॥

[ विरो० ] समागमं प्रपश्यतः ॥ ७ ॥ संधानं संदधानम् । प्रापं प्रापं २ ॥ ११ ॥

[ विष० ] अलातचक्रमिव अग्निचक्रमिव ॥ ९ ॥ तव व्यायच्छतः शतभुजमिव दृष्ट्वा मे मम भीर्भवति । शतभुजमिव युध्यतः ॥ १० ॥

---

३ व. प्रतिविद्धः शरैर्दृढम् । ४ व. वीरेमान्नियन्तुं । ५ ज. व. प्रभावात्सं° । ग. घ. च. ज. दे. भ्रमन्तीव । ६ व. ज. °चास्मिन्नपारुधि° । व. त्रासं चैव प्रपद्य मे; ज. त्रासश्चैव । ७ व. महासंख्ये; ज. महासैन्यं समागतम् । ग. योधाह्वानेन मह°; च. ज. गोधाघातेन, ज, घोधाघोषेण; ग. गदाघातेन ।

९ व. मण्डलं च कृतम् । व. व्याकृष्यमाणं—प्रदृश्यते । ग.घ. च प्रपश्यतः । व. ज. विचलिता । १० ज. व्यायच्छतः शतगुणं; व. शतभुजं । दृष्ट्वा भीतोऽस्मि फाल्गुन । ११ व. ज. विचेतनः ।

अवसीदन्ति मे प्राणा भूरियं चलतीव च ।
न च प्रतोदं रश्मींश्च संयन्तुं शक्तिरस्ति मे ॥१२॥

अर्जुन उवाच—

मा भैषीः स्तम्भयात्मानं त्वयाऽपि नरपुङ्गव ।
अत्यद्भुतानि कर्माणि कृतानि रणमूर्धनि ॥ १३ ॥
राजपुत्रोऽसि भद्रं ते कुले मत्स्यस्य विश्रुते ।
जातस्त्वं शत्रुदमने नावसीदितुमर्हसि ॥ १४ ॥
धृतिं कृत्वा सुविपुलां राजपुत्र रथे मम ।
युध्यमानस्य समरे हयान्संयच्छ शत्रुहन् ॥ १५ ॥

वैशम्पायन उवाच—

एवमुक्त्वा महाबाहुर्वैराटिं नरसत्तमः ।
अर्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ॥ १६ ॥
सेनाग्रमाशु भीष्मस्य प्रापयस्वैतदेव माम् ।
आच्छेत्स्याम्यहमेतस्य धनुर्ज्यामपि चाहवे ॥ १७ ॥
अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय ।
शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे ॥ १८ ॥
सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम ।
दक्षिणेनाथ वामेन कतरेण स्विदस्यति ॥ १९ ॥
इति मां सङ्गताः सर्वे तर्कयिष्यन्ति शत्रवः ।
शोणितोदां रथावर्तां नागनक्रां दुरत्ययाम् ।
नदीं प्रस्कन्दयिष्यामि परलोकप्रवाहिनीम् ॥ २० ॥
पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरम् ।
वनं कुरूणां छेत्स्यामि शरैः संनतपर्वभिः ॥२१॥
जयतः कौरवीं सेनामेकस्य मम धन्विनः ॥
शतं मार्गा भविष्यन्ति पावकस्येव कानने ॥ २२ ॥
मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ॥
इष्वस्त्रे शिक्षितं चित्रमहं दर्शयिताऽस्मि ते ॥ २३ ॥
असंभ्रान्तो रथे तिष्ठ समेषु विषमेषु च ॥
दिवमावृत्य तिष्ठन्तं गिरिं भिन्द्यां स्म पत्रिभिः॥२४॥
अहमिन्द्रस्य वचनात्सङ्ग्रामेऽभ्यहनं पुरा ॥
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ॥२५॥
अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्तताम् ॥
प्रगाढे तुमुलं चित्रमिति विद्धि प्रजापतेः ॥ २६ ॥
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ॥
जित्वा षष्टिं सहस्राणि रथिनामुग्रधन्विनाम् ॥२७॥
शीर्यमाणानि कूलानि प्रवृद्धेनेव वारिणा ॥
मया कुरूणां वृन्दानि पात्यमानानि पश्य वै॥२८॥
ध्वजवृक्षं पत्तितृणं रथसिंहगणायुतम् ॥
वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ॥ २९ ॥

---

[ नील० ] निशामय पश्य शतह्रदां विद्युतम् ॥ १८ ॥ शतं मार्गा इति सर्वतो मार्गस्यानिरोध उक्तः सर्वतो वा मम बाणा गमिष्यन्तीत्यर्थः ॥ २२ ॥ आविद्धं भ्राम्यमाणं शिक्षितं शिक्षाम् ॥ २३ ॥ प्रगाढे संकटे चित्रं नानाविधं तुमुलं संकटयुद्धं, सर्वत्र वेद्मीति शेषः ॥ २६ ॥ जित्वा जेतुं शक्तः ॥ २७ ॥ रथसिंहगणैः आ समन्तात् युतम् ॥ २९ ॥

[ अर्जु० ] प्रतोदं प्राजनम् । अभीषून् रश्मीन् । प्रग्रहान् इत्यर्थः ॥ १२ ॥ विषीदितुमिच्छसीति छान्दसः सीदादेशः अनित्यो वा । एवमन्यत्रापि ॥ १४ ॥ निशामय अवधारय ॥ १८ ॥ स्वित् वितर्के । अस्यति क्षिपति ॥ १९ ॥ संगताः मिलिताः ॥ २० ॥

[ चतु० ] स्तनयित्नोर्मेघात् ॥ १८ ॥ कुरूणां वनं वनमिव वनं सैन्यम् । पाण्यादयः शाखा इव शाखाश्चेत्येताभिर्निरन्तरम् ॥ २१ ॥ सैन्यं विद्धं द्रक्ष्यन्ति भीष्माद्याः इति शेषः ॥ २३ ॥ नैव च यात्रायां विधेयमित्यत आह— दिवमावृत्येति ॥ २४ ॥ दृढां मुष्टिं दीर्घामवाप्तवानिति शेषः आगामिस्वरसात् ॥ २६ ॥

[ सर्व० ] प्रतोदः तीक्ष्णकीलाग्रो दण्डः । अभीषून् हयरश्मीन् ॥ १२ ॥ निशामय पश्य । शतह्रदां विद्युतं स्तनयित्नुः मेघः ॥ १८ ॥ शतं मार्गाः सर्वतो गतिरित्यर्थः ॥ २२ ॥ आविद्धं भ्राम्यमाणम् ॥ २३ ॥ प्रगाढं संकटं युद्धम् ॥ २६ ॥

[ विरो० ] अहं ब्रह्मणः प्रजापतेः प्रजापतिसंबन्धिनो ब्रह्मस्वरूपात् रुद्रात् । प्रगाढं युद्धविशेषं तुमुलादिकमपि ॥ २६ ॥ तथा जित्वा आयातः (शे) ॥ २७ ॥

---

१२ व. °तीव मे । व. नाभीषून्नियन्तुं । १४ ज. जातश्च विश्रुतः । व. शत्रुदमनो न विषादितुमर्हसि । १६ व. रथसत्तमः । ग. घ. च. ज. व. श्रेष्ठ पुनरेवेदम° । १७ ग. घ. व. आदारयाम्यहमेतस्य धनुर्ज्यामपि चाहवे व. आदास्यामि धनुर्ज्यायामक्षय्यमहमायुधम्;—°ज्यामग्र्यामकुप्यमपि चायुधम् । १९ व. द्रक्ष्यन्ते । २० घ. मां शङ्किताः व. । नागचक्रां । व. प्रवाहयिष्यामि ।

२३ व. मोहचक्रमिं° । २४ व. अप्रमत्तो रथे । ण. रथे तिष्ठन् । ग. घ. सहारिभिः; व. भिन्द्यां सहारिभिः । २६ च. ण. दे. वि. तुमुलं चित्रमतिविद्धं । ग. घ. व. चित्रमभ्यशिक्षं । २८ ज. भूतानि प्रवृद्धेनेव ( क. ग. घ. त्रि. ण. ) वायुना । २९ व. ध्वजवृक्षं दन्तिनगं । ण. गणान्वितम् ।

तानहं रथनीडेभ्यः शरैः संनतपर्वभिः ॥
यत्तान्सर्वानतिबलान्योत्स्यमानानवस्थितान् ॥
एकः संकालयिष्यामि वज्रपाणिरिवासुरान् ॥ ३० ॥
रौद्रं रुद्रादहं ह्यस्त्रं वारुणं वरुणादपि ॥
अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ॥
वज्रादीनि तथाऽस्त्राणि शक्रादहमवाप्तवान् ॥ ३१ ॥
धार्तराष्ट्रवनं घोरं नरसिंहाभिरक्षितम् ॥
अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् ॥ ३२ ॥

वैशम्पायन उवाच—

एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ॥
व्यवागाहद्रथानीकं भीमं भीष्माभिरक्षितम् ॥ ३३ ॥
तमायान्तं महाबाहुं जिगीषन्तं रणे कुरून् ॥
अभ्यवारयदव्यग्रः क्रूरकर्माऽऽपगासुतः ॥ ३४ ॥
तस्य जिष्णुरुपावृत्य ध्वजं मूलादपातयत् ॥
विकृष्य कलधौताग्रैः स विद्धः प्रापतद्भुवि ॥ ३५ ॥
तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः ॥
आगच्छन्भीमधन्वानं चत्वारश्च महाबलाः ॥ ३६ ॥
दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः ॥
आगत्य भीमधन्वानं बीभत्सुं पर्यवारयन् ॥ ३७ ॥
दुःशासनस्तु भल्लेन विद्ध्वा वैराटिमुत्तरम् ॥
द्वितीयेनार्जुनं वीरः प्रत्यविध्यत्स्तनान्तरे ॥ ३८ ॥
तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् ॥
चकर्त गार्ध्रपत्रेण जातरूपपरिष्कृतम् ॥ ३९ ॥
अथैनं पञ्चभिः पश्चात्प्रत्यविध्यत्स्तनान्तरे ॥
सोऽपयातो रणं हित्वा पार्थबाणप्रपीडितः ॥ ४० ॥
तं विकर्णः शरैस्तीक्ष्णैर्गृध्रपत्रैरजिह्मगैः ॥
विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ॥ ४१ ॥
ततस्तमपि कौन्तेयः शरेणानतपर्वणा ॥
ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात् ॥ ४२ ॥
ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः ॥
अवाकिरच्छरैस्तीक्ष्णैः परीप्सुर्भ्रातरं रणे ॥ ४३ ॥
तावुभौ गार्ध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ॥
विद्ध्वा युगपदव्यग्रस्तयोर्वाहानसूदयत् ॥ ४४ ॥
तौ हताश्वौ विभिन्नाङ्गौ धृतराष्ट्रात्मजावुभौ ॥
अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ४५ ॥
सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः ॥
किरीटमाली कौन्तेयो लब्धलक्षो महाबलः ॥ ४६ ॥

इति श्रीमहाभारते विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ विष० ] मत्स्यस्य कुले शत्रुदमने जातो न विषीदितुमर्हसि । असीत्सव्ययं त्वमर्थे ॥ १४ ॥ स्वित् वितर्के ॥ १९ ॥ चक्रमिवाविद्धं भ्रान्तम् ॥ २३ ॥

[ नील० ] व्यवागाहत् आलोडितवान् ॥ ३३ ॥ उपावृत्य संमुखीभूय विकृष्य छित्त्वा कलधौताग्रैः स्वर्णरञ्जितफलकैर्बाणैः ॥ ३५ ॥ एनं दुःशासनम् ॥ ४० ॥ लब्धलक्षः अप्रच्युतलक्षः ॥ ४६ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ अर्जु० ] वाहान् अश्वान् ॥ ४४ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[चतु०] विकृष्य ध्वजं न्यपातयदित्यन्वयः । तदिष्वस्त्रं[1] रथं प्रापेति वान्वयः ॥ ३५ ॥ उपावृत्य प्रत्यावृत्य ॥ ३९ ॥ तमपि विकर्णमपि सः । विकर्णः दुर्योधनभ्राता ॥ ४२ ॥ असूदयत् सादितवान् ॥ ४४ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ सर्व० ] नीडं स्थानम् ॥ ३० ॥ उपावृत्य संमुखीभूय । विकृष्य छित्त्वा कलधौताग्रैः स्वर्णरञ्जितफलकैर्बाणैः ॥ ३५ ॥ लब्धलक्षः अप्रच्युतलक्ष्यः ॥ ४६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ विरो० ] रथमभ्येत्य योत्स्यमानान् ॥ ३० ॥ इष्वस्त्रम् इष्वासं विकृष्य रथात् । रथं (च) । रथं प्रति न्यपातयत् ॥ ३५ ॥ पश्चादपयातः ॥ ४० ॥ किरीटमाली 'मल धारणे' ॥ ४६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

३२ व. अहमुन्मूलयिष्यामि । ३३ ग. व. व्यगाहत्तद्रथानीकं । क. भीष्मस्य वाजिभिः । ३४ ग. घ. °मां धनंजयम् । ३५ ज. ध्वजं मूले न्यकृन्तत; न्यपातयत् । ज. कलधौताग्रमिष्वस्त्रं पातयद्रथात्; व. विद्धः प्रापतद्रथात् । ३६ व. °न्वानमाराद्दृष्ट्वा धनंजयम् । ३७ व. प्रत्यवारयन् । ३९ व. क्षुरधारेण । ४० व. सोपायात्तद्रणे । °तो रथोपस्थात्पार्थबाणाभिर्पीडितः । ४१ व. गार्ध्रपत्रै° । ज. परमास्त्रेण । ४२ क. °त्रैः शिलाशितैः । क. गाढं स विद्धः प्राद्रवद्रथात् । ग. प्रापतद्भुवि । ४३ व. परीप्सन्भ्रा° । ४५ व. विविद्धाङ्गौ । व. अभिपद्य; ज. अभिवाह्य पदानुगैः । इति एकषष्टितमोऽध्यायः ॥ ६१ ॥

[1] इष्वस्त्रं प्राप तद्रथम् इति पाठोऽस्य संमतः ।

## द्विषष्टितमोऽध्यायः ६२

संहत्य युध्यतः कुरुवीरान्रणे निपात्यार्जुनेन लोहितनदीप्रवर्तनम् ॥ १ ॥

वैशम्पायन उवाच—

अथ संगम्य सर्वे ते कौरवाणां महारथाः ॥
अर्जुनं सहिता यत्ताः प्रत्ययुध्यन्त भारत ॥ १ ॥
स सायकमयैर्जालैः सर्वतस्तान्महारथान् ॥
प्राच्छादयदमेयात्मा नीहारेणेव पर्वतान् ॥ २ ॥
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ॥
भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ३ ॥
नराश्वकायान्निर्भिद्य लौहानि कवचानि च ॥
पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ॥ ४ ॥
त्वरमाणः शरानस्यन्पाण्डवः प्रबभौ रणे ॥
मध्यन्दिनगतोऽर्चिष्मान् शरदीव दिवाकरः ॥ ५ ॥
उपप्लवन्ते वित्रस्ता रथेभ्यो रथिनस्तथा ॥
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातयः ॥ ६ ॥
शरैः संछिद्यमानानां कवचानां महात्मनाम् ॥
ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ॥ ७ ॥
छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम् ॥
गजाश्वसादिनां तत्र शितबाणात्तजीवितैः ॥ ८ ॥
रथोपस्थाभिपतितैरास्तृता मानवैर्मही ॥
प्रनृत्यतीव संग्रामे चापहस्तो धनञ्जयः ॥ ९ ॥
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ॥
त्रस्तानि सर्वसैन्यानि व्यपागच्छन्महाहवात् ॥१०॥
कुण्डलोष्णीषधारीणि जातरूपस्रजस्तथा ॥
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ॥ ११ ॥
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ॥
सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ॥१२॥
शिरसां पात्यमानानामन्तरा निशितैः शरैः ॥
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ॥ १३ ॥
दर्शयित्वा तथाऽऽत्मानं रौद्रं रुद्रपराक्रमः
अवरुद्धोऽचरत्पार्थो वर्षाणि त्रिदशानि च ॥
क्रोधाग्निमुत्सृजन्वीरो धार्तराष्ट्रेषु पाण्डवः ॥ १४ ॥
तस्य तद्दहतः सैन्यं दृष्ट्वा चैव पराक्रमम् ॥
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य पश्यतः ॥ १५ ॥

---

[ विष० ] भीमं भीजनकम् । भीष्माभिरक्षितं गाङ्गेयपालितम् ॥ ३३ ॥

इति श्रीमहाभारतविषमपदविवरणे वि. प. एकषष्टितमोऽध्यायः ॥६१॥

[ लक्षा० ] परीप्सन् भारतं रणे इत्यत्र भारतं सैन्यं परीप्सन् परिपातुमिच्छन् ॥ ४३ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ नील० ] नीहारेण धूमोष्मणा ॥ २ ॥ उपप्लवन्ते इतस्ततो धावन्ति ॥ ६ ॥ आयोधनं रणभूः । गतचेतसां मूढानाम् । आत्तजीवितैर्मृतैः शरीरैः ॥ ८ ॥ रथोपस्थेभ्योऽभितः पतितैः ॥ ९ ॥ धारीणि शिरांसि स्रजश्च पतितानि दृश्यन्ते ॥ ११ ॥ त्रीणि च दश चेति त्रिदशानि वर्षाणि अवरुद्धः पार्थस्तदानीं स्वेच्छयाऽचरदित्यर्थः ॥ १४ ॥

[ अर्जु० ] अस्यन् क्षिपन् ॥ ५ ॥ आयोधनं युद्धभूमिः ॥ ८ ॥ आस्तृता विस्तीर्णा ॥ ९ ॥

[ चतु० ] रथोपस्थानि रथिनामुपवेशनस्थानानि तेभ्यः अभिपतितैः अधोगतैः ॥ ९ ॥ जातरूपस्रजानि जातरूपस्य सुवर्णस्य स्रजाः मालाः येषु शिरस्सु । स्रजाशब्दष्टाबन्तो वाचेतिवत् ॥ ११ ॥ अन्तरा मध्ये ॥ १३ ॥ अवरुद्धः आच्छन्नः । अवरुद्धमिति पाठे आत्मानमित्यस्य विशेषणम् ॥ १४ ॥ शान्तिपराः स्वजीवनतत्पराः । धार्तराष्ट्रस्येत्यनादरे षष्ठी । धार्तराष्ट्रस्य सैन्यानीति संबन्धः ॥ १५ ॥

[ सर्व० ] उपप्लवन्तः इतस्ततो धावन्तः ॥ ६ ॥ आयोधनं रणभूः ॥ ८ ॥

[ विरो० ] स शब्दः सैन्ये (?) (शे) ॥ ३ ॥ उपप्लवन्ति भ्रश्यन्ति ॥ ६ ॥

[ लक्षा० ] व्यलीयन्त च भागश इत्यत्र व्यलीयंत तदेति पदयोजना ॥ १० ॥

---

२ क. प्राच्छादयच्छरौघैस्तान्नीहार इव पर्वतान्; व. ज. नीहार इव पर्वतान् । ४ व. नरकायान्विनिर्भिद्य; क. ज. नागाश्वकायान्निर्भिद्य । क. पार्थस्य शरवर्षाणि न्यपतञ्छतशः क्षितौ । ५ क. पाण्डवस्तु प्रकाशते । ६ ज. उपप्लवन्तो वित्र°; क. उदकप्रयान्ति विध्वस्ता । ज. रथिनस्तदा । व. भूमिस्थाश्च श्वपृ° । ७ क. ग. व. शरैः संताड्यमानानां । ८ क. योधनं जज्ञे । व. पार्थबाणात्तजीवितैः ९ व. ज. रथोपस्थान्निपतितैरास्तीर्णा; घ. °तैरावृणोन्मानवैर्महीम् । व. स नृत्यन्निव; ज. अनृत्यदिव । १० घ. त्रस्तानि सर्वभूतानि । क. °सैन्यानि व्यलीयन्त च भागशः । ११ व. ज. जातरूपस्रजानि च । १३ व. °काशादपतद्भरतर्षभ । १४ व. ज. वर्षाणि दश त्रीणि च ( वै ) क. °त्सृजन्नाजौ; ग. घ. व. रस्सृजन्घोरं । १५ ज. दृष्ट्वा घोरपराक्रमम्; क. चास्य पराक्रमम् । क. धार्तराष्ट्रस्य भारत ।

वित्रासयित्वा तत्सैन्यं द्रावयित्वा महारथान् ॥
अर्जुनो जयतां श्रेष्ठः पर्यवर्तत भारत ॥ १६ ॥
प्रावर्तयन्नदीं घोरां शोणितोदां तरङ्गिणीम् ॥
अस्थिशैवालसंबाधां युगान्ते कालनिर्मिताम् ॥ १७ ॥
शरचापप्लवां घोरां केशशैवलशाद्वलाम् ॥
तनुत्रोष्णीषसंबाधां नागकूर्ममहाद्विपाम् ॥ १८ ॥
मेदोवसासृक्प्रवहां महाभयविवर्धिनीम् ॥
रौद्ररूपां महाभीमां श्वापदैरभिनादिताम् ॥ १९ ॥
तीक्ष्णशस्त्रमहाग्राहां क्रव्यादगणसेविताम् ॥
मुक्ताहारोर्मिकालिलां चित्रालङ्कारबुद्बुदाम् ॥ २० ॥
शरसङ्घमहावर्तां नागनक्रां दुरत्ययाम् ॥
महारथमहाद्वीपां शङ्खदुन्दुभिनिस्वनाम् ॥
चकार च तदा पार्थो नदीं दुस्तरशोणिताम् ॥ २१ ॥
आददानस्य हि शरान्संधाय च विमुञ्चतः ॥
विकर्षतश्च गाण्डीवं न कश्चिद्ददृशेऽन्तरम् ॥ २२ ॥

इति श्रीमहाभारते विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ६३

पुनः कर्णदुर्योधनादिभिर्महास्त्रैरर्दितेनार्जुनेनैन्द्रास्त्रं धनुषि संधाय सर्वेषां विद्रावणम् ॥ १ ॥

**वैशम्पायन उवाच—**

ततो दुर्योधनः कर्णो दुःशासनविविंशती ॥
द्रोणश्च सह पुत्रेण कृपश्चापि महारथः ॥ १ ॥
पुनर्ययुश्च संरब्धा धनञ्जयजिघांसवः ॥
विस्फारयन्तश्चापानि बलवन्ति दृढानि च ॥ २ ॥
तान्विकीर्णपताकेन रथेनादित्यवर्चसा ॥
प्रत्युद्ययौ महाराज समन्ताद्वानरध्वजः ॥ ३ ॥
ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः ॥
तं महास्त्रैर्महावीर्यं परिवार्य धनञ्जयम् ॥ ४ ॥
शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥
ववर्षुः शरवर्षाणि पातयन्तो धनञ्जयम् ॥ ५ ॥
इषुभिर्बहुभिस्तूर्णं समरे लोमवाहिभिः ॥
अदूरात्पर्यवस्थाप्य पूरयामासुरादृताः ॥ ६ ॥

[ नील० ] नागा हस्तिन एव कूर्माः महाद्विपा जलगजाश्च यस्यां ताम् ॥ १८ ॥

इति श्रीनैल० भारतभावदीपे वि. प. द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ अर्जु० ] तनुत्रोष्णीषसंबाधां तनुत्रं वर्म उष्णीषं शिरोवेष्टनं ताभ्यां संबाधां संकटाम् ॥ १८ ॥ श्वापदैः शृगालादिभिः ॥ १९ ॥ उत्तरशोणितां शोणितप्रधानाम् । नदीप्रवर्तनम् ॥ २१ ॥

इति श्रीमन्म० मर्जु० विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ चतु० ] तनुत्रं वर्म, उष्णीषं शिरोवेष्टनं ताभ्यां संबाधां संकटाम् ॥ १८ ॥ नागा हस्तिन एव कूर्मास्तैर्दुरत्ययामनतिक्रमणीयाम् ॥ २१ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ सर्व० ] प्लवः घटादिभिर्निर्मिता क्षुद्रनौका । शाद्वलं हरिततृणम् । उडुपम् एककाष्ठनिर्मिता नौः ॥ १८ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि. प. द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ विरो० ] संबाधामगम्यां रथोऽप्युडुपम् ॥ १८ ॥ नागो नक्रोऽपि । उत्तरशोणितां शोणितप्रधानाम् ॥ २१ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ लक्षा० ] अस्याददानस्य शरानित्यत्र असु निरसन इति धातोः अस्य एकं शरं प्रयुज्य पुनः शरानाददानस्येति योजना ॥ २२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ नील० ] तत इति ॥ १ ॥ विकीर्णा विस्तारिता पताका ध्वजाञ्चलो यस्य तेन ॥ ३ ॥ पातयन्तः पीडयन्तः ॥ ५ ॥ पर्यवस्थाप्य स्तब्धीकृत्य इषुभिः पूरयामासुः आवृतवन्तः ॥ ६ ॥

[ चतु० ] तान्समस्तानित्यन्वयः ॥ ३ ॥ लोमवाहिभिः क्षुरवत्तीक्ष्णैः ॥ ६ ॥

इति द्विषष्टितमोऽध्यायः ॥ ६२ ॥

१६ ज. वित्रास्य सर्वसैन्यानि । १७ ज. व. केशशैवलसंबाधां । क. °बाधां संग्रामे पार्थनिर्मिताम् । १८ क. ग. ज. व. घ. °घोरां मांसशोणितकर्दमाम् । व. कूर्मरथोडुपाम्; ज. °कूर्मां रथोडुपाम् । २० ग. घ. ज. व. चित्रालंकारभूषिताम् । २१ व. ज. चकार महतीं पार्थो । ज. नदीमुत्तमशोणिताम् । २२ व. ज. °नरथ नाराचान्संधाय ( संधानात् ) च विमुञ्चतः ।

१ नागकूर्मदुरत्ययामिति पाठोऽस्य संमतः ।

१ व. ज. अथ दुर्योधनः । ग. घ. कृपश्चातिरथो रणे । २ व. ज. पुनरीयुः सुसंरब्धा । ज. व. °जयजिघांसया; जिगीषया । ३ व. तान्प्रकीर्णपताकेन समस्तान्वानरध्वजः । ५ ज. इव शारदाः । ज. प्रतपन्तं; व. प्रपतन्तं; प्रपतन्तः किरीटिनम् । ६ व. ज. पर्यन्तस्थाय । ज. °सुरावृताः ।

तथा तैरवकीर्णस्य दिव्यैरस्त्रैः समन्ततः ॥
न तस्य द्व्यङ्गुलमपि विवृतं संप्रदृश्यते ॥ ७ ॥
ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः ॥
अस्त्रमादित्यसंकाशं गाण्डीवे समयोजयत् ॥ ८ ॥
शररश्मिरिवादित्यः प्रतस्थे समरे बली ॥
किरीटमाली कौन्तेयः सर्वान्प्राच्छादयत्कुरून् ॥९॥
यथा बलाहके विद्युत्पावको वा शिलोच्चये ॥
तथा गाण्डीवमभवदिन्द्रायुधमिवानतम् ॥ १० ॥
यथा वर्षति पर्जन्ये विद्युद्विभ्राजते दिवि ॥
द्योतयन्ती दिशः सर्वाः पृथिवीं च समन्ततः ॥११॥
तथा दश दिशः सर्वाः पतद्गाण्डीवमावृणोत् ॥
नागाश्च रथिनः सर्वे मुमुहुस्तत्र भारत ॥ १२ ॥
सर्वे शान्तिपरा योधाः स्वचित्तानि न लेभिरे ॥
सङ्ग्रामे विमुखाः सर्वे योधास्ते हतचेतसः ॥ १३ ॥
एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ ॥
व्यद्रवन्त दिशः सर्वा निराशानि स्वजीविते ॥१४॥

इति श्रीमहाभारते विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ६४

भीष्मार्जुनयोरस्त्रैः शस्त्रैश्चामानुषं युद्धम् ॥ १ ॥ तद्दर्शनप्रीतेनेन्द्रेण दिव्यपुष्पवर्षेण तयोः पूजनम् ॥ २ ॥ अर्जुनेन भीष्माभिभवो भीष्मापयानं च ॥ ३ ॥

**वैशम्पायन उवाच—**

ततः शान्तनवो भीष्मो भरतानां पितामहः ॥
वध्यमानेषु योधेषु धनञ्जयमुपाद्रवत् ॥ १ ॥
प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम् ॥
शरानादाय तीक्ष्णाग्रान्मर्मभेदान्प्रमाथिनः ॥ २ ॥
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥
शुशुभे स नरव्याघ्रो गिरिः सूर्योदये यथा ॥ ३ ॥
प्रध्माय शङ्खं गाङ्गेयो धार्तराष्ट्रान्प्रहर्षयन् ॥
प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत् ॥ ४ ॥
तमुदीक्ष्य समायान्तं कौन्तेयः परवीरहा ॥
प्रत्यगृह्णात्प्रहृष्टात्मा धाराधरमिवाचलः ॥ ५ ॥
ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ॥
समार्पयन्महावेगान्श्वसमानानिवोरगान् ॥ ६ ॥
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ॥
ज्वलन्तं कपिमाजघ्नुर्ध्वजाग्रनिलयांश्च तान् ॥ ७ ॥

---

[ सर्व० ] प्रकीर्णाः विस्तारिताः ॥ ३ ॥ पातयन्तः पीडयन्तः ॥ ५ ॥ पूरयामासुः आवृतवन्तः ॥ ६ ॥

[नील०] स्वचित्तानि अयमहमिति न ज्ञातवन्तः ॥१३॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ अर्जु० ] विवृतं प्रकाशितम् अन्तरं वा ॥ ७ ॥ इन्द्रायुधमिति इन्द्रधनुः ॥ १० ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[चतु०] बलाहक इति कृष्णवर्णत्वादर्जुनस्य ॥ १० ॥ दश दिशः पतद्गच्छत् ॥ १२ ॥ स्वचित्तानि अयमहमस्मीति निर्वृत्तिका इत्यर्थः ॥ १३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[सर्व०] स्वचित्तानि अयमहमिति न ज्ञातवन्तः ॥१३॥

इति श्रीसर्व० भारतार्थप्रकाशे वि० प० त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ विरो० ] पतत् भ्रमत् ॥ १२ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ विष० ] विवृतम् प्रकाशितमन्तरं वा ॥ ७ ॥

इति श्रीमहाभारतविषमपदविवरणे वि० प० त्रिषष्टितमोऽध्यायः ॥६३॥

---

[ नील० ] तत इति ॥ १ ॥

[ अर्जु० ] जातरूपपरिष्कृतं सुवर्णमण्डितम् ॥ २ ॥ पाण्डरेण श्वेतेन आतपत्रेण उपलक्षिते ॥ ३ ॥ धाराधरं मेघम् ॥ ५ ॥

[ चतु० ] मर्मभेदान्वीरप्रमथनशीलान् ॥ २ ॥ धाराधरं मेघम् ॥ ५ ॥ तान् भूतविशेषान् ॥ ७ ॥

---

७ ज. व. विवृतं समदृश्यत । ८ व. °मैन्द्रं महाबलः । ९ व. ज. स रश्मिभिरिवादित्यः प्रतपन् । ण. प्रच्छादयन्कुरुन् । १० ग. घ. व. °मिवाततम् । १२ ज. दिशास्तत्र; व. दिशः सर्पदेकं गाण्डी° । ग. घ. व. नरताश्च रथिनः । ग. घ. व. बभूवुस्तत्र सर्वशः (तः) । १३ व. ज. शान्तिपरा भूत्वा । १४ व. निराशा निजजीविते । इति त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

१ ग. घ. व. भीष्मो दुराधर्षः प्रतापवान् । २ क. ग. मर्मदेहप्रमाथिनः । घ. व. देहमर्मप्रमाथिनः; ज. शत्रूणां मर्मभेदिनः । ३ क. गिरिः सूर्योत्तरे यथा । ४ क. प्राध्माप्य शङ्खं । ५ क. °ह्लादमेयात्मा प्रियाऽतिथिमिवागतम् । ६ व. पार्थस्य धीमतः । क. °गाञ्ज्वलतः पन्नगानिव । ७ व. ज्वलन्तः; क. ध्वजस्थं कपि° ।

ततो भल्लेन महता पृथुधारेण पाण्डवः ॥
छत्रं चिच्छेद भीष्मस्य तूर्णं तदपतद्भुवि ॥ ८ ॥
ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्भृशम् ॥
शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी ॥ ९ ॥
अमृष्यमाणस्तद्भीष्मो जानन्नपि स पाण्डवम् ॥
दिव्येनास्त्रेण महता धनञ्जयमवाकिरत् ॥ १० ॥
तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदीरयन् ॥
प्रत्यगृह्णादमेयात्मा महामेघमिवाचलः ॥ ११ ॥
तयोस्तदभवद्युद्धं तुमुलं लोमहर्षणम् ॥
भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ १२ ॥
प्रेक्षन्तः कुरवः सर्वे योधाश्च सहसैनिकाः ॥
भल्लैर्भल्लान् समागम्य भीष्मपाण्डवयोर्युधि ॥
अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ॥१३॥
अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः ॥
गाण्डीवमभवद्राजन् पार्थस्य सृजतः शरान् ॥ १४॥
ततः संछादयामास भीष्मं शरशतैः शितैः ॥
पर्वतं वारिधाराभिश्छादयन्निव तोयदः ॥ १५ ॥
तां स वेलामिवोद्भूतां शरवृष्टिं समुत्थिताम् ॥
व्यधमत्सायकैर्भीष्मः पाण्डवं समवारयत् ॥ १६ ॥
ततस्तानि निकृत्तानि शरजालानि भागशः ॥
समरे च व्यशीर्यन्त फाल्गुनस्य रथं प्रति ॥ १७ ॥
ततः कनकपुङ्खानां शरवृष्टिं समुत्थिताम् ॥
पाण्डवस्य रथात्तूर्णं शलभानामिवायतिम् ॥
व्यधमत्तां पुनस्तस्य भीष्मः शरशतैः शितैः ॥१८॥
ततस्ते कुरवः सर्वे साधुसाध्विति चाब्रुवन् ॥
दुष्करं कृतवान् भीष्मो यदर्जुनमयोधयत् ॥ १९ ॥
बलवांस्तरुणो दक्षः क्षिप्रकारी धनञ्जयः ॥
कोऽन्यः समर्थः पार्थस्य वेगं धारयितुं रणे ॥२०॥
ऋते शान्तनवाद्भीष्मात्कृष्णाद्वा देवकीसुतात् ॥
आचार्यप्रवराद्वाऽपि भारद्वाजान्महाबलात् ॥ २१ ॥
अस्त्रैरस्त्राणि संवार्य क्रीडन्तौ भरतर्षभौ ॥
चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ ॥ २२ ॥
प्राजापत्यं तथैवैन्द्रमाग्नेयं रौद्रदारुणम् ॥
कौबेरं वारुणं चैव याम्यं वायव्यमेव च ॥
प्रयुञ्जानौ महात्मानौ समरे तौ विचेरतुः ॥ २३ ॥
विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ॥
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन्॥२४॥
नायं युक्तो मनुष्येषु योऽयं संदृश्यते महान् ॥
महास्त्राणां संप्रयोगः समरे भीष्मपार्थयोः ॥ २५ ॥

**वैशम्पायन उवाच—**

एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ॥
अस्त्रयुद्धे तु निर्वृत्ते शरयुद्धमवर्तत ॥ २६ ॥
अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकम् ॥
चकर्त भीष्मस्य तदा जातरूपपरिष्कृतम् ॥ २७ ॥

---

[ नील० ] अग्निचक्रम् अलातचक्रम् । आविद्धं भ्राम्यमाणम् ॥ १४ ॥ उपावृत्य समीपमेत्य ॥ २७ ॥

[ अर्जु० ] जनान् प्राणिगणान् ॥ १० ॥ वेलामिव सागरजलविकृतिमिव 'अब्ध्यम्बुविकृतौ वेला' इत्यमरः ॥ १६ ॥ आयतिं श्रेणीम् ॥१८॥ ऋते विना अन्य इत्यर्थः ॥२१॥

[ चतु० ] रथवाहान् रथाश्वान् ॥ ९ ॥ प्रत्यगृह्णात्स्वीकृतवान् । यथा महामेघोऽचलं व्याप्नोतीत्यर्थः ॥ ११ ॥ आविद्धं भ्रामितम् ॥ १४ ॥ वेलामिव सागरजलमर्यादामिव 'अब्ध्यम्बुविकृतौ वेला' इत्यमरः । समवारयत् व्यापकत्वमपासारयत् ॥ १६ ॥ शरवृष्टिं शराणां वृष्टिम् । अस्यैव विशेषणं कनकपुङ्खानामिति । उपस्थितां समीपगताम् । आयतिं श्रेणिम् ॥१८॥ युक्तः प्रयुक्तः ॥ २५ ॥ अस्त्रयुद्धं बाणयुद्धम् । शस्त्रयुद्धं खड्गादियुद्धम् । यद्वा अस्त्रयुद्धं दैवास्त्रयुद्धं, शस्त्रयुद्धं मानुषास्त्रयुद्धमिति भेदः ॥२६॥

[ सर्व० ] अग्निचक्रमुल्मुकम् । आविद्धं भ्राम्यमाणम् ॥ १४ ॥ उपावृत्य समीपमेत्य ॥ २७ ॥

[ विरो० ] वेलाम् 'अब्ध्यम्बुविकृतौ वेला' ॥ १६ ॥ शस्त्रयुद्धं निकटक्षेप्यं शस्त्रम् ॥ २६ ॥

---

९ व. ज. °रभ्याहनद्दृढम् । ११ व. पाण्डवो भीष्मं । व. °ह्लाददीनात्मा । १२ व. °रतदाऽभवद्युद्धमतुलं । व. बलवासवयो° । १३ घ. प्रेक्षन्त चान्तरिक्षस्थाः सर्वे देवास्तमाहवम् । ण. व. प्रेक्षन्तः कुरवः । व. देवाश्च सह चारणैः । ज. °भल्लाः समाविद्धा; क. समाहत्य कुरुपाण्डवयो रणे । १५ स्थाने क. अग्निचक्रोपमं घोरं मण्डलीकृतमाहवे । गाण्डीवमभवज्जिष्णोः सव्यं दक्षिणमस्यतः । १५ व. स तैः संछाद° । १६ क. तां समुद्रमिवोद्धूतां; व. वेलामिवोद्धूतां शरवृष्टिमुपस्थिताम् । ग. °भीष्मः पार्थस्तं समवाकिरत् । १७ क. °रतानि विकृष्टानि शरजालानि संघशः । क. आहतानि व्यशीर्यन्त । १८ ङ. शरवृष्टिमुपास्थिताम्; व. शराणां वृष्टिरुत्थिता । व. मिवायतिः । १९ क. ततो देवर्षिगन्धर्वाः साधु° । ज. °ध्विति पूजयन् । २० क. °वांश्चार्जुनो दक्षः । ज. व. क्षिप्रकारी च पाण्डवः । २२ क. क्रीडन्तः पुरुषोत्तमौ । क. मोदयन्तौ महाबलौ । ज. यन्तौ महारथौ । २३ क. °ग्नेयं च सुदारुणम् । क. तौ विरेजतुः । २५. ज. नेदं युक्तं मनु° । क. नैतदन्यो मनुष्येषु प्रदर्शयितुमाहवे । २६ ज. निर्वृत्ते शस्त्रयुद्धमवर्तत । २७ व. पृथुधारेण कार्मुकम् । उत्तरार्धस्थाने क. न्यक्कृन्तद्गृध्रपत्रेण शातकुम्भपरिष्कृतम् ।

निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे ॥
समादाय महाबाहुः सज्यं चक्रे महारथः ॥
शरांश्च सुबहून् क्रुद्धो मुमोचाशु धनञ्जये ॥ २८ ॥
अर्जुनोऽपि शरांस्तीक्ष्णान् भीष्माय निशितान्बहून् ॥
चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे ॥ २९ ॥
तयोर्दिव्यास्त्रविदुषोरस्यतोर्निशितान्शरान् ॥
न विशेषस्तदा राजँल्लक्ष्यते स्म महात्मनोः ॥३०॥
अथावृणोद्दश दिशः शरैरतिरथस्तदा ॥
किरीटमाली कौन्तेयः शूरः शान्तनवस्तथा ॥३१॥
अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ॥
बभूव तस्मिन्संग्रामे राजँल्लोके तदद्भुतम् ॥ ३२ ॥
पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ॥
शेरते स्म तदा राजन् कौन्तेयस्याभितो रथम् ॥३३॥
ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ॥
आगच्छन्पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः ॥ ३४ ॥
निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ॥
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ३५ ॥
तस्य तद्दिव्यमस्त्रं हि विगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥३६॥
तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ३७ ॥
पश्येमान्पार्थनिर्मुक्तान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ॥ ३८ ॥
नेदं मनुष्याः संदध्युर्नहीदं तेषु विद्यते ।
पौराणानां महास्त्राणां विचित्रोऽयं समागमः ॥३९॥
आददानस्य हि शरान्संधाय च विमुञ्चतः ।
विकर्षतश्च गाण्डीवं नान्तरं समदृश्यत ॥ ४० ॥
मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
नाशक्नुवंस्तं सैन्यानि पाण्डवं प्रति वीक्षितुम् ॥४१॥
तथैव भीष्मं गाङ्गेयं द्रष्टुं नोत्सहते जनः ॥ ४२ ॥
उभौ विश्रुतकर्माणावुभौ तीव्रपराक्रमौ ।
उभौ सदृशकर्माणावुभौ युधि सुदुर्जयौ ॥ ४३ ॥
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ४४ ॥
ततः शान्तनवो भीष्मो वामं पार्श्वमताडयत् ।
पश्यतः प्रतिसंधाय विध्यतः सव्यसाचिनः ॥४५॥
ततः प्रहस्य बीभत्सुः पृथुधारेण कार्मुकम् ।
चिच्छेद गार्ध्रपत्रेण भीष्मस्यादित्यतेजसः ॥ ४६ ॥
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ४७ ॥
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युद्धदुर्धर्षस्तस्थौ दीर्घमिवान्तरम् ॥ ४८ ॥
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ४९ ॥

इति श्रीमहाभारते विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

[ लक्षा० ] अयं जिष्णुरुदाहृत्येत्यत्र उदाहृत्य तूणीरादूर्ध्वमाहृत्य ॥ २७ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ नील० ] अस्त्रं बाणानां क्षेपणं कर्म ॥ ३८ ॥ कूबरं रथयुगन्धरम् ॥ ४८ ॥ अपोवाह अपसारयामास ॥ ४९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ अर्जु० ] अतीव अतिशयितवानित्यर्थः वमन् उद्गिरन् शरानिति शेषः ॥ ३२ ॥ विवृतमन्तरम् ॥ ४५ ॥ कूबरं रथसंबन्धं युगन्धरम् ॥ ४८ ॥ अपोवाह अपसारितवान् उपदेशं सारथीनामिति शेषः ॥ ४९ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ चतु० ] अतीव अतिक्रम्येव ॥ ३२ ॥ श्वेतवाहनोऽर्जुनः ॥ ३४ ॥ वीक्षन्ते स्म । स्मेति भूतेऽर्थे ॥ ३६ ॥

---

३० क. °तोरनिशं शरान् । ३२ क. बभूव तत्र संघेऽस्मिँल्लोके । ३४ क. असक्ताः पुङ्खसंसक्ताः श्वेत' । ३८ व. पश्यैतान्विशिखांस्तीक्ष्णान्सं° । क. ग. °मानरिनिर्दारान्सं°; । ज. च. °मानथ निर्हारान्सं° । व. °मस्त्रमुदीर्यते । ३९ व. श्रद्दध्युर्न । क. सौराणां च महास्त्रा° । व. विचित्राणां समागमः । ४ °ग. घ व. संदधानस्य मुञ्चतः । व. ज. नान्तरं स्म प्रदृश्यते । ४१ व. न. शक्नुवन्ति सैन्यानि । ४२ क. °वुभौ शूरौ महीक्षितौ; व. युद्धविशारदौ, घ. युद्धदुरासदौ । घ. युधि दुरासदौ । क. उभौ विचित्रकर्माणावुभौ युधि दुरासदौ । ४५ व. ज. वामे पार्श्वे समार्पयत्; समर्दयत् । क. ग. घ. च. व. ज. अस्यतः प्रतिसंधाय । व. विशिखं स°; क. विवृतं सव्यसाचिनः । ४६ क. ततः प्रसह्य बीभ° । व. निकृत्य गार्ध्र°; ज. चकर्त गार्ध्रपत्रेण । ग. घ. च. ज. व. भीष्मस्यामिततेजसः । ४८ क. दीप इवातुरः; ग. व. गिरिरिवाचलः; च. दीर्घ इवाचलः । ४९ ज. रथवाजिनः । इति चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

४६–४८ त्रयाणां स्थाने ग. घ. व.
ततः पार्थोऽग्निसंकाशं ज्वलमानमिवोरगम् ।
निचखान ललाटाग्रे भीष्मस्य शरमुत्तमम् ।
अमुह्यत तदा भीष्मस्तस्थौ दीर्घमिवाम्बरम् ॥
व. °मिवान्तरम् ॥

## पञ्चषष्टितमोऽध्यायः ६५

ततो विनद्य युद्धार्थमुपस्थितेन दुर्योधनेन सहार्जुनस्य युद्धम् ॥ १ ॥ तद्रक्षार्थं महता जवेनाभिपततो विकर्णस्य गजमेकेन शरेण निपात्य दुर्योधनस्य वक्षसि वज्रोपमेन शरेण ताडनम् ॥ २ ॥ ततो युद्धाद्द्रवतस्तस्यार्जुनेन बाहुस्फोटनपूर्वकं निर्भर्त्स्य पुनर्युद्धायाह्वानम् ॥ ३ ॥

**वैशम्पायन उवाच—**

भीष्मे तु संग्रामशिरो विहाय
पलायमाने धृतराष्ट्रपुत्रः ।
उत्सृज्य केतुं विनदन्महात्मा
धनुर्विगृह्यार्जुनमाससाद ॥ १ ॥

स भीमधन्वानमुदग्रवीर्यं
धनञ्जयं शत्रुगणे चरन्तम् ।
आकर्णपूर्णायतचोदितेन
विव्याध भल्लेन ललाटमध्ये ॥ २ ॥

स तेन बाणेन समर्पितेन
जाम्बूनदाग्रेण सुसंहितेन ।
रराज राजन्महनीयकर्मा
यथैकपर्वा रुचिरैकशृङ्गः ॥ ३ ॥

अथास्य बाणेन विदारितस्य
प्रादुर्बभूवासृगजस्रमुष्णम् ।
स तस्य जाम्बूनदपुङ्खचित्रो
भित्त्वा ललाटं सुविराजते स्म ॥ ४ ॥

---

चित्रसेनश्चित्ररथः ॥ ३७ ॥ रणनिर्हारान्संग्राममग्नान् । निर्दारानिति वा पाठः । संसक्तान्परिष्वक्तान्पुञ्जीकृतानित्यर्थः ॥ ३८ ॥ दारुणानां प्राणापहारकाणाम् ॥ ३९ ॥ अन्तरमवकाशः ॥ ४० ॥ समार्पयद्बाणमिति शेषः । विवृतं छिद्रम् ॥ ४५ ॥ गृहीत्वा धृत्वा । दीर्घं सुचिरम् आतुरो व्याधित इव ॥ ४८ ॥ रक्षमाणो रक्षन् ॥ ४९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ सर्व० ] कूबरं रथयुगन्धरम् ॥ ४८ ॥ अपोवाह अपसारयामास ॥ ४९ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि. प. चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ विरो० ] अतीव अतिशयितः ॥ ३२ ॥ रणनिर्दारणे शरणे ॥ ३८ ॥ वारुणानां वरुणदत्ततूणसंबन्धिनाम् ॥३९॥ विवृतं छिद्रम् ॥४५॥ स पीडितः; समाहि(?ह)तः (च) ॥ ४८ ॥ उपदेशं सारथिकर्तव्यम् ॥ ४९ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ विष० ] विवरं (वृतं) छिद्रम् समार्पयन् समागमत् ॥ ४५ ॥ रथकूबरं युगन्धरं गृहीत्वा अवष्टभ्य ॥४८॥ उपदेशमनुसृत्य सारथीनामिति शेषः ॥ ४९ ॥

इति श्रीमहाभारतविषमपदविवरणे विरा० चतुःषष्टितमोऽध्यायः ॥६४॥

[ नील० ] धृतराष्ट्रपुत्रो दुर्योधन उत्सृज्य उन्मुच्य केतुं पताकाम् ॥ १ ॥ एकश्रृङ्गः पर्वतो यथा एकेन पर्ववता दीर्घवंशेन एकः पर्वा यस्मिन्निति समासः मतुब्लोप आर्षः ॥ ३ ॥ असृक् रक्तम् ॥ ४ ॥

[ अर्जु० ] उत्सृज्य केतुं ध्वजमुत्तानं कृत्वा ॥ १ ॥ उदग्रवीर्यं बहुलपराक्रमम् । तदेव पराक्रमस्य बाहुल्यं यद् भिन्नशिक्षाजन्यत्वम् । 'उदग्रं बहुलं बहु' इति कोषः ॥ २ ॥ रजनीयकर्मा रजनीयं रञ्जनीयं कर्म यस्य सः महनीयकर्मेत्यपि दृश्यते पाठः । एकपर्वा गण्डकः पादपर्वत इत्यर्थः ॥ ३ ॥

[ चतु० ] विगृह्य अर्जुनार्जुन मया सह युध्यस्वेत्याक्रुश्य ॥ १ ॥ उदग्रवीर्यं बहुपराक्रमम् । अस्त्रज्ञानां वैविध्याद्वीर्यबाहुल्यम् । 'उदग्रं बहुलं बहु' इत्यमरः ॥ २ ॥ सुसंशितेन अतितीक्ष्णेन । पाठान्तरे तिर्यक्पातेन । एकपर्वा नीलगिरिरेकस्य श्रीपुरुषोत्तमस्य पर्व महोत्सवो यस्मिन्निति रुचिरैकशृङ्ग इत्यभूतोपमा । एकपर्वा गण्डक इति केचित् ॥ ३ ॥ सेति प्रक्रम्यमानमालाविशेषणम् । अतिचित्रा अत्याश्चर्यरूपा । ननु किमत्र दृष्टान्त (?) सिद्धान्तेनेत्याह–जाम्बूनदेति । जाम्बूनदपुष्पं रक्तकाञ्चनपुष्पं तद्वच्चित्रा मनोरमा । यद्वा चित् ज्ञानं त्राति स्वनिरूपणाधीननिरूपणं करोतीति चित्रा विषया जाम्बूनदपुष्पवद्विषया इन्द्रियग्राह्येत्यर्थः ॥ ४ ॥

[ सर्व० ] उत्सृज्य उन्मुच्य केतुं पताकाम् ॥ १ ॥ एकशृङ्गः पर्वतो यथा एकेन पर्ववता दीर्घवंशेन । एकं पर्व यस्मिन्निति समासः । मतुब्लोप आर्षः ॥ ३ ॥ असृक् रक्तम् ॥ ४ ॥

[ विरो० ] महनीय २ रजनीय । अर । एकपर्वा गण्डकः (दे) ॥ ३ ॥

---

१ च. ज. उत्सृज्य चापं । ज. स्वयं विगृह्या° । २ व. °मुदारवीर्यं । क. जाम्बूनदाभेन । ३ व. सुपुङ्खितेन; ज. सुशंसितेन । क. द्वितीयार्धस्थाने रराज पार्थो रुधिरं क्षरन्वै यथैकरश्मिर्भगवान्दिवार्कः । व. राजन्रजनीयकर्मा । ४ क. च. द्वितीयार्धस्थ.ने—सा तस्य जाम्बूनदपुष्पचित्रा मालेव भाराङभि- हतस्तरस्वी; व. स तस्य जाम्बूनदपुष्पचित्रा विराजते स्म स्रगिव कण्ठसक्ता; स तस्य जाम्बूनदचित्रमाल्या मालेव चित्राभिविराजते स्म; ज. स तस्य जाम्बूनदपुष्पचित्रा मालेव चित्रापि विराजते स्म ।

स तेन बाणाभिहतस्तरस्वी
दुर्योधनेनोद्धतमन्युवेगः ।
शरानुपादाय विषाग्निकल्पा-
न्विव्याध राजानमदीनसत्त्वः ॥ ५ ॥
दुर्योधनश्चापि तमुग्रतेजाः
पार्थश्च दुर्योधनमेकवीरः ।
अन्योन्यमाजौ पुरुषप्रवीरौ
समौ समाजग्मतुराजमीढौ ॥ ६ ॥
ततः प्रभिन्नेन महागजेन
महीधराभेन पुनर्विकर्णः ।
रथैश्चतुर्भिर्गजपादरक्षैः
कुन्तीसुतं जिष्णुमथाभ्यधावत् ॥ ७ ॥
तमापतन्तं त्वरितं गजेन्द्रं
धनञ्जयः कुम्भविभागमध्ये ।
आकर्णपूर्णेन महायसेन
बाणेन विव्याध महाजवेन ॥ ८ ॥
पार्थेन सृष्टः स तु गार्ध्रपत्र
आपुङ्खदेशात् प्रविवेश नागम् ।
विदार्य शैलप्रवरं प्रकाशं
यथाऽशनिः पर्वतमिन्द्रसृष्टः ॥ ९ ॥
शरप्रतप्तः स तु नागराजः
प्रवेपिताङ्गो व्यथितान्तरात्मा ।
संसीदमानो निपपात मह्यां
वज्राहतं शृङ्गमिवाचलस्य ॥ १० ॥
निपातिते दन्तिवरे पृथिव्यां
त्रासाद्विकर्णः सहसाऽवतीर्य ।
तूर्णं पदान्यष्टशतानि गत्वा
विविंशतेः स्यन्दनमारुरोह ॥ ११ ॥
निहत्य नागं तु शरेण तेन
वज्रोपमेनाद्रिवराम्बुदाभम् ।
तथाविधेनैव शरेण पार्थो
दुर्योधनं वक्षसि निर्बिभेद ॥ १२ ॥
ततो गजे राजनि चैव भिन्ने
भग्ने विकर्णे च सपादरक्षे ।
गाण्डीवमुक्तैर्विशिखैः प्रणुन्ना-
स्ते योधमुख्याः सहसाऽपजग्मुः ॥ १३ ॥
दृष्ट्वैव पार्थेन हतं च नागं
योधांश्च सर्वान्द्रवतो निशम्य ।
रथं समावृत्य कुरुप्रवीरो
रणात्प्रदुद्राव यतो न पार्थः ॥ १४ ॥
तं भीमरूपं त्वरितं द्रवन्तं
दुर्योधनं शत्रुसहोऽभिषङ्गात् ।
प्रास्फोटयद्योद्धुमनाः किरीटी
बाणेन विद्धं रुधिरं वमन्तम् ॥ १५ ॥

[विष०] रजनीयं रञ्जनीयं कर्म यस्य स रजनीयकर्मा निर्मलचरित्रः । रजनी रञ्जनी तथा ॥ ३ ॥ एकं पर्व संधिः ग्रन्थिर्विद्यते यस्याऽसौ एकपर्वा गण्डकः खड्गी जीवविशेषः ललाटे रुचिरमेकं शृङ्गं विद्यते यस्य सः । अन्येऽरण्यगजमहिषादयो द्विपर्वाणो भवन्ति संधिद्वययुक्ता भवन्ति ॥ ३ ॥

[नील०] महायसेन महाफलकेन ॥ ८ ॥ अपजग्मुः पलायनं कृतवन्तः ॥ १३ ॥ अभिषङ्गात् पराभवात् द्रवन्तं आलक्ष्य प्रास्फोटयत् आस्फोटं बाहुशब्दं कृतवान् ॥ १५ ॥

[अर्जु०] आजमीढौ अजमीढदेशजौ ॥ ६ ॥ सृष्टः प्रयुक्तः । आपुङ्खं पुङ्खाग्रपर्यन्तम् ॥ ९ ॥ प्राक्ष्वेडयत् सिंहनादं कृतवान् ॥ १५ ॥

[चतु०] उद्धतः उद्रिक्तः मन्युवेगः क्रोधावेशो यस्य सः ॥ ५ ॥ समा समकालं तुल्यं वा ॥ ६ ॥ प्रभिन्नेन मत्तेन । पुनरित्यनेन……विकर्णो दुर्योधनभ्राता ॥ ७ ॥ कुम्भयोर्विभागो यस्मात्तन्मध्ये ॥ ८ ॥ विविंशतेर्भ्रातुः ॥ ११ ॥ अम्बुदाभं क्षरन्मदतया ॥ १२ ॥ नन्वनन्तरं किं वृत्तमित्यत आह—तत इति । अगजे गजाभावे सति । हते गजे इति केचित्पठन्ति । तथा भग्ने ॥ १३ ॥ समावृत्य निवृत्य । यतो यत्र ॥ १४ ॥ शत्रुसहोऽर्जुनस्याभिषङ्गात्परिष्वङ्गात्सांनिध्याद्द्रवन्तं भीतरूपं वा प्राक्षेपयत् प्राक्षिपत् ॥ १५ ॥

[सर्व०] आजमीढौ अजमीढवंशोद्भवौ ॥ ६ ॥ अभिषङ्गात् पराभवतः प्रास्फोटयन् आस्फोटं बाहुशब्दं कृतवान् ॥ १५ ॥

६ व. ज. समाजग्मतुरा° । ७ च. तस्मिन्प्र° । ८ व. सहसा गजेन्द्रं । क. कुंभललाटमध्ये । क. दृढायसेन बाणेन । क. विव्याध भृशं तु वीरः । ९ व. ज. शैलप्रवरप्रकाशं । १० व. प्रतापिताङ्गो व्य° । ग. घ. सुगाढविद्धो नि° ; व, स गाढ विद्धो नि° । १२ व. वज्रोपमेनाप्रमितप्रभावः । व. ण. तथाविधेनेव । १३ क. हते गजे । १४ क. व. च. ग. घ. दृष्ट्वै बाणेन । क. सर्वान्नृपतिर्निरीक्ष्य । व. रथं समावर्त्य । १५ क. ज. तं भीतरूपं । व. शत्रुसहो निपङ्गी; क. शत्रुगणावमर्दी । व. प्राक्ष्वेडयद्यो°; ज. प्राक्षेपयद्यो°; क. अन्वाह्वयद्यो° । व. ज. बाणेन विद्धा ।

अर्जुन उवाच—

विहाय कीर्तिं विपुलं यशश्च
युद्धात्परावृत्य पलायसे किम् ।
न तेऽद्य तूर्याणि समाहतानि
तथैव राज्यादवरोपितस्य ॥ १६ ॥
युधिष्ठिरस्यास्मि निदेशकारी
पार्थस्तृतीयो युधि संस्थितोऽस्मि ।
तदर्थमावृत्य मुखं प्रयच्छ
नरेन्द्र वृत्तं स्मर धार्तराष्ट्र ॥ १७ ॥
मोघं तवेदं भुवि नामधेयं
दुर्योधनेतीह कृतं पुरस्तात् ।
न हीह दुर्योधनता तवास्ति
पलायमानस्य रणं विहाय ॥ १८ ॥
न ते पुरस्तादथ पृष्ठतो वा
पश्यामि दुर्योधन रक्षितारम्
अपेहि युद्धात्पुरुषप्रवीर
प्राणान्प्रियान्पाण्डवतोऽद्य रक्ष ॥ १९ ॥

इति श्रीमहाभारते विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

---

[ विरो० ] विभागः संधिः ॥ ८ ॥ अभिषङ्गात् कोपात् । प्राक्ष्वेडयत् रूक्षमुक्तवान् ॥ १५ ॥

[ विष० ] अजमीढो नाम राजा तस्याऽन्वये जातौ आजमीढौ ॥ ६ ॥ प्राक्ष्वेडयत् विवृत्य बहु समाह्वयत् शूरगर्जनं कुर्वन् ॥ १५ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ नील० ] तूर्याणि जयवाद्यानि तथैवेत्यादि उत्तरान्वयि ॥ १६ ॥ तृतीयः पार्थः पृथासुतोऽर्जुनोऽस्मि वृत्तं द्यूतादिष्वधर्मम् ॥ १७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ अर्जु० ] विहाय कीर्त्तिं विपुलं यशश्च पुण्यश्लाघनं कीर्तिः, विद्याशिल्पादिश्लाघनं यत्तद्यश इति भेदः । प्रकारान्तरं तु पूर्वमेव व्याख्यातम् ॥ १६ ॥ निदेशकारी आज्ञाकारी ॥ १७ ॥ न चेत् दुर्योधनता सुयोधनतेति भावः ॥ १८ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ चतु० ] दानादिप्रभवा कीर्तिः शौर्यादिप्रभवं यश इति भेदः । 'शौर्यश्लाघा भवेत्कीर्तिः यशः शत्रुवधे प्रथा' इति वा भेदः ॥ १६ ॥ आवृत्य निवृत्य नरेन्द्राणां वृत्तं युद्धे प्राणत्यागलक्षणम् । हे नरेन्द्रेत्युपहासे वृत्तं द्यूतजयादि ॥ १७ ॥ मोघमिति ॥ १८ ॥ युद्धेन रक्षितारमित्यन्वयः । परैहि पलायेथाः । यद्वा युद्धे न परैहि आवृत्य प्राणान्रक्षाद्येति ॥ १९ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ सर्व० ] तूर्यं जयवाद्यम् ॥ १६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ विरो० ] कीर्तिः समीचीनत्वेनाभिधानम् । यशः समीचीनत्वेन लोकानां ज्ञानम् ॥ १६ ॥ दुर्योधनाह्वानम् ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

[ लक्षा० ] तदर्थमाहृत्येत्यत्र तदर्थं धर्मराजस्य द्रव्यम् ॥ १७ ॥ दुर्योधनः सन्निकृतिप्रधानः सन् त्वं दुर्योधनः, नाममात्रेण दुर्योधनः ॥ १८ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६९ ॥

---

१६ ज. विपुलां यशश्च; क. च. यशश्च लोके । क. द्वितीयार्धस्थाने—न नन्दयिष्यन्ति तवाहतानि तूर्याणि युद्धादवरोपितस्य । व. समाहतानि यथावदुद्यान्ति गतस्य युद्धात्; समाहतानि शुभानि वाद्यन्ति गतस्य युद्धात् । ज. यथावदुर्व्यां विगतस्य युद्धे; ग. घ. व. यथा च दुष्यन्ति गतस्य युद्धे । ग. घ. व. श्लोकान्ते—न भोक्ष्यसे चाद्य महीं समग्रां यानानि वस्त्राणि च भोजनानि । युद्धात्पलायन्धृतराष्ट्रपुत्रः सुवर्णमालाम्बरकुण्डलानि, इत्यधिकः श्लोकः । १७ व. सङ्गतोऽस्मि । १८ ग. घ. व. दुर्योधनेति प्रथितं पुरस्तात् । क. तवाद्य । १९ ज. परैहि यु°; अपैहि यु° । क. द्वितीयार्धस्थाने—परीप्स युद्धेन कुरुप्रवीर प्राणान्मा वाणवलाभितप्तान् । व. प्राणान्मया बाहुबलातिमृष्टान् । इति पञ्चषष्टितमोऽध्यायः ॥

## षट्षष्टितमोऽध्यायः ६६

युद्धाय प्रतिनिवर्तमानस्य दुर्योधनस्य सर्वैरनुगमनम् ॥ १ ॥ सर्वैः सहार्जुनस्य तुमुलं युद्धम् ॥ २ ॥ अर्जुनेन संमोहनास्त्रेण भीष्मवर्जं सर्वेषु मोहितेषु उत्तरेण द्रोणादीनां वस्त्रापहरणम् ॥ ३ ॥ ततो लब्धसंज्ञानां कुरूणां भीष्मवचसा स्वनगरप्रस्थानम् ॥ ३ ॥ अर्जुनेन भीष्मादीनभिवाद्य दुर्योधनस्य किरीटच्छेदनम् ॥ ४ ॥

**वैशम्पायन उवाच—**

आहूयमानश्च स तेन संख्ये
महात्मना वै धृतराष्ट्रपुत्रः ।
निवर्तितस्तस्य गिराङ्कुशेन
महागजो मत्त इवाङ्कुशेन ॥ १ ॥
सोऽमृष्यमाणो वचसाऽभिमृष्टो
महारथेनातिरथस्तरस्वी ।
पर्याववर्ताथ रथेन वीरो
भोगी यथा पादतलाभिमृष्टः ॥ २ ॥
तं प्रेक्ष्य कर्णः परिवर्तमानं
निवर्त्य संस्तभ्य च विद्धगात्रम् ।
दुर्योधनस्योत्तरतोऽभ्यगच्छ-
त्पार्थं नृवीरो युधि हेममाली ॥ ३ ॥
भीष्मस्ततः शान्तनवो विवृत्य
हिरण्यकक्षस्त्वरयाऽभिषङ्गी ।
दुर्योधनं पश्चिमतोऽभ्यरक्ष-
त्पार्थान्महाबाहुरधिज्यधन्वा ॥ ४ ॥
द्रोणः कृपश्चैव विविंशतिश्च
दुःशासनश्चैव विवृत्य शीघ्रम् ।
सर्वे पुरस्ताद्वितितोरुचापा
दुर्योधनार्थं त्वरिताऽभ्युपेयुः ॥ ५ ॥
स तान्यनीकानि निवर्तमाना-
न्यालोक्य पूर्णौघनिभानि पार्थः ।
हंसो यथा मेघमिवापतन्तं
धनञ्जयः प्रत्यतपत्तरस्वी ॥ ६ ॥
ते सर्वतः संपरिवार्य पार्थ-
मस्त्राणि दिव्यानि समाददानाः ।
ववर्षुरभ्येत्य शरैः समन्ता-
न्मेघा यथा भूधरमम्बुवेगैः ॥ ७ ॥
ततोऽस्त्रमस्त्रेण निवार्य तेषां
गाण्डीवधन्वा कुरुपुङ्गवानाम् ।
संमोहनं शत्रुसहोऽन्यदस्त्रं
प्रादुश्चकारैन्द्रिरपारणीयम् ॥ ८ ॥
ततो दिशश्चानुदिशो विवृत्य
शरैः सुधारैर्निशितैः सुपत्रैः ।
गाण्डीवघोषेण मनांसि तेषां
महाबलः प्रव्यथयाञ्चकार ॥ ९ ॥
ततः पुनर्भीमरवं प्रगृह्य
दोर्भ्यां महाशङ्खमुदारघोषम् ।
व्यनादयत्स प्रदिशो दिशः खं
भुवं च पार्थो द्विषतां निहन्ता ॥ १० ॥
ते शङ्खनादेन कुरुप्रवीराः
संमोहिताः पार्थसमीरितेन ।
उत्सृज्य चापानि दुरासदानि
सर्वे तदा शान्तिपरा बभूवुः ॥ ११ ॥

[ नील० ] आहूयेति ॥ १ ॥ पर्याववर्त परावृत्तवान् ॥ २ ॥ नृवीरो दुर्योधनः ॥ ३ ॥ अभिषङ्गी शत्रुपराजयसमर्थः ॥ ४ ॥ त्वरिताः अभ्युपेयुः सन्धिरार्षः ॥५॥ हंसः सूर्यः प्रत्यतपत् प्रतितापितवान् ॥ ६ ॥ विवृत्य व्याप्य ॥ ९ ॥ शान्तिपराः उपरतचित्ताः ॥ ११ ॥

[ अर्जु० ] अभिमृष्टः तिरस्कृतः ॥ २ ॥ विधृत्य बद्ध्वा हिरण्यकक्षाः सुवर्णकक्षाः ॥ ४ ॥

[ चतु० ] अभिसृष्टो लङ्घितो मर्दित इति यावत् । भोगी सुखी परस्वनासहिष्णुरिति यावत् ॥ २ ॥ न ते पुरस्तादथ पृष्ठतोऽपीत्युक्ता नष्टाः कर्णाद्याः यदकुर्वंस्तदाह—तं प्रेक्ष्य कर्ण इति ॥ ३ ॥ हंसः कलहंसः ॥ ६ ॥ शत्रून्सहत इति शत्रुसहोऽर्जुनः । ऐन्द्रं वज्रम् । ऐन्द्रिरिति पाठेऽर्जुनः ॥ ८ ॥ शान्तिपराः स्वरक्षणपराः ॥ ११ ॥

[ सर्व० ] अभिषङ्गी शत्रुपराभवसमर्थः ॥ ४ ॥ हंसः सूर्यः ॥ ६ ॥ विवृत्य व्याप्य ॥ ९ ॥

१ व. युद्धे पार्थेन राजा धृतराष्ट्रपुत्रः; ज. महामना वै । व. निवर्तमानस्य । ज. वचोऽङ्कुशेन । २ व. ण. वचनाभिसृष्टो । ज. पर्यावृतस्तेन रथेन । व. रथेन राजा । ३ व. विद्धगात्रः । क. दुर्योधनं दक्षिणतोऽन्वरक्षत्पार्थान्महाबाहुरधिज्यधन्वा । ४ ज. हिरण्यकक्षांस्तुरगान्विगृह्य; क. ग. घ. व. निवृत्य हिरण्यकक्षांस्त्वरयंस्तुरङ्गान् । व. पश्चिमतो ररक्ष । ५ व. ज. निवर्त्य शीघ्रम् । ज. ण. वितितेषु चापात्; पुरस्ताद्धि ततः स चापात् । क. °रतात्प्रणिधाय बाणान् । व. दुर्योधनार्थे । व. ज. त्वरया । ६ व. ज. ण. प्रत्यपतत्तरस्वी । ७ ण. व. त्रि. मम्बुवेगैः । ८ क. च. चकारैन्द्रमवारणीयम् । ९ क. सुघोरैर्निशितैः सुपुङ्खैः ।

तथा विसंज्ञेषु च तेषु पार्थः
स्मृत्वा च वाक्यानि तथोत्तरायाः ।
निर्याहि मध्यादिति मत्स्यपुत्र-
मुवाच यावत्कुरवो विसंज्ञाः ॥ १२ ॥
आचार्यशारद्वतयोः सुशुक्ले
कर्णस्य पीतं रुचिरं च वस्त्रम् ।
द्रौणेश्च राज्ञश्च तथैव नीले
वस्त्रे समादत्स्व नरप्रवीर ॥ १३ ॥
भीष्मस्य संज्ञां तु तथैव मन्ये
जानाति सोऽस्त्रप्रतिघातमेषः ।
एतस्य वाहान् कुरु सव्यतस्त्व-
मेवं हि यातव्यममूढसंज्ञैः ॥ १४ ॥
रश्मीन्समुत्सृज्य ततो महात्मा
रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां
तूर्णं पुनः स्वं रथमारुरोह ॥ १५ ॥
ततोऽन्वशासच्चतुरः सदश्वान्
पुत्रो विराटस्य हिरण्यकक्ष्यान् ।
ते तद्व्यतीयुर्ध्वजिनामनीकं
श्वेता वहन्तोऽर्जुनमाजिमध्यात् ॥ १६ ॥

तथाऽनुयान्तं पुरुषप्रवीरं
भीष्मः शरैरभ्यहनत्तरस्वी ।
स चापि भीष्मस्य हयान्निहत्य
विव्याध पार्थो दशभिः पृषत्कैः ॥ १७ ॥
ततोऽर्जुनो भीष्ममपास्य युद्धे
विद्ध्वाऽस्य यन्तारमरिष्टधन्वा ।
तस्थौ विमुक्तो रथवृन्दमध्या-
न्मेघं विदार्येव सहस्ररश्मिः ॥ १८ ॥
लब्ध्वा हि संज्ञां तु कुरुप्रवीरः
पार्थं निरीक्ष्याथ सुरेन्द्रकल्पम् ।
रणे विमुक्तं स्थितमेकमाजौ
स धार्तराष्ट्रस्त्वरितं बभाषे ॥ १९ ॥
अयं कथं वै भवतो विमुक्त-
स्तथा प्रमथ्नीत यथा न मुच्येत् ।
तमब्रवीच्छान्तनवः प्रहस्य
क्व ते गता बुद्धिरभूत् क्व वीर्यम् ॥ २० ॥
शान्तिं परां प्राप्य यदा स्थितोऽभू-
रुत्सृज्य बाणांश्च धनुर्विचित्रम् ।
न त्वेष बीभत्सुरलं नृशंसं
कर्तुं न पापेऽस्य मनो विशिष्टम् ॥ २१ ॥

[विरा०] विवृत्य रुद्ध्वा (दे) अविध्य २ अरिष्ट (च) ॥ ४ ॥

[विष०] हन्ति गच्छतीति हंसः सूर्यः । 'हनहिंसागत्योः' । अर्जुनपक्षे मारणाऽर्थः । हंसो गमनाद्वायुर्वा ॥६॥ बूत्कारेण हनूमतः प्रतिहतश्रोत्रा विचेष्टाङ्गकाः केचिच्छङ्खरवेण पेतुरपरे ज्यानादसंमूर्छिताः ॥ केचिद्दर्शनतोऽपि यान्ति चकिताः केचिच्च बाणाहता इत्थं कौरवसैनिका हरिसुतक्षोभाद्दिशो भेजिरे ॥ क्षेपकोऽयम् । संमोहिताः सुप्ता मूर्च्छिताः ॥ ११ ॥

[नील०] अमूढसंज्ञैर्भीष्मादिभिः सव्यतः कृतैरुपलक्षितेन भवता यातव्यं गन्तव्यम् ॥ १४ ॥ अयमर्जुनो भवतो विसंज्ञान् युष्मान् यथा न मुच्येत् न मोचनं स्यात्तथा प्रमथ्नीत उपमृद्यात् न तु मृदितवानिति भावः (?) ॥२०॥ शान्तिं नष्टचित्ततां नृशंसं कर्तुं संमूढान् मारयितुं न अलं न योग्यः । तत्र हेतुः न पापेऽस्य मनोऽस्ति यतो विशिष्टं श्रेष्ठम् ॥ २१ ॥

[चतु०] विसंज्ञा अचेतनाः । निर्याहीत्यादिपद्यार्धस्य स्थाने वैराटिमाभाष्येति पद्यार्धं कचित्पुस्तके ॥ १२ ॥ मदुक्तोऽयं प्राचीन आचार इत्याह—एवं हीति । अमूढसंज्ञैः बुद्धिमद्भिः । अस्माभिरिति वा पाठः ॥ १४ ॥ तद्रथम् अर्जुनरथम् ॥ १५ ॥ सोऽतिरथत्वेन प्रथितः ॥ १७ ॥ तान्कर्णादीन् भरतयुद्धादिति शेषः (?) । बुद्धिर्निश्चयात्मिकान्तःकरणवृत्तिः । वीर्यं क्षात्रम् । बाहुसामर्थ्यम् ॥ २० ॥ आश्वस्य दीर्घमुच्छ्वस्य यदा शान्तिमिव शान्तिं मरणमिव आस्थितः प्राप्तोऽभूस्त्वम् । ननु तर्हि कथं मां न हतवानित्यत आह—नत्वेष इति । न समर्थ इत्यन्वयः । तत्र हेतुः—न पाप इति ॥ २१ ॥

१२ व. ज. तदोत्तरायाः । १३ व. सुश्लक्ष्णे । १४ ण. प्रतिघातमेव । व. यातव्यममूढसंज्ञे (ज्ञम्) १५ क. नानाविधान्यद्भुतवर्णकानि. । १६ व. सुवर्ण-कक्ष्यान् । व. °माजिमध्ये । १७ क. विव्याध भीष्मं । १८ व. विध्वस्य; क. व. °ध्याद्राहुं । १९ क. °ज्ञां पुरुष प्रवीरः । ज. रथाद्विमुक्तं; वि. रणात्प्रमुक्तं स्थितमेकवीरं स धार्तराष्ट्रस्त्वरितो; क. व. रणात्प्रमुक्तं पुरुषप्रवीरं । २० क. व. कथंचिद्भवतां विमुक्तस्तं वै प्रमथ्नीत; ण. कथंस्विद्भवतो विमुक्तास्तथा स मथ्नीत । व. क्व ते तदा बुद्धि° । २१ व. शान्तिं परामृश्य यदा । क. नत्वे व वी° ; ण. व. नन्वेष । क. ग. घ. च. व. मनो निविष्टम् ।

१ स्वं रथमित्यस्य स्थाने तद्रथमिति पाठोऽस्य संमतः । २ परां प्राप्येत्यत्र पराश्वस्य इति वि० मं० प्रदर्शितपाठादरेणेदं व्याख्यानम् ।

त्रैलोक्यहेतोर्न जहेत्स्वधर्मं
सर्वे न तस्मान्निहता रणेऽस्मिन् ।
क्षिप्रं कुरून् याहि कुरुप्रवीर
विजित्य गाश्च प्रतियातु पार्थः ।
मा ते स्वकोऽर्थो निपतेत मोहा-
त्तत्संविधातव्यमरिष्टबन्धम् ॥ २२ ॥

वैशम्पायन उवाच—

दुर्योधनस्तस्य तु तन्निशम्य
पितामहस्यात्महितं वचोऽथ ।
अतीतकामो युधि सोऽत्यमर्षी
राजा विनिःश्वस्य बभूव तूष्णीम् ॥ २३ ॥
तद्भीष्मवाक्यं हितमीक्ष्य सर्वे
धनञ्जयाग्निं च विवर्धमानम् ।
निवर्तनायैव मनो निदध्यु-
र्दुर्योधनं ते परिरक्षमाणाः ॥ २४ ॥

तान्प्रस्थितान्प्रीतमनाः स पार्थो
धनञ्जयः प्रेक्ष्य कुरुप्रवीरान् ।
आभाषमाणोऽनुनयं मुहूर्तं
वचोऽब्रवीत्संपरिहृत्य भूयः ॥ २५ ॥
पितामहं शान्तनवं च वृद्धं
द्रोणं गुरुं च प्रणिपत्य मूर्ध्ना ।
द्रौणिं कृपं चैव कुरूंश्च मान्या-
ञ्छरैर्विचित्रैरभिवाद्य चैव ॥ २६ ॥
दुर्योधनस्योत्तमरत्नचित्रं
चिच्छेद पार्थो मुकुटं शरेण ।
आमन्त्र्य वीरांश्च तथैव मान्या-
न्गाण्डीवघोषेण विनाद्य लोकान् ॥ २७ ॥
स देवदत्तं सहसा विनाद्य
विदार्य वीरो द्विषतां मनांसि ।
ध्वजेन सर्वानभिभूय शत्रून्
सहेममालेन विराजमानः ॥ २८ ॥

[सर्व०] अमूढसंज्ञैर्भीष्मादिभिः सव्यतः कृतैरुपलक्षितेन भवता यातव्यं गन्तव्यम् ॥ १४ ॥

[विरो०] परो प्राप्य २ पराश्वस्य च आश्रित्य च (?)। धनुश्चित्रं २ धनुर्निषङ्गान (दे) ॥ २१ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[विष०] अरिष्टं रिष्टरहितं धनुर्यस्य सः । शुभकार्मुक इत्यर्थः ॥ १८ ॥

[लक्षा०] निर्याहि वाहानित्यत्र वहन्ति रथिन इति वाहाः परसेनारथाः । तान्प्रति ॥ १२ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षाभरणे विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[नील०] अरिष्टबन्धं कल्याणानुबन्धि कर्म ॥ २२ ॥ परिहृत्य परिवृत्य ॥ २५ ॥ शरैरेव पाददेशे पातितैरभिवाद्य मान्यान् बाह्लीकसोमदत्तादीन् ॥ २६ ॥ मुकुटं चिच्छेदेति दुर्योधनस्य मरणमेव सूचितम् ॥ २७ ॥ हेममालया सहितेन सहेममालेन ध्वजेन ॥ २८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[अर्जु०] अतीतकामोऽप्राप्तमनोरथः ॥ २३ ॥

[चतु०] ननु भरतः किमिति न हतवानत आह—त्रैलोक्येति । यदि त्रैलोक्यहेतोः स्वधर्मं न जहेत्तर्हि किं भूखण्डमात्रहेतोः स्वधर्मं जहेत् । नन्वधुना किं कर्तव्यमित्यत आह—क्षिप्रमिति । स्वकोऽर्थो राज्यलक्षणः निपतेत नश्येत् मोहादनवधानात् । तद्राज्यं संविधातव्यं रक्षितव्यं; मा तेऽद्य कोप इति पाठे अद्यतनकोपो मा निपतेत् नश्येत् मोपतिष्ठतु तत्कोपनिपतनं संविधातव्यं रक्षितव्यम् ॥ २२ ॥ अतीतकामोऽप्राप्तमनोरथः ॥ २३ ॥ ईक्ष्य आलोच्य परिरक्षमाणाः रक्षन्तः ॥ २४ ॥ आभाषमाणः अनुययौ अनुसृतवान् । समुचितां गुरुवृत्तिं दर्शयन्नित्यर्थः ॥ २५ ॥ दुर्योधनस्य शिरोऽद्य मया न हतं भूभारहर्तुर्भगवतः श्रीवासुदेवस्य प्रीत्यर्थमेवेति भवन्तः पश्यन्तु इति दर्शयितुमिव दुर्योधनस्य मुकुटं पार्थश्चिच्छेदेत्यर्थः । मान्यान् सोमदत्तादीन् ॥ २७ ॥

[सर्व०] अरिष्टबन्धं कल्याणानुबन्धि कर्म ॥ २२ ॥ परिहृत्य परिवृत्त्य ॥ २५ ॥ देवदत्तः अर्जुनशङ्खः ॥ २८ ॥

इतिं श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

२२ क. जह्यान्न धर्मं त्रिदिवस्य हेतोः सर्वे तु तस्मान्न हता । व. सर्वे स्थितास्मो न हता रणेऽस्मिन् । युष्मान्समेतान्कुपितो न हन्यात्तस्मात्पुरं यांम स नोऽस्तु लाभः । मातेऽद्य कार्ये-°मरिष्टधन्वन् । २३ व. वचोऽर्थ्यम् । उत्तरार्धे घ. नीतानि वस्त्राणि च फाल्गुनेन समीक्ष्य राजा हृदि लज्जितश्च । २४ क. °क्यं हि निशम्य । ण. सर्वे । २५ क. °मनाः समर्थो धनंजयः सर्वकुरुप्रवीरः । ण. कुरून्प्रवीरान । अ. अभाषमाणोऽनुययौ मुहूर्तं संपूजयंस्तत्र कुरुप्रवीरान् । २६ °नवं महात्मा द्वाभ्यां शराभ्यामभिवाद्य वीरः द्रोणम् । च. सर्वाञ्छरैर्विं° । क. °वाद्य संख्ये । २७ क. आमन्त्र्य वीरोनुययौ मुहूर्तं गाण्डीवघोषेण निनद्य लोकम् । २८ ग. घ. ज. व. सहेमजालेन ।

दृष्ट्वा प्रयातांस्तु कुरून् किरीटी
हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम् ।
आवर्तयाश्वान् पशवो जितास्ते
याताः परे याहि पुरं प्रहृष्टः ॥ २९ ॥

देवास्तु दृष्ट्वा महदद्भुतं त-
द्युद्धं कुरूणां सह फाल्गुनेन ।
जग्मुर्यथास्वं भवनं प्रतीताः
पार्थस्य कर्माणि विचिन्तयन्तः ॥ ३० ॥

इति श्रीमहाभारते विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ६७

पार्थेन प्रणतान् कुरुसैनिकानाश्वास्योत्तरं प्रति पाण्डवप्रकाशनप्रतिषेधनपूर्वकं कौरवजयस्यात्मकृतत्वख्यापनचोदनम् ॥ १ ॥ उत्तरेणाप्रकाशनमङ्गीकृत्यापरस्यानङ्गीकारः ॥ २ ॥ शमीमागत्य कपिध्वजं विसर्ज्य शस्त्राणां यथास्थानं निधानं सिंहध्वजस्य पूर्ववेषस्य चोपादानं जयमाख्यातुमग्रे गोपालानां प्रेषणं स्वयमपराह्णे गमनं च ॥ ३ ॥

**वैशम्पायन उवाच—**

ततो विजित्य संग्रामे कुरून्स वृषभेक्षणः ।
समानयामास तदा विराटस्य धनं महत् ॥ १ ॥
गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वतः ।
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ॥ २ ॥
भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः ।
मुक्तकेशास्त्वदृश्यन्त स्थिताः प्राञ्जलयस्तदा ॥ ३ ॥
क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ।
ऊचुः प्रणम्य संभ्रान्ताः पार्थ किं करवाम ते ॥ ४ ॥

**अर्जुन उवाच—**

स्वस्ति व्रजत वो भद्रं न भेतव्यं कथञ्चन ।
नाहमार्तान् जिघांसामि भृशमाश्वासयामि वः ॥५॥

**वैशम्पायन उवाच—**

तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।
आयुःकीर्तियशोदाभिस्तमाशीर्भिरनन्दयन् ॥ ६ ॥
ततोऽर्जुनं नागमिव प्रभिन्न-
मुत्सृज्य शत्रून् विनिवर्तमानम् ।
विराटराष्ट्राभिमुखं प्रयान्तं
नाशक्नुवंस्तं कुरवोऽभियातुम् ॥ ७ ॥
ततः स तन्मेघमिवापतन्तं
विद्राव्य पार्थः कुरुमेघसैन्यम् ।
मत्स्यस्य पुत्रं द्विषतां निहन्ता
वचोऽब्रवीत्संपरिरभ्य भूयः ॥ ८ ॥

---

[ विष० ] कुरुप्रवीरान्बाह्लीकसोमदत्तप्रभृतीन् ॥ २५ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[ अर्जु० ] आवर्तय निवर्तय ॥ २९ ॥ देवास्तु दृष्ट्वा महदद्भुतं यत् युद्धं कुरूणां सह फाल्गुनेन । जग्मुर्यथास्वं भवनं प्रतीताः पार्थस्य कर्माणि विचिन्तयन्तः । पार्थेन सह कर्णादीनां युद्धं दृष्ट्वा इन्द्रादयो देवा यथास्वं यथा स्यादात्मीयं स्वस्थानतिक्रमेण भवनं गृहं जग्मुरिति योजना । किंभूता देवाः प्रतीतास्तुष्टा इत्यर्थः । भूभारनाशमर्जुनः सुखेन कर्तेति भावः । 'ख्याते हृष्टे प्रतीतश्च' इत्यमरः ॥ ३० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[ चतु० ] आवर्तयानुसरणान्निवर्तय ॥ २९ ॥ यथास्वं स्वानतिक्रमेण । प्रतीता हृष्टाः । 'ख्याते हृष्टे प्रतीतश्च' इत्यमरः ॥ ३० ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[ नील० ] वृषभेक्षणः श्रेष्ठदृष्टिः ॥ १ ॥ आपतन्तं पुंस्त्वमार्षम् ॥ ८ ॥

[ अर्जु० ] गोवृषभेक्षण इति । गोवृषभो गोश्रेष्ठः तस्य ईक्षणे इव ईक्षणे यस्य स तथा 'वृषभः श्रेष्ठवृषयोः' इति मेदिनिः ॥ १ ॥

[ सर्व० ] वृषभेक्षणः श्रेष्ठदृष्टिः ॥ १ ॥

[ विरो० ] वृषभः श्रेष्ठः ॥ १ ॥

---

२९ व. निवर्तयाश्वान् । इतिषट्षष्टितमोऽध्यायः ॥ ६६ ॥
१ व. कुरून्गोवृषभेक्षणः । २ व. गतेषु तेषु सर्वेषु—सर्वशः । ३ व. द्वितीयार्धस्थाने—मुक्तकेशा व्यदृश्यन्त दर्शिताः प्राञ्जलिस्थिताः । ४ व. द्वितीयार्धस्थाने—ऊचुः प्राञ्जलयः सर्वे पार्थ किं करवामहे; क. ऊचुः प्राञ्जलयः सर्वे पार्थ किं करवाम ह । ५ व. स्वस्था भवत भद्रं वो । व. सुखमाश्वासयामि वः । ६ व. तस्य तां सदयां । व. °यशोद्याभिस्तथाशीर्भिरनन्दयन्; °यशोभिश्च आशीर्भिश्चाभ्यनन्दयन्; क. °यशोभिस्ते तमाशीर्भिरवर्धयन् । ८ ज. ततः स तं मत्स्यपुत्रं पतन्तं; व. ततः स तन्मेघ इवातपान्ते । व. पार्थोऽथ कुरुप्रवीरान् । च. द्वितीयार्धस्थाने—ततः स तं सिंह इव प्रभूतं विद्राव्य पार्थः कुरुसैन्यमुग्रम् । क. °त्सपरिगृह्य राजन् ।

पितुः सकाशे तव तात सर्वे
वसन्ति पार्था विदितं तवैव ।
तान्मा प्रशंसेर्नगरं प्रविश्य
भीतः प्रणश्येद्धि स मत्स्यराजः ॥ ९ ॥
मया जिता सा ध्वजिनी कुरूणां
मया च गावो विजिता द्विषद्भ्यः ।
पितुः सकाशं नगरं प्रविश्य
त्वमात्मनः कर्म कृतं ब्रवीहि ॥ १० ॥

उत्तर उवाच—

यत्ते कृतं कर्म न पारणीयं
तत्कर्म कर्तुं मम नास्ति शक्तिः ।
न त्वां प्रवक्ष्यामि पितुः सकाशे
यावन्न मां वक्ष्यसि सव्यसाचिन् ॥ ११ ॥

वैशम्पायन उवाच—

स शत्रुसेनामवजित्य जिष्णु-
राच्छिद्य सर्वं च धनं कुरुभ्यः ।
श्मशानमागत्य पुनः शमीं ता-
मभ्येत्य तस्थौ शरविक्षताङ्गः ॥ १२ ॥
ततः स वह्निप्रतिमो महाकपिः
सहैव भूतैर्दिवमुत्पपात ।
तथैव माया विहिता बभूव
ध्वजं च सैंहं युयुजे रथे पुनः ॥ १३ ॥
विधाय तच्चायुधमाजिवर्धनं
कुरूत्तमानामिषुधीः शरांस्तथा ।

[ नील० ] सैंहं ध्वजं विराटीयं पूर्वं तत्र स्थापितम् ॥ १३ ॥ विधाय यथावत् स्थापयित्वा ॥ १४ ॥ वशं परवशतामास्थिताः प्राप्ताः ॥ १६ ॥

[ अर्जु० ] आचक्षध्वमिति गणकार्यमनित्यमिति विकरणालोपे सिद्धम् ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायां
वि० प० सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

९ ज. राज्ञः सकाशे । व. तन्मा प्रशंसेर्न°; न मां प्रशंसेर्न° । व. प्रणश्येन्न स मत्स्यराजः । १० क. एवं तु कामं नगरं; व.ज. प्रीतांस्तु कामं नगरं । ग. घ. व. द्वितीयार्धस्थाने—एवं च राज्ञो नगरं प्रविश्य त्वमात्मना कर्म कृतं वदेथाः । ११ क. वारणीयं तत्कर्म । ण. पितुः प्रकाशे । व. वक्ष्यसि नृप्रवीर । १२ क. तरसा विजित्य आच्छिंद्य । ज. विजित्य सर्वं च । १३ ग. घ. व. सकलाश्च ता वै । १४ क. ज. निधाय तच्चायुधमाजिमर्दनं; ग. विधाय तच्चायुधमायुवर्धनं; ण. विव्याध तच्चायुधमाजिवर्धनं । ज. °मिषुधीर्ध्वजांश्च; व. °मिषुधीन्ध्वजांश्च । क. नगरं प्रवेष्टुं । १५ व. विजित्य सर्वान्द्विषतां । ग.

प्रायात्स मत्स्यो नगरं प्रहृष्टः
किरीटिना सारथिना महात्मना ॥ १४ ॥
पार्थस्तु कृत्वा परमार्यकर्म
निहत्य शत्रून् द्विषतां निहन्ता ।
चकार वेणीं च तथैव भूयो
जग्राह रश्मीन् पुनरुत्तरस्य ॥
विवेश हृष्टो नगरं महामना
बृहन्नलारूपमुपेत्य सारथिः ॥ १५ ॥

वैशम्पायन उवाच—

ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः ।
हस्तिनापुरमुद्दिश्य सर्वे दीना ययुस्तदा ॥ १६ ॥
पन्थानमुपसङ्गम्य फाल्गुनो वाक्यमब्रवीत् ॥ १७ ॥
राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः ।
गोकुलानि महाबाहो वीर गोपालकैः सह ॥ १८ ॥
ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः ॥ १९ ॥
गच्छन्तु त्वरिताश्चेमे गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ २० ॥

वैशम्पायन उवाच—

अथोत्तरस्त्वरमाणः स दूता-
नाज्ञापयद्वचनात्फाल्गुनस्य ।
आचक्षध्वं विजयं पार्थिवस्य
भग्नाः परे विजिताश्चापि गावः ॥ २१ ॥

[ सर्व० ] सैंहं ध्वजं वैराटीयं तत्र स्थापितम् ॥ १३ ॥

[ विरो० ] ( अन्तरिता च २ विहितो हि गतौ ? । ) ततः फाल्गुनो वाक्यमब्रवीत् ॥ १७ ॥ कुरवो निवृत्ता गोकुलानि समानीतानि ॥ १८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

घ. व. विधाय वेषं च तथैव वेणीं; क. विधाय भूयश्च तथैव वेषं । क. तृतीयार्धस्थाने—बृहन्नलारूपमथो विधाय प्रायात्समत्स्यो नगरं प्रवेष्टुम् । व. नगरं महात्मा । व. बृहन्नलारूपधरो । १६ ज. ण. प्रभग्नाश्च समागताः; व. प्रभग्ना मौनमास्थिताः । क. शममास्थिताः । १८ व. जय पुत्र प्रत्यवेक्ष; व. जयपुत्र त्वमीक्षस्व । क. प्रपद्यस्व धनानीमानि सर्वशः । गोधनानि महाबाहो । १९ ग. आश्वासयित्वा च श्रीमान्प° । ज. पाययित्वापः प्रतिप्लाव्य । २० ज. त्वरितास्तत्र । २१ ज. भग्नाः परेषां ।

इत्येवं तौ भारतमत्स्यवीरौ
संमन्त्र्य संगम्य ततः शमीं ताम् ।
अभ्येत्य भूयो विजयेन तृप्ता-
वुत्सृष्टमारोपयतां स्वभाण्डम् ॥ २२ ॥

स शत्रुसेनामभिभूय सर्वा-
माच्छिद्य सर्वं च धनं कुरुभ्यः ।
वैराटिरायान्नगरं प्रतीतो
बृहन्नलासारथिना प्रवीरः ॥ २३ ॥

इति श्रीमहाभारते विराटपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ६८

विराटस्य स्वनगरप्रवेशः पौरैस्तत्संमाननं च ॥१॥ अन्तःपुरगतेन राज्ञा कुरूनभियातमुत्तरं श्रुत्वा तद्रक्षणाय योधप्रेषणम् ॥ २ ॥ अत्रान्तरे उत्तरप्रेषितैर्दूतैर्नगरमागत्य तद्विजयसमावेदनम् ॥ ३ ॥ ततः प्रहृष्टेन राज्ञा नगरालंकारायादिश्य कुमारानयनाय तूर्याणि राजकुमारादींश्च प्रस्थाप्य कङ्कं प्रति द्यूतप्रवर्तनचोदना ॥ ४ ॥ हृष्टेन राज्ञा देवितुमनिच्छतापि कङ्केन राज्ञोऽत्यन्ताभिनिवेशं ज्ञात्वा द्यूतप्रवर्तनम् ॥ ५ ॥ ततो राज्ञा 'पश्य मे पुत्रेण कुरवो जिताः' इतिस्ववचनमाकर्ण्य बृहन्नलासहायेनेतिब्रुवतो युधिष्ठिरस्य मुखे क्रोधादक्षेण ताडनम् ॥ ६ ॥ युधिष्ठिरस्य नासातो रुधिरस्रावः, द्रौपद्या जलपूर्णे हेमपात्रे तद्धारणं च ॥ ७ ॥ उत्तरस्य सभायां प्रवेशः ॥ ८ ॥ उत्तरवाक्येन विराटेन कङ्कस्य क्षमापनम् ॥ ९ ॥ विरते कङ्कस्य क्षतजस्रावे बृहन्नलाप्रवेशः ॥ १० ॥ राज्ञः कुमारं प्रति कर्णादिभिः सह युद्धप्रकारप्रश्नः ॥ ११ ॥

**वैशम्पायन उवाच—**

धनं चापि विजित्याशु विराटो वाहिनीपतिः ।
विवेश नगरं हृष्टश्चतुर्भिः पाण्डवैः सह ॥ १ ॥
जित्वा त्रिगर्तान्संग्रामे गाश्चैवादाय सर्वशः ।
अशोभत महाराज सहपार्थैः श्रिया वृतः ॥ २ ॥
तमासनगतं वीरं सुहृदां हर्षवर्धनम् ।
उपासाञ्चक्रिरे सर्वे सह पार्थैः परन्तपाः ॥ ३ ॥
उपतस्थुः प्रकृतयः समस्ता ब्राह्मणैः सह ।
सभाजितःससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट् ॥ ४ ॥
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ।
तथा स राजा मत्स्यानां विराटो वाहिनीपतिः ॥ ५ ॥
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ।
आचख्युस्तस्य तत्सर्वं स्त्रियः कन्याश्च वेश्मनि ॥ ६ ॥
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ।
विजेतुमभिसंरब्ध एक एवातिसाहसात् ॥
बृहन्नलासहायश्च निर्गतः पृथिवींजयः ॥ ७ ॥
उपयातानतिरथान् भीष्मं शान्तनवं कृपम् ।
कर्णं दुर्योधनं द्रोणं द्रोणपुत्रं च षड्रथान् ॥ ८ ॥

[ विष० ] बहुलं छन्दस्यमाङ्योगेऽपि । एतेन अट् धात्वादिनिषेधः (?) । ब्रवीहि वदेथाः ॥ १० ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ नील० ] विजये न तृप्तौ इतोऽप्यधिकं युद्धं प्रार्थयानौ यद्वा विजयेन स्वीयेन तृप्तौ आनन्दितौ स्वस्य भाण्डं अलंकारादिकं यत् पूर्वमुत्सृष्टं तत्तथैव शरीरे रथे च आरोपयतामारोपितवन्तौ ॥२२॥ धनं गोधनं प्रतीतो हृष्टः ॥२३॥

इति श्रीनैल० भारतभावदीपे वि. प. सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ चतु० ] गोवृषभो गोश्रेष्ठस्तस्येवाक्षिणी यस्य स तथा 'वृषभः श्रेष्ठवृषयोः' इति मेदिनीकरः ॥ २३ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ सर्व० ] भाण्डं अलंकारादिकम् ॥ २२ ॥ प्रतीतः हृष्टः ॥ २३ ॥

इति श्रीसर्वज्ञ० भारतार्थप्रकाशे वि. प. सप्तषष्टितमोऽध्यायः ॥६७॥

[ नील० ] दक्षिणगोग्रहवृत्तान्तमाह—धनं चेति ॥ १ ॥ सभाजितः पूजितः ॥ ४ ॥

[ अर्जु० ] पार्थिवस्य विराटस्य सभाजितः अनिन्दितः पूजितो वा सभाजृ पूजायां धातोः प्रजेतीति गौरवमृषान्(?) ॥ ४ ॥ पृथिवींजय इति उत्तरः ॥ ७ ॥ व्युपायातान् आगतान् षड्रथानित्यनेन संबन्धः ॥ ८ ॥

[ विरो० ] विराटोऽपि ॥ १ ॥ केवलाः कृत्स्नाः ॥ २ ॥ सभाजितः सभाजृ प्रीतिदर्शनयोः ॥ ४ ॥ उपायातं २ व्युपायातम् ॥ ८ ॥

२२ ज. भारतमत्स्यपुत्रौ । हृष्टावुत्सृष्ट° । २३ ज. बृहन्नलासारथिरेकवीरः । इति सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

१ ङ. व. प्राविशन्नगरं । २ व. °दाय केवलाः । व. सह पार्थैः श्रिया । ३ क. व. सुहृदां प्रीतिवर्धनम् । व, सर्वे पाण्डवाः सहसैनिकाः । ४ ग. घ. व. समाजग्मुः प्रकृतयः । व, स सेवितः ससैन्यस्तु; क. सभाजितः सभासद्भिः प्रतिनन्द्य स मत्स्य° । ५ क. व. ततः स राजा । ६ क. उत्तरं तत्र नापश्यत् क. °ख्युस्तत्र संहृष्टास्तस्य; व. ङ. °स्तस्य संहृष्टास्तस्य । ७ व. ङ. ज. निर्यातः पृथिवींजयः । ८ ङ. व. उपायातं चातिरथं द्रोणं शान्त°; क. चातिरथं द्रोणं; क. व. दुर्योधनं चैव द्रोणपु° । ९

**वैशम्पायन उवाच—**

राजा विराटोऽथ भृशाभितप्तः
श्रुत्वा सुतं त्वेकरथेन यातम् ।
बृहन्नलासारथिमाजिवर्धनं
प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ९ ॥
सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्निःसृतान् श्रुत्वा न स्थास्यन्ति कदाचन १०
तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ११ ॥
हयांश्च नागांश्च रथांश्च शीघ्रं
पदातिसंघांश्च ततः प्रवीरान् ।
प्रस्थापयामास सुतस्य हेतो-
र्विचित्रशस्त्राभरणोपपन्नान् ॥ १२ ॥
एवं स राजा मत्स्यानां विराटो वाहिनीपतिः ।
व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ १३ ॥
कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यन्ता गतः षण्ढो मन्येऽहं स न जीवति ॥ १४ ॥
तमब्रवीद्धर्मराजो विहस्य
विराटराजं तु भृशाभितप्तम् ।
बृहन्नला सारथिश्चेन्नरेन्द्र
परे न नेष्यन्ति तवाद्य गास्ताः ॥ १५ ॥
सर्वान्महीपान्सहितान्कुरूंश्च तथैव देवासुरसिद्धयक्षान्
अतीव जेतुं समरे सुतस्ते स्वनुष्ठितः सारथिना हि तेन ॥

**वैशम्पायन उवाच—**

अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य विजयं समवेदयन् ॥ १७ ॥
राज्ञस्तत्सर्वमाचख्यौ मन्त्री विजयमुत्तमम् ।
पराजयं कुरूणां चाप्युपायान्तं तथोत्तरम् ॥ १८ ॥
सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरः सह सूतेन कुशली च परन्तपः ॥ १९ ॥

**युधिष्ठिर उवाच—**

दिष्ट्या विनिर्जिता गावः कुरवश्च पलायिताः ।
नाद्भुतं त्वेव मन्येऽहं यत्ते पुत्रोऽजयत्कुरून् ॥ २० ॥
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ।

**वैशम्पायन उवाच—**

ततो विराटो नृपतिः संप्रहृष्टतनूरुहः ॥ २१ ॥
श्रुत्वा स विजयं तस्य कुमारस्यामितौजसः ।
आच्छादयित्वा दूतांस्तान्मन्त्रिणं सोऽभ्यचोदयत् २२
राजमार्गाः क्रियन्तां मे पताकाभिरलंकृताः ।
पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः ॥ २३ ॥
कुमारा योधमुख्याश्च गणिकाश्च स्वलंकृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ २४ ॥
घण्टावान्मानवः शीघ्रं मत्तमारुह्य वारणम् ।
शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम ॥ २५ ॥
उत्तरा च कुमारीभिर्बह्वीभिः परिवारिता ।
शृङ्गारवेषाभरणा प्रत्युद्यातु सुतं मम ॥ २६ ॥

---

[ नील० ] आच्छादयित्वा वस्त्रादिभिरभ्यर्च्य ॥ २२ ॥ शृङ्गाटकेषु चतुष्पथेषु । 'शृङ्गाटकं भवेद्वारि कण्टके च चतुष्पथे' इति मेदिनी ॥ २५ ॥ शृङ्गारवेषाभरणा नाट्यरसवेषाभरणा । 'शृङ्गारः सुरते नाट्ये' इति मेदिनी ॥ २६ ॥

[ अर्जु० ] परीप्सार्थं रक्षार्थम् ॥ ११ ॥ कुमारमुत्तरम् जीवति नवेति संशय इति शेषः ॥ १४ ॥ अलं शक्तः ॥ १६ ॥ आच्छादयित्वा आच्छाद्य प्रसाददत्तैर्वस्त्रैः ॥ २२ ॥ घण्टावान् मानव इति घण्टा निःसारणपथः । शृङ्गाटकेषु चतुष्पथेषु ॥ २५ ॥

[ सर्व० ] आच्छादयित्वा वस्त्रादिभिरभ्यर्च्य ॥ २२ ॥ शृङ्गाटकेषु चतुष्पथेषु ॥ २५ ॥ शृङ्गारः नाट्यम् ॥ २६ ॥

[ विरो० ] राजमार्गाः (दे) चतुष्पथाः ॥ २३ ॥ शृङ्गाटकेषु चतुष्पथेषु ॥ २५ ॥ शृङ्गार उज्ज्वलः ॥ २६ ॥

[ विष० ] शृङ्गाटकेषु पथां श्लेषेषु । चतुःपथत्रिपथद्विपथेषु ॥ २५ ॥

[ लक्षा० ] शृङ्गाटकेषु सर्वेष्वित्यत्र 'शृङ्गाटकचतुष्पथे' इत्यमरः । शृङ्गाटकेषु चतुष्पथेषु ॥ २५ ॥ कन्याः सहकन्यकाश्चेत्यत्र । दासीभूतकन्याभिः सहिताः कन्याः । राजकन्याः ॥ २६ ॥

---

९ क. बृहन्नलासारथिमाजिमर्दनम् । व. सर्वानथ मन्त्रिपुत्रान् । १० व. कुरवः सर्वे ये । व. डं. त्रिगर्तान्निर्जितान्छ्रुत्वा । १२ क. शीघ्रं वादित्रसंघांश्च ततः प्रभूतान् । डं. संघांश्च युधि प्रवीरान् । क. विचित्रचित्राभरणोपपन्नान् । १३ क. राजा मात्स्यानां महानक्षौहिणीपतिः । डं. व. आदिदेशाथ तां । १४ डं. षण्ढो मे पुत्रो न । १५ क. °वीद्धर्मसुतो विराटमार्तं विदित्वा कुरुभिः प्रतप्तम् । व. डं. राजः प्रहस्य । १६ क. डं. °सुरसिद्धनागान् ; व. देवासुरयक्षपन्नगान् । क. घ. म. डं. अलं विजेतुं समरे । व. स्वधिष्ठितः सारथिना । १७ डं. जयमावेदयंस्ततः; व. जयमावेदयंस्तयोः । १८ व. राज्ञे ततः समाचख्यौ । १९ डं. कुशली ते परंतपः । २० व. कुरवश्च पराजिताः । दिष्ट्या ते जीवितः पुत्रः श्रूयते पुरुषर्षभ; डं. क. ग. घ. च. ज. व. पार्थिवर्षभ । २२ क. संतोषयित्वा दूतांस्तान्धनरत्नैश्च सर्वशः इत्युत्तरार्धस्थाने । २५ क. घण्टापणवकाः; व. घण्टामाणवकाः शीघ्रं । क. समाख्यान्तु जयं; व. व्याख्यान्तु विजयं । २६ क. °भिर्बह्वाभरणभूषिता । सखीं विजितसंग्रामां प्रत्युद्यातु बृहन्नलाम् । व. डं. बह्वीभिरभिसंवृता । ग. ज. प्रत्युद्यातु बृहन्नडाम् ।

**वैशम्पायन उवाच—**

श्रुत्वा चेदं वचनं पार्थिवस्य
सर्वं पुरं स्वस्तिकपाणिभूतम् ।
भेर्यश्च तूर्याणि च वारिजाश्च
वेषैः परार्ध्यैः प्रमदाः शुभाश्च ॥ २७ ॥
तथैव सूतैः सह मागधैश्च
नान्दीवाद्याः पणवास्तूर्यवाद्याः ।
पुराद्विराटस्य महाबलस्य
प्रत्युद्ययुः पुत्रमनन्तवीर्यम् ॥ २८ ॥
प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलंकृताः ।
मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ॥ २९ ॥
अक्षानाहर सैरन्ध्रि कङ्क द्यूतं प्रवर्तताम् ।
तं तथावादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ॥ ३० ॥

**युधिष्ठिर उवाच—**

न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ।
तं त्वामद्य मुदा युक्तं नाहं देवितुमुत्सहे ।
प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ॥ ३१ ॥

**विराट उवाच—**

स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किंचन ।
न मे किंचित्तु रक्ष्यं ते अन्तरेणापि देवितुम् ॥ ३२ ॥

**कङ्क उवाच—**

किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत् ॥ ३३ ॥
श्रुतस्ते यदि वा दृष्टः पाण्डवेयो युधिष्ठिरः ।
स राष्ट्रं सुमहत् स्फीतं भ्रातॄंश्च त्रिदशोपमान् ॥ ३४ ॥
द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये ।
अथवा मन्यसे राजन्दीव्याम यदि रोचते ॥ ३५ ॥

**वैशम्पायन उवाच—**

प्रवर्तमाने द्यूते तु मत्स्यः पाण्डवमब्रवीत् ।
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥ ३६ ॥
ततोऽब्रवीन्महात्मा स एनं राजा युधिष्ठिरः ।
बृहन्नला यस्य यन्ता कथं स न जयेद्युधि ॥ ३७ ॥
इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत् ।
समं पुत्रेण मे षण्ढं ब्रह्मबन्धो प्रशंससि ॥ ३८ ॥
वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे ।
भीष्मद्रोणमुखान्सर्वान्कस्मान्न स विजेष्यति ॥ ३९ ॥
वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे ।
नेदृशं तु पुनर्वाच्यं यदि जीवितुमिच्छसि ॥ ४० ॥

---

[ नील० ] स्वस्तिकं मङ्गलारार्तिकादि दधिदूर्वादि च पाणौ यस्य तत् स्वस्तिकपाणिभूतम् ऋद्धिमत् । वारिजाः शङ्खाः ॥ २७ ॥ नान्दीवाद्याः मङ्गलवाद्यानि तूर्यवाद्या जयवाद्यानि ॥ २८ ॥ हृष्टेन त्वया सह कितवेन मया न देवितव्यम् ॥ ३१ ॥ अन्तरेण विनाऽपि द्यूतम् ॥ ३२ ॥ ब्रह्मबन्धो ब्राह्मणाधम ॥ ३८ ॥ वयस्यत्वात् सख्यात् ॥ ४० ॥

[ अर्जु० ] सर्वे पुरः स्वस्तिकपाणयश्चेति तात्पर्यात् सर्वे पुरवासिनो जनाः स्वस्तिकं मङ्गलद्रव्यं तेनोपलक्षिताः पाणयो येषां ते प्रत्युद्ययुरिति संबन्धः । ' स्वस्तिकं मङ्गलद्रव्ये चतुष्कं गृहभेदयोः ' इति मेदिनी । परार्ध्यैरुत्कृष्टैः ॥ २७ ॥ ब्रह्मबन्धुरधिक्षेपे ॥ ३८ ॥

[ चतु० ] अन्तरेण देवितुं मया न रक्षणीयः देवने सर्वं ददामीत्यर्थः ॥ ३२ ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ सर्व० ] स्वस्तिकं दधिदूर्वादि पाणौ यस्यैवंभूतम् ऋद्धिमत् । वारिजाः शङ्खाः ॥ २७ ॥ नान्दीवाद्याः मङ्गलवाद्यानि । तूर्यवाद्याः जयवाद्यानि ॥ २८ ॥ हृष्टेन त्वया सह कितवेन अक्षक्रीडातत्परेण मया ॥ ३१ ॥ अन्तरेण विनापि द्यूतम् ॥ ३२ ॥ ब्रह्मबन्धो ब्राह्मणाधम ॥ ३८ ॥ वयस्यत्वात्सख्यात् ॥ ४० ॥

[ विरा० ] स्वस्तिकं मङ्गलद्रव्ये ॥ २७ ॥ नान्दीवाद्याः समृद्धिघोषकाः ॥ २८ ॥ प्रियमन्यत् (शे) । वर्ततां तत् (शे) ॥ ३१ ॥ अन्तरेण आत्मीयेन त्वया देवितुमपि किंचिन्न रक्ष्यं सर्वं नेयम् । देवितुः मम देवितम् ॥ ३२ ॥

[ विष० ] हे ब्रह्मबन्धो ब्राह्मणाधम ! ॥ ३८ ॥ वयस्यत्वात् मित्रभावात् ॥ ४० ॥

[ लक्षा० ] सकंसकालमित्यत्र सकंसकालं कांस्यकालेन सहितम् ॥ २८ ॥

---

२७ व. सर्वे पुनः स्वस्तिकपाणयश्च । २८ कांस्यं सतालं मधुरं च गीतमादाय नार्यो नगरान्निरीयुः । प्रत्युद्ययुः पुत्रमनन्त वीर्यं ते ब्राह्मणाः शान्तिपराः प्रधानाः । दे. °स्तूर्यघोषाः । २९ क. मत्स्यराजो महाराजः । ३० क. सैरन्ध्रि आसनं चोपकल्पय; दे. कङ्को द्यूतं प्रवर्तताम् । व. तथा मुदितं दृष्ट्वा । ३१ दे. नैवमद्य-महं । क. यदि रोचते । ३३ ग. घ. यच्चान्यद्वस्तु किंचन । व. किंचित्त्वया रक्ष्यमन्तरेण तु; क. किंचित्त्वया कार्यं । क. °णापि देवितुम्, च. वेदितुम् । ३४ व. ड. पाण्डवो हि युधिष्ठिरः । उत्तरार्धस्थाने क. स राज्यं धनमक्षय्यं पणमेकममन्यत । कृष्णां च भार्यां दयितां भ्रातॄंश्च त्रिदशोपमान् । ३५ क. ग. घ. व. द्यूते हारितवा° । क. दीव्याव यदि रो° । ४० क. नेदृशीं प्रवदेर्वाचं यदि ।

**युधिष्ठिर उवाच—**

यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्तनः कृपः ।
दुर्योधनश्च राजेन्द्रस्तथाऽन्ये च महारथाः ॥ ४१ ॥
मरुद्गणैः परिवृतः साक्षादपि मरुत्पतिः ।
कोऽन्यो बृहन्नलायास्तान् प्रतियुध्येत सङ्गतान्॥४२॥
यस्य बाहुबले तुल्यो न भूतो न भविष्यति ।
अतीव समरं दृष्ट्वा हर्षो यस्योपजायते ॥ ४३ ॥
योऽजयत्सङ्गतान्सर्वान्ससुरासुरमानवान् ।
तादृशेन सहायेन कस्मात्स न विजेष्यते ॥ ४४ ॥

**विराट उवाच—**

बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि ।
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ॥ ४५ ॥

**वैशम्पायन उवाच—**

ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम् ।
मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ॥ ४६ ॥
बलवत्प्रतिविद्धस्य नस्तः शोणितमावहत् ।
तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ॥ ४७ ॥
अवैक्षत स धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम् ।
सा ज्ञात्वा तमभिप्रायं भर्तुश्चित्तवशानुगा ॥ ४८ ॥
पात्रं गृहीत्वा सौवर्णं जलपूर्णमनिन्दिता ।
तच्छोणितं प्रत्यगृह्णाद्यत्प्रसुस्राव नस्ततः ॥ ४९ ॥
अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा ।
विकीर्यमाणः संहृष्टो नगरं स्वैरमागतः ॥ ५० ॥
सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा ।
आसाद्य भवनद्वारं पित्रे संप्रत्यवेदयत् ॥ ५१ ॥
ततो द्वास्थः प्रविश्यैव विराटमिदमब्रवीत् ।
बृहन्नलासहायश्च पुत्रो द्वार्युत्तरः स्थितः ॥ ५२ ॥
ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत् ।
प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः ॥ ५३ ॥
क्षत्तारं कुरुराजस्तु शनैः कर्णमुपाजपत् ।
उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला ॥ ५४ ॥

---

[नील०] नियच्छसि निगृह्णासि ॥ ४५ ॥ नैवं वाच्यमिति ॥ ४६ ॥ नस्तः नासिकातः ॥ ४७ ॥ नस्ततः नासिकानाडीतः तनोति देहं प्रथयतीति तच्छब्दो नाडीवचनः पुरीतति शेते इत्यादिप्रयोगदर्शनात् ॥ ४९ ॥ कुरुराजो युधिष्ठिरः कर्णे कर्णे उपाजपत् उपांशु उक्तवान् ॥ ५४ ॥

[अर्जु०] प्रतिविद्धस्य हतस्य । नस्तः इत्यर्थे छान्दसः ॥ ४७ ॥ आहारयत् द्वाःस्थमिति शेषः ॥ ५१ ॥ क्षत्तारं द्वारस्थम् ॥ ५४ ॥

[सर्व०] नस्ततः नासिकानाडीतः ॥ ४९ ॥ क्षत्ता द्वारपालः ॥ ५३ ॥ उपाजपत् उपांशु उक्तवान् ॥ ५४ ॥

[विरो०] पात्रं; कांस्यं (दे) ॥ ४९ ॥ प्रत्यहारयत् प्रतीहारद्वारा ज्ञापयामास ॥ ५१ ॥

[विष०] बलवत्प्रतिविद्धस्य बलेनाहतस्य नस्तः नासिकायाः ॥ ४७ ॥ सौवर्णं भाजनं कंचोलकं पानीयस्य पानीयेन पूरयित्वा अत्र तृतीयास्थाने षष्ठी । कर्तृकर्मणोः कृति नित्यं षष्ठी भवति । यदुक्तम् "कच्छं संचमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य फलानामेवैतं पूर्णपात्रमाचक्षते ।" इति सामवेदे गोभिलसूत्रम् । कृतस्यौदनादेरकृतस्य तण्डुलादेः । अत्राऽपि तृतीयास्थाने षष्ठी । अन्नेन फलैर्वा पूरयित्वेति शेषः । यो यस्मादुत्पद्यते स तस्मिन्नेव लीयते यतो जलाद्रुधिरं जायते तद्रक्तं जल एव विनश्यति ॥४९॥

[लक्षा०] ततः सकरिभोगाभमित्यत्र भुज्यते अनेनेति भोगः हस्तिहस्तः । करभोगाभमितिपाठे करो हस्तिकरः । भोगः सर्पशरीरम् ॥ ४६ ॥ पित्रे संप्रत्यहारयदित्यत्र संप्रत्यहारयत् द्वाःस्थं प्रेषयामास ॥ ५१ ॥

---

४१ व. डं. राजेन्द्र तथान्ये सुमहारथाः । ४३ व. तुल्यो नाभून्नैव भविष्यति; क. न भविष्यति कश्चन । ४४ व. डं. यो जयेत्सहितान्सर्वान्सुरासुरमहोरगान् । ४५ डं. शतशः प्रतिषिद्धोऽसि । ४६ व. डं. णाऽहनद्दृढम् । व. डं. कोपान्मैवमि° ४७ डं. शोणितमागमत; व शोणितमागतम् । डं. पाणिभ्यामग्रहीत्तदा । ४८ व. सा वेद तमभिप्रायं; क. सा वेदनामभिज्ञाय ४९ पूर्वार्धस्थाने क. सौवर्णं गृह्य भृङ्गारं शोणितं तदपामृजत्; व. पूरयित्वा तु सौवर्णं पानीयस्य तु भाजनम् । व. ढं. सुस्राव पाण्डवात् । ५० व. स्वैरमाविशत्; डं. स्वैरमागमत् । ५१ क. आसाद्यान्तःपुरद्वारं पित्रे । डं. पित्रे संप्रत्यहारयत् । ५४ व. डं. क्षत्तारं धर्मराजस्तु ।

---

एकोनपञ्चाशोत्तरम् । च. डं.

विराटस्त्वब्रवीत्तत्र किमेतत्क्रियते त्वया ।
सैरन्ध्रि ब्रूहि तत्त्वेन मम प्रश्नमशेषतः ॥

**सैरन्ध्र्युवाच—**

यदिदं शोणितं राजन्कङ्कस्य पतति क्षितौ
इदं च राष्ट्रं ते क्षिप्रं विनश्येत न संशयः ॥
न च द्वादश वर्षाणि वर्षयेत पुरन्दरः ।
ईतयश्च प्रवर्तन्ते न सस्यं जायते क्वचित् ॥
अशुभं स्याच्च राजेन्द्र नृपस्य च पुरस्य च ।

**वैशम्पायन उवाच—** इत्यधिकम्

एतस्य हि महाबाहो व्रतमेतत्समाहितम् ।
यो ममाङ्गे व्रणं कुर्याच्छोणितं वाऽपि दर्शयेत् ।
अन्यत्र संग्रामगतान्न स जीवेत्कथंचन ॥ ५५ ॥
न मृष्याद्भृशसंक्रुद्धो मां दृष्ट्वा तु सशोणितम् ।
विराटमिह सामात्यं हन्यात्सबलवाहनम् ॥ ५६ ॥

**वैशम्पायन उवाच--**

ततो राज्ञः सुतो ज्येष्ठः प्राविशत्पृथिवींजयः ।
सोऽभिवाद्य पितुः पादौ कङ्कं चाप्युपतिष्ठत ॥५७॥
ततो रुधिरसंयुक्तमनेकाग्रमनागसम् ।
भूमावासीनमेकान्ते सैरन्ध्र्या प्रत्युपस्थितम् ॥५८॥
ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः ।
केनायं ताडितो राजन्केन पापमिदं कृतम् ॥५९॥

**विराट उवाच--**

मयाऽयं ताडितो जिह्मो न चाप्येतावदर्हति ।
प्रशस्यमाने यच्छूरे त्वयि षण्ढं प्रशंसति ॥ ६० ॥

**उत्तर उवाच--**

अकार्यं ते कृतं राजन्क्षिप्रमेव प्रसाद्यताम् ।
मा त्वां ब्रह्मविषं घोरं समूलमिह निर्दहेत् ॥ ६१ ॥

**वैशम्पायन उवाच--**

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् ॥ ६२ ॥
क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ।
चिरं क्षान्तमिदं राजन्न मन्युर्विद्यते मम ॥ ६३ ॥
यदि ह्येतत्पतेद्भूमौ रुधिरं मम नस्ततः ।
सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः ॥ ६४ ॥
न दूषयामि ते राजन्यद्वै हन्याददूषकम् ।
बलवन्तं प्रभुं राजन्क्षिप्रं दारुणमाप्नुयात् ॥ ६५ ॥

**वैशम्पायन उवाच--**

शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला ।
अभिवाद्य विराटं तु कङ्कं चाप्युपतिष्ठत ॥ ६६ ॥
क्षामयित्वा तु कौरव्यं रणादुत्तरमागतम् ।
प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः ॥६७॥
त्वया दायादवानस्मि कैकेयीनन्दिवर्धन ।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥६८॥
पदं पदसहस्रेण यश्चरन्नापराध्नुयात् ।
तेन कर्णेन ते तात कथमासीत्समागमः ॥ ६९ ॥

---

[ नील० ] अनेकाग्रं व्यग्रम् ॥ ५८ ॥ हे राजन् ! ते तव तत् कर्म न दूषयामि यत् अदूषकं परापवादहीनं हन्यादन्यायि तत् दूष्यमपि न दूषयामि यतः बलवन्तं प्रभुं क्षिप्रं शीघ्रं दारुणं नृशंसं कर्म प्राप्नुयादेव । हृष्टो दृप्यति दृप्तो धर्ममतिक्रामतीति स्मृतेः । कलयन्तमिति पाठे जानन्तमपि ॥ ६५ ॥ दायादवान् पुत्रवान् ॥ ६८ ॥ पदमिति पदं बाणनिपातस्थानं पदसहस्रेण लक्ष्यसहस्रार्थं हेत्वर्थे तृतीया सहस्रलक्ष्याणि वेद्धुमित्यर्थः । चरन् बाणैः प्रचरन्नेकमपि स्थानं नापराध्नुयात् न रिक्तं कुर्यात् । युगपल्लक्ष्यसहस्रमुद्दिश्य बाणैश्चरन्नेकमपि लक्ष्यं न जह्यादित्यर्थः । पदं पदमिति पाठे सर्वं पदं नापराध्नुयात् सहस्रेण चरन्नित्यर्थात् पदसहस्रोद्देशेनेति बोध्यं, समागमः सङ्ग्रामः ॥ ६९ ॥

[ अर्जु० ] दायादवान् पुत्रवान् । कैकेयी सुदेष्णा ॥ ६८ ॥ युद्धात् प्रत्यागतमात्मजं विराटः पृच्छति । पदं पदसहस्रेण यश्चरन्नापराध्नुयात् । तेन कर्णेन ते तात कथमासीत्समागमः । पद्यन्ते क्षिप्यन्ते बाणा यस्मिन्निति पदं लक्ष्यं विध्यत इति वा पदं तदेव पद्यन्ते क्षिप्यन्ते इति पदाः बाणाः पद्यन्ते गच्छन्ति लक्ष्यमिति वा । हे पुत्र ! पदसहस्रेण शराणां सहस्रेणापि यः कर्णः पदं लक्ष्यं चरन् विध्यमानो नापराध्नुयात् न लक्ष्याच्युतसायको भवति । 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः । एतेन लक्ष्यसिद्धिर्दर्शिता । समागमो युद्धम् । अथवा पद्यते गम्यतेऽनेनेति पदं पाद एव, पादसहस्रेण लक्षितं पदं लक्ष्यं, जटाभिस्तापस-इतिवत् लक्षणे तृतीया । चरन्नित्यादि पूर्ववत् पादसहस्रावस्थितलक्ष्यमित्यर्थः । एतेन दूरपातित्वं दर्शितम् ॥ पदं पदाविति पाठे पदं दृष्टलक्ष्यं यः सर्वस्मिन्नेव लक्ष्ये सहस्रं सहस्रं वारानभ्येत्येत्यर्थः । यद्वा सहस्रेण अर्थाद् बाणानां चरणे व्यवहरणे नापराध्नुयात् सहस्रादेकोऽपि शरः लक्ष्यं विध्यत्यपगच्छतीत्यर्थः । 'तातोऽनुकम्पाजनकप्रशंसायां (?) च दृश्यते' आस्तां

---

५५ क. हि महाबाहोर्व्रतमेत° । ५६ क. व्यक्तं भृशं सुसंक्रुद्धो मां दृष्ट्वैव । पद्पञ्चाशान्ते ग. ण. व. डं. अध्यायसमाप्तिः । ५७ ग. घ. डं. व. पादौ धर्मराजमपश्यत । ५८ क. रुधिरसिक्ताङ्गमने°; डं. संसिक्त; व. संसक्तमेकाग्रगतमानसम् । डं. सैरन्ध्र्या प्रत्युपासितम् । ५९ डं. केनायं पीडितो रा° । क. ताडितो कङ्कः । ६० क. पुत्र दुरात्मा शत्रुपक्षकृत् । क. मया प्रशस्यमाने तु त्वयि । डं. प्रशस्यति । ६१ डं. कृतं कर्म शीघ्रमेष; क. व. एष । व. ब्रह्मद्विषं ६२ क. °टः साध्वसाकुलः । °न्तेयं छन्नं ब्राह्मणवर्चसा । ६४ क. मम पार्थिव । क. °स्त्वमिहोच्छेदमापद्येथा नरर्षभ । ६५ ज. राजन्यश्चाहन्याद°; व. यश्च हन्याद°; यच्च हन्याद° क. फलं तस्य महाराज क्षि°; ज. व. महाराज । ६६ व. °टं च राजानमुपतस्थिवान् । ६७ व. तु राजानं । ण. मत्स्यं; राजा । ६८ व. °केयी वीरसूस्त्वया । व. त्वया समः सुतः कस्य । श्लोकान्तेऽधिकं व. यस्य तुल्यो बले नास्ति पृथिव्यामपि चोत्तर । ६९ व. न्नापराध्यति ।

मनुष्यलोके सकले यस्य तुल्यो न विद्यते ।
तेन भीष्मेण ते तात कथमासीत्समागमः ॥ ७० ॥
आचार्यो वृष्णिवीराणां कौरवाणां च यो द्विजः ।
सर्वक्षत्रस्य चाचार्यः सर्वशस्त्रभृतां वरः ।
तेन द्रोणेन ते तात कथमासीत्समागमः ॥ ७१ ॥

आचार्यपुत्रो यः शूरः सर्वशस्त्रभृतामपि ।
अश्वत्थामेति विख्यातस्तेनासीत्सङ्गरः कथम् ॥७२॥
रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा ।
कृपेण तेन ते तात कथमासीत्समागमः ॥ ७३ ॥

तावत् युद्धे जयः समागमोऽपि ते तव दुष्कर इति भावः ॥ ६९ ॥

[ सर्व० ] जिह्मः कुटिलः ॥ ६० ॥ यत् अदूषकं परापवादहीनं हन्यात्तत् दूष्यमपि न दूषयामि । यतः बलवन्तं प्रभुं शीघ्रं दारुणं कर्म प्राप्नुयादेव । कलयन्तमिति पाठे जानन्तमपि ॥ ६५ ॥ दायादः पुत्रः ॥ ६८ ॥ पदं बाणनिपातस्थानं पदसहस्रेण सहस्रं लक्ष्याणि वेद्धुं बाणैः प्रचरन्नेकमपि स्थानं नापराध्नुयान्न चिह्नं (रिक्तं?) कुर्यात् । युगपल्लक्ष्यसहस्रमपि हन्यादेवेत्यर्थः ॥ ६९ ॥

[ दुर्घ० ] युद्धात्प्रत्यागतमात्मजमुत्तरं विराटः पृच्छति–' पदं पदसहस्रेण यश्चरन्नापराध्नुयात् । तेन कर्णेन ते तात कथमासीत्समागमः ' इति । पद्यन्ते क्षिप्यन्ते शरा अस्मिन्निति पदं लक्ष्यम् । पद्यन्ते क्षिप्यन्त इति पदशब्देन शरा अपि प्रोच्यन्ते । पदसहस्रेण सहस्रेणापि बाणानां लक्ष्यं विध्यन्नापराध्नुयान्न लक्ष्यच्युतसायको भवति । सहस्रादेकोऽपि शरो न लक्ष्यं विहाय पततीत्यर्थः । पदं पदमिति पाठे पदं पदं लक्ष्यं लक्ष्यं सर्वस्मिन्नेव लक्ष्ये सहस्रं बाणानस्यतीत्यर्थः । तेन कर्णेन ते तव भोस्तात ! पुत्र ! प्रशंसार्थे तातशब्दो दृष्टः–कथमासीत्समागमः । आस्तां तद्युद्धे जयः समागमोऽपि कर्णेन सह तव दुर्लभ इति भावः । एते विराटपर्वणि श्लोकाः ॥ ६९ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यां विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ विरो० ] नस्ततः इति । ममैतद्रुधिरं यदि भूमौ पतेत् ततः सराष्ट्रः त्वं विनश्येथाः । नैरुक्तो वर्णागमः ( च ) नस्त इत्यर्थे छान्दसम् ( अ ) ॥ ६४ ॥ अनपराधिनस्ताडने दोष एवेत्याह–न दूषयामि नापराध्नोमि । ततः किमित्यत आह–यश्चेति । दारुणं भयम् । तथा च मम क्षमयैव तव भयं नास्ति इति भावः ॥ ६५ ॥ पदं व्यायामे यस्मिन् स्थाने प्रथमं विन्यस्यति तत्रैव सहस्रपदविन्यासः । एकस्मिन् पदन्यासेऽपि नापराधः । यद्वा पदानां व्यवसायिनीनां बुद्धीनां सहस्रं यस्य तेन योधेन सह चरन् युद्धमाचरन् पदं यत्किंचिदपि नापराध्नुयात् भ्रश्येत् । पदं पदमिति पाठे पद्यते आपद्यते (इति) पदं युद्धम् । पदमपि यत्किंचिदपि ॥ ६९ ॥

[ विष० ] पदं पदसहस्रेणेत्यादि । पदं लक्ष्यम् । पद्यन्ते इति पदाः शरास्तेषां सहस्रेण चरन् 'चर गतौ' लक्ष्यं प्रति मुञ्चन् शरैर्विध्यन्नित्यर्थः नापराध्नुयात् न लक्ष्यात् च्युतसायको भवेत् । 'स भवेदपराद्धेषुर्यो हि लक्ष्याच्च्युतः शरः ।' पद्यते हन्यत इति पदं वेध्यम् । पद्यते हन्यत एभिरिति पदा बाणाः बाणसहस्रेण पदं विध्यन्नापराद्धेषुर्भवति । अथ पदसहस्रेण योधसहस्रेण चरन्नाजौ नापराध्नुयात् । योधान् हन्यात् । 'सहस्रं योधयत्येकः स महारथ उच्यते ।' यद्वा बाणानां सहस्राणि मुञ्चन्नापराध्नुयादित्यर्थः । अथवा पदसहस्रेण क्रमसहस्रेण चरन् गच्छन् वेगेन धावन् पदं बाणं नापराध्नुयात् । बाणं मुक्त्वा बाणपृष्ठेन धावन् क्रमसहेण बाणं पुङ्खे गृह्णातीत्यर्थः इति विशेषद्योतितार्थः ॥ ६९ ॥

[ लक्षा० ] पदं पदसहस्रेणेत्यत्र प्रतिभटानां पदसहस्रेण सह एकं पदं चरन् तैरितस्ततः पदसहस्रे कृते सति स्वयमेकेनैव पदेन तिष्ठन् नापराध्नुयात् । धूञ् कम्पन इति धातोः । कम्पं न प्राप्नुयात् । महाधैर्यवानिति भावः । यद्वा अन्येषां पदसहस्रेण यः प्राप्तो देशस्तमेकपदेन चरन्नापराध्नुयात् । महावेगवानिति भावः ॥ ६९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ नील० ] हृतस्वाः हृतधनाः वणिज इव सीदन्ति शूरा इति शेषः ॥ ७३ ॥

७० व. धनुर्वेदे च सकले । श्लोकमध्येऽधिकं क. ग. घ. च. ङ. व. यः समुद्र इवाक्षोभ्यः कालाग्निरिव दुःसहः । क. तेन ते सह भीष्मेण कुरुवृद्धेन संयुगे । युद्धमासीत्कथं तात सर्वमेतद्ब्रवीहि मे । ७१ व. आचार्यः कुरुवीराणां पाण्डवानां च यो गुरुः । क. वीराणां पाञ्चालानां च यः प्रभुः । कुरूणां पाण्डवानां च सर्वक्षत्रस्य यो गुरुः । व. ते वत्स । ७२ ग. आचार्यपुत्रोऽतिबलः । क. शूरः द्रोणादनन्तरो रणे । तेन वीरेण ते तात कथमासीत्समागमः । ७३ क. सीदन्ति हृतवीर्यपराक्रमाः ।

पर्वतं योऽभिविध्येत राजपुत्रो महेषुभिः ।
दुर्योधनेन ते तात कथमासीत्समागमः ॥ ७४ ॥
अवगाढा द्विषन्तो मे सुखो वातोऽभिवाति माम् ।
यस्त्वं धनमथाजैषीः कुरुभिर्ग्रस्तमाहवे ॥ ७५ ॥
तेषां भयाभिपन्नानां सर्वेषां बलशालिनाम् ।
नूनं प्रकाल्य तान्सर्वांस्त्वया युधि नरर्षभ ।
आच्छिन्नं गोधनं सर्वं शार्दूलेनामिषं यथा ॥७६॥

इति श्रीमहाभारते विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ६९

उत्तरेण कौरवजयस्य देवपुत्रकृतत्वमुक्त्वातत्पराक्रमं चोपवर्ण्य तं दिदृक्षते राज्ञे स संप्रत्यन्तर्हितो द्वित्रैरहोभिः प्रादुर्भविष्यतीत्यभिधानम् ॥ १ ॥ पार्थेनोत्तरायै रणाहृतवस्त्रभूषणादिसमर्पणम् ॥ २ ॥ उत्तरेण सह पाण्डवैरग्रेतनकर्तव्यमन्त्रणम् ॥ ३ ॥

उत्तर उवाच—
न मया निर्जिता गावो न मया निर्जिताः परे ।
कृतं तत्सकलं तेन देवपुत्रेण केनचित् ॥ १ ॥
स हि भीतं द्रवन्तं मां देवपुत्रो न्यवर्तयत् ।
स चातिष्ठद्रथोपस्थे वज्रसंहननो युवा ॥ २ ॥
तेन ता निर्जिता गावः कुरवश्च पराजिताः ।
तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ॥ ३ ॥
स हि शारद्वतं द्रोणं द्रोणपुत्रं च षड्रथान् ।
सूतपुत्रं च भीष्मं च चकार विमुखान् शरैः ॥ ४ ॥
दुर्योधनं विकर्णं च सनागमिव यूथपम् ।
प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलः ॥ ५ ॥
न हास्तिनपुरे त्राणं तव पश्यामि किंचन ।
व्यायामेन परीप्सस्व जीवितं कौरवात्मज ॥ ६ ॥
न मोक्ष्यसे पलायंस्त्वं राजन् युद्धे मनः कुरु ।
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ॥७॥
स निवृत्तो नरव्याघ्रो मुञ्चन्वज्रनिभाञ्शरान् ।
सचिवैः संवृतो राजा रथे नाग इव श्वसन् ॥ ८ ॥
तं दृष्ट्वा रोमहर्षोऽभूदूरुकम्पश्च मारिष ।
स तत्र सिंहसंकाशमनीकं व्यधमच्छरैः ॥ ९ ॥

---

[ नील० ] अवगाढाः पराभूताः ॥ ७५ ॥ प्रकाल्य निर्जित्य ॥ ७६ ॥

इति श्रीनैल० भारतभावदीपे वि० प० अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[अर्जु०] अवगाढा विलोडिताः। सुखः सुखकरः॥७५॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[सर्व०] कृच्छ्रयोगा······वगाढाः पराभूताः ॥ ७५ ॥ प्रकाल्य निर्जित्य ॥ ७६ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ विरो० ] अवगाढा विलोडिताः ॥ ७५ ॥ शार्दूलानां मध्ये ॥ ७६ ॥

इति श्रीमहाभारत० विरोधार्थ० वि. प. अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[विष०] अवगाढाः प्रबलाः शत्रवः अवगाहिताः । सुखो वातोऽभिवाति मामिति पाठे इति लोकोक्तिच्छाया ॥ ७५ ॥

इति श्रीमहाभारतविषमपद० वि० प० अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ नील० ] न मयेति ॥ १ ॥ व्यायामेन नित्यं देशान्तरसंचारेण । एतेन स देवपुत्रस्तेषामग्रेऽपि नाशं करिष्यतीति सूचितम् ॥ ६ ॥ रोमहर्षोऽभून्ममेति शेषः ॥ ९ ॥

[अर्जु०] भीतं द्रवन्तं पलायमानं वज्रसंहननः वज्रकायः ॥ २ ॥ व्यायामेन युद्धेन परीप्सस्व रक्ष ॥ ६ ॥ अनभ्रघनसंकाशं निरस्तमेघसदृशं व्यधमत् दग्धवान् ॥ ९ ॥

[ सर्व० ] व्यायामः नित्यदेशान्तरसंचारः ॥ ६ ॥

[ विरो० ] अभ्रघनेति अभ्रमाकाशं तत्तुल्यमनवधित्वेन, मेघतुल्यं निबिडत्वेन च ॥ ९ ॥

[ विष० ] व्यायामेन श्रमेण हेतुना जीवितं परीप्सस्व प्राप्नुहि । अधुना श्रान्तोऽसि श्रान्तं कथमहं हन्मीति जीव ॥ ६ ॥ सचिवैः सहायैः ॥ ८ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ लक्षा० ] व्यायामेन परीप्सस्वेत्यत्र व्या···॥ ६ ॥

---

७४ व. पर्वतानपि विध्येत । व. शितेषुभिः । ७५ च. ज. ङ. त्वं गोधनमाजैषीः । ७६ °वैषां बाहुशालिनाम् । ग. घ. व. नरर्षभान्; व युद्धविशारदान् । ज. शार्दूलानामिवामिषम् । अष्टषष्टितमोऽध्यायः ।

१ क. मया कुरवो जिताः । क. च. व. कृतं कर्म तत्सर्वं । २ छ. ज. दे. °त्रो न्यवारयत् । ३ व. मया कर्म । ४ क. ज. व. च वीर्यवान् । व. °खान्कुरून् ५ क. °नं च समरे प्रभिन्नमिव कुञ्जरम् । ज. प्रभग्नमब्रवीद्भीतं देवपुत्रो म° । व. प्रयातमब्रवीद्भी° । ८ व. यथा नागो निश्विश्वसन् । ९ व. तत्र मेरो°-दूरु. स्तम्भश्च मेऽभवत् । व. यदभ्रघनसंकाशं ।

तत्प्रगृह्य रथानीकं सिंहसंहननो युवा ।
कुरूंस्तान्प्रहसन्राजन्संस्थितान्हृतवाससः ॥ १० ॥
एकेन तेन वीरेण षड्रथाः परिनिर्जिताः ।
शार्दूलेनेव मत्तेन यथा वनचरा मृगाः ॥ ११ ॥

विराट उवाच—

क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ।
यो मे धनमथाजैषीत्कुरुभिर्ग्रस्तमाहवे ॥ १२ ॥
इच्छामि तमहं द्रष्टुमर्चितुं च महाबलम् ।
येन मे त्वं च गावश्च रक्षिता देवसूनुना ॥ १३ ॥

उत्तर उवाच—

अन्तर्धानं गतस्तत्र देवपुत्रो महाबलः ।
स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥१४॥

वैशम्पायन उवाच—

एवमाख्यायमानं तु छन्नं सत्रेण पाण्डवम् ।
वसन्तं तत्र नाज्ञासीद्विराटो वाहिनीपतिः ॥ १५ ॥
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ॥१६॥
उत्तरा तु महार्हाणि विविधानि नवानि च ।
प्रतिगृह्याभवत्प्रीता तानि वासांसि भामिनी ॥१७॥
मन्त्रयित्वा तु कौन्तेय उत्तरेण महात्मना ।
इतिकर्तव्यतां सर्वां राजन्पार्थे युधिष्ठिरे ॥ १८ ॥
ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ ।
सह पुत्रेण मत्स्यस्य प्रहृष्टा भरतर्षभाः ॥ १९ ॥

इति श्रीमहाभारते विराटपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

समाप्तं गोहरणपर्व ।

## ( अथ वैवाहिकपर्व ५ )

### सप्ततितमोऽध्यायः ७०

स्वप्रकाशने कृतबुद्धिभिः पाण्डवैरुचितवेषादि धृत्वा सदोगतैर्नृपासनेषूपवेशनम् ॥ १ ॥ ततः प्रविष्टेन राज्ञा तांस्तथावस्थितान्वीक्ष्य सरोषं कङ्कबुद्ध्या युधिष्ठिरस्य राजासनोपवेशनाक्षेपः ॥ २ ॥ अर्जुनेनास्येन्द्रासनारोहणार्हत्वमभिधाय गुणानुवर्णप्रक्रमेण युधिष्ठिरत्व-ख्यापनम् ॥ ३ ॥

वैशम्पायन उवाच—

ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ॥ १ ॥
युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।
द्वारि मत्ता यथा नागा भ्राजमाना महारथाः ॥ २ ॥

---

दूरात्स्तम्भश्च मेऽभवदित्यत्र स्तम्भः मनोवाक्कायादीनां स्तम्भनम् ॥ ९ ॥

इति श्रीमहाभारतव्याख्याने वादिराजविरचिते लक्षालंकारे विराटपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ नील० ] सत्रेण व्याजेन ॥ १५ ॥ मन्त्रयित्वेति । युधिष्ठिरे युधिष्ठिरविषये इतिकर्तव्यताम् अग्रे कर्तुमिष्टां भद्रासने राज्ञ उपवेशनादिरूपां क्रियामुत्तरेण सह मन्त्रयित्वा तथा यथामन्त्रं तत् तां व्यदधादित्युभयोरन्वयः । हे राजन् जनमेजय! ॥१८॥ प्रहृष्टा अभूवन्निति शेषः ॥१९॥

इति श्रीनैल० भारतभावदीपे वि. प. एकोनसप्ततितमोऽध्यायः ॥६९॥

[ अर्जु० ] छन्नमाच्छादितम् । सत्रेण छद्मना ॥ १५ ॥ तनूनि सूक्ष्माणि ॥ १७ ॥

इति श्रीमहाभा० मर्जुनमिश्रकृ० वि. प. एकोनसप्ततितमोऽध्यायः॥६९॥

[ सर्व० ] इतिकर्तव्यता सिंहासने राज्ञ उपवेशनादि-रूपा ॥ १८ ॥

इति श्रीसर्व० भारतार्थप्रकाशे वि. प. एकोनसप्ततितमोऽध्यायः ॥६९॥

[ विरो० ] श्वो वा परश्वो वेति अर्जुनेन समाप्तप्राय-व्रतकथनेन सामीप्यमात्रावगतेः संदेहः ॥ १४ ॥ तत् मन्त्रितं कार्यम् ॥ १९ ॥

इति श्रीमहाभारत० विरो० वि. प. एकोनसप्ततितमोऽध्यायः ॥६९॥

---

[ नील० ] तत इति ॥ १ ॥

[ अर्जु० ] सर्वाभरणसंपन्नाः [ अभिपद्माः ] सर्वतो बिन्दवः अथवा अभिमुखीकृतलक्ष्मीकाः ॥ २ ॥

[ विरो० ] तृतीये उत्तरगोग्रहदिनात् तृतीये दशम्याम् । अभिपन्ना आदौ आपद्गता भ्रातरः ॥ २ ॥

---

१० व. °हसिंहसमो । व. ज स्तांस्त्वहसद्राजन्वासांस्यापहरद्बली । १२ क. यो ममामोचयत्पुत्रं । ङ. दे. व. धनमवाजैषीत् । १३ क. °वश्च मोक्षिता । १४ क. ज. व. गतस्तात देवपुत्रः प्रतापवान् । व. अद्यश्वो । १५ क. ग. घ. व. ज. विराटः पार्थमर्जुनम् । १६ क. ददौ वस्त्राणि रत्नानि वि° । १७ क. वस्त्राण्याभरणानि । व. ज. तनूनि च । क. प्रगृह्य तानि सर्वाणि प्रीता सानुचराऽभवत् । १८ ज. °रेण तदा सह; रहस्तदा । १९ व. °था स पुरुषर्षभः । व. संप्रहृष्टोनरर्षभः । एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

१ क. ततो द्वितीये । क. व. सर्वे सुचरितव्रताः । २ क. अभिपन्ना महाभागाः; व. अतिपन्नाः; ज. अभिपद्मा ।

विराटस्य सभां गत्वा भूमिपालासनेष्वथ ।
निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः ॥ ३ ॥
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।
आजगाम सभां कर्तुं राजकार्याणि सर्वशः ॥ ४ ॥
श्रीमतः पाण्डवान् दृष्ट्वा ज्वलतः पावकानिव ।
मुहूर्तमिव च ध्यात्वा सरोषः पृथिवीपतिः ॥ ५ ॥
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमिव स्थितम् ।
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ६ ॥
स किलाक्षातिवापस्त्वं सभास्तारो मया वृतः ।
अथ राजासने कस्मादुपविष्टः स्वलंकृतः ॥ ७ ॥

**वैशम्पायन उवाच—**

परिहासेप्सया वाक्यं विराटस्य निशम्य तत् ।
स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ॥ ८ ॥

**अर्जुन उवाच—**

इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ॥ ९ ॥
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याऽधिको लोके तपसां च परायणम् ॥ १० ॥
एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे ।
न चैवान्यः पुमान्वेत्ति न वेत्स्यति कदाचन ॥ ११ ॥
न देवा नासुराः केचिन्न मनुष्या न राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ १२ ॥
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ।
पाण्डवानामतिरथो यज्ञधर्मपरो वशी ॥ १३ ॥
महर्षिकल्पो राजर्षिः सर्वलोकेषु विश्रुतः ।
बलवान्धृतिमान्दक्षः सत्यवादी जितेन्द्रियः ।
धनैश्च संचयैश्चैव शक्रवैश्रवणोपमः ॥ १४ ॥
यथा मनुर्महातेजा लोकानां परिरक्षिता ।
एवमेष महातेजाः प्रजानुग्रहकारकः ॥ १५ ॥
अयं कुरूणामृषभो धर्मराजो युधिष्ठिरः ।
अस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ॥ १६ ॥
संसरन्ति दिशः सर्वा यशसोऽस्य इवांशवः ।
उदितस्येव सूर्यस्य तेजसोऽनु गभस्तयः ॥ १७ ॥
एनं दशसहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन् यावदध्यावसत्कुरून् ॥ १८ ॥
त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुस्तदा ॥ १९ ॥
एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ।
अब्रुवन्मागधैः सार्धं पुरा शक्रमिवर्षयः ॥ २० ॥

---

[ विष० ] अभिपद्माः 'पद्मा लक्ष्मीर्निधिः पद्मः पद्मानि गजबिन्दवः ।' पाण्डवपक्षे सश्रीकाः । अभिमुखा पद्मा लक्ष्मीर्येषां ते । गजपक्षे मदोन्मत्ता इत्यर्थः ॥ २ ॥

[नील०] धिष्ण्येषु आयतनेषु ॥ ३ ॥ अक्षातिवापः अक्षान् अतिवपतीति तथा द्यूतकारी ॥ ७ ॥ परिहासेप्सया सनिन्दोपालम्भमपेक्ष्य यद्विराटस्य वाक्यं तन्निशम्य ॥ ८ ॥ अस्य इवेत्यत्र संधिरविवक्षितः । उपमेयद्वयस्योपमाद्वयसूचनमेकेनापि इवशब्देन भवति तथाऽप्यत्र स्पष्टार्थं पुनरिवग्रहणम् ॥ १७ ॥ अब्रुवन् अस्तुवन् ॥ २० ॥

[ अर्जु० ] धिष्ण्येषु गृहेषु ॥ ३ ॥ अक्षवापकः अक्षक्षेपकः ॥ ७ ॥ परिहासेच्छया अर्जुनोऽब्रवीद् इत्यन्वयः ॥ ८ ॥ अध्यावसत् अधिष्ठितवान् ॥ १८ ॥

[ सर्व० ] धिष्ण्येषु आयतनेषु ॥ ३ ॥ अक्षानतिवपतीति तथा । द्यूतकारीत्यर्थः ॥ ७ ॥

इति श्रीसर्व० भारतार्थ० वि० प० सप्ततितमोऽध्यायः ॥ ७० ॥

[ विरो० ] पावकप्रख्यास्तेजस्विनः ॥ ३ ॥ कार्याणि कर्तुम् ॥ ४ ॥ उपादाय ज्वलन्तम् (?) ॥ ५ ॥ अहं लक्ष्मीनिवासस्त्वम् ; अहो अक्षनिवापस्त्वं ( दे ); त्वं सभास्तारो; त्वमक्षवापो ( दे के ) ॥ ७ ॥ वेत्ति अनन्तगुणवत्त्वादिति ( शे ) ॥ ११ ॥ संचयैः सम्यग्यज्ञैः । शक्रदृष्टान्तमादाय ॥ १४ ॥

[ विष० ] पञ्चाग्नयो गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्यनामानः । पाण्डवाः पञ्च ॥ ३ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

३ च. व. गत्वा महाराजासनेषु च ( क. °षु ते ) ° ख्याः सत्रे । ४ क. सभां राजा उत्तरेण सह प्रभो । स तान्दृष्ट्वा महासत्त्वान् । ५ श्लोकमध्येऽधिकं व. ज. अचिन्तयत्कथमिमे सभामागम्य भूषिताः । अतिष्ठन्देवसंकाशाः कथमन्वविशन्निह । ज. कथं नुप्रविशन्निह । ६ ज. मरुद्भिः संवृतः । व. °णैः सहासीनं । ७ ज. न किलाक्षनिवाप° । क. व. मया कृतः । व. विष्टोऽस्यलं° । ८ क. °नोब्रवीद्वाक्यमर्जुनः परवीरहा । ९ व. ज. °स्याप्यासनं रा°; क. °त्यागी सर्वलोकाभिपूजितः । १० ज. एकबुद्ध्या । ११ व. एषोऽस्त्रविद्वान्संग्रामे । व. नैवमन्यः पुमान्वेत्ति न च वेत्स्यति कश्चन । १३ ज. °दर्शी महाबाहुः । व. ज. यज्वा दानपतिर्वशी । १४ व. ज. °मान्सौम्यः; व. त्रिपु वैश्र° । १५ क. एवमेव । १६ क. च. व. ज. °षभो कुन्तीपुत्रो । १७ ज. संचरन्ति दिशः । व. यथांशवः । १८ व. शतसहस्राणि; त्रिंशत्सह । १९ क. °णि रथानां रथिनांवरम् । २० ज. अस्तुवन्मागधै राजन्पुरा; क. तुष्टुवुर्माग° ।

एवं नित्यमुपासन्त कुरवः किंकरा यथा ।
सर्वे च राजन् राजानो धनेश्वरमिवामराः ॥ २१ ॥
एष सर्वान्महीपालान् करदान्समकारयत् ।
वैश्यानिव महाभागो विवशान्स्ववशानपि ॥ २२ ॥
अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानमेनं सुचरितव्रतम् ॥ २३ ॥
एष वृद्धाननाथांश्च पङ्गूनन्धांश्च मानवान् ।
पुत्रवत्पालयामास प्रजा धर्मेण वै विभुः ॥ २४ ॥
एष धर्मे दमे चैव क्रोधे चापि जितव्रतः ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः ॥२५॥
शीघ्रं तापेन चैतस्य तप्यते स सुयोधनः ।
सगणः सह कर्णेन सौबलेनापि वा विभुः ॥ २६ ॥
न शक्यन्ते ह्यस्य गुणाः प्रसंख्यातुं नरेश्वर ।
एष धर्मपरो नित्यमनृशंसश्च पाण्डवः ॥ २७ ॥
एवं युक्तो महाराजः पाण्डवः पार्थिवर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपते ॥ २८ ॥

इति श्रीमहाभारते विराटपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ७१

भीमादीन्पृच्छते विराटायार्जुनेन बल्लवादीन् भीमत्वादिना निरूप्य सर्वेषां तद्गृहे सुखेन निवासाभिधानम् ॥ १ ॥ पुनर्हृष्टेनोत्तरेणा-साधारणाकारेण युधिष्ठिरादीन्निर्दिश्यार्जुनपराक्रमवर्णनम् ॥ २ ॥ उत्तरेण सह संमन्त्र्य राज्ञा सकोशदण्डराज्यनिवेदनेन युधिष्ठिरं प्रसाद्य मुदा सर्वांश्चाभिनन्द्योत्तराया अर्जुनभार्यात्वेन प्रतिग्रहप्रार्थनम् ॥ ३ ॥ स्नुषात्वेनार्जुनेन तस्याः स्वीकारः ॥ ४ ॥

**विराट उवाच—**

यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ १ ॥
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी ।
यदा द्यूतजिताः पार्था न प्राज्ञायन्त ते क्वचित् ॥२॥

**अर्जुन उवाच--**

य एष बल्लवो ब्रूते सूदस्तव नराधिप ।
एष भीमो महाराज भीमवेगपराक्रमः ॥ ३ ॥
एष क्रोधवशान्हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ॥४॥
गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रानृक्षान् वराहांश्च हतवांस्त्रीपुरे तव ॥ ५ ॥
यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तपः ।
गोसंख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ॥ ६ ॥
शृङ्गारवेषाभरणौ रूपवन्तौ यशस्विनौ ।
महारथसहस्राणां समर्थौ भरतर्षभौ ॥ ७ ॥
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन्यस्यार्थे कीचका हताः ॥ ८ ॥
अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः ।
भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ॥ ९ ॥
उषिताः स्मो महाराज सुखं तव निवेशने ।
अज्ञातवासमुषिता गर्भवास इव प्रजाः ॥ १० ॥

---

[ नील० ] शीघ्रं तीव्रम् ॥ २६ ॥

इति श्रीनैल० भारतभावदीपे वि० प. सप्ततितमोऽध्यायः ॥ ७० ॥

[ अर्जु० ] स्नातकानां तथाच कात्यायनः अधीत्य स्नायादिति स्नानं विवाहः ॥ २३ ॥ अभिभवतीत्यभिभूः श्रीप्रतापेन ॥ २६ ॥

इति श्रीमहा० मर्जुनमि० विराटपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

[ विरो० ] विवशान् महीपालान् । स्ववशान् वैश्यभिन्नान् स्वराज्यस्थान् ॥ २२ ॥ श्रीप्रतापेन श्रीसहितप्रतापेन । विभोः; अभिभूः (दे) ॥ २६ ॥

इति श्रीमहाभा० विरोधार्थ० वि. प. सप्ततितमोऽध्यायः ॥ ७० ॥

[ नील० ] यदिति ॥ १ ॥

[ अर्जु० ] स्त्रीपुरे अन्तःपुरे ॥ ५ ॥ गोसंख्यः गोपालकः ॥ ६ ॥

[ सर्व० ] क्रोधवशान् कुबेरानुचरान् । सौगन्धिकं कमलविशेषः । कृष्णा द्रौपदी ॥ ४ ॥

[ विरो० ] यदा संभावनायां वितर्के वा ॥ २ ॥ व्यक्तमनुपहतम् । श्रोत्रमागतः श्रुतः । सोऽहमित्यर्थः ॥ ९ ॥ गर्भवासे उदरे ॥ १० ॥

---

२१ क. राजानं । २२ व. करमाहारयत्तदा; ज. ( स्वयम् ) । ज. महाराजा करदानिव सर्वदा । २३ व. °नां दिने दिने । क. सुचरितव्रताः । २४ क. ङ. व. श्च व्यङ्गान्पङ्गूंश्च वामनान् । क. ङ. व. °ण चाभिभूः । २५ घ. धर्मे धुरि प्रोक्तः । क. °व दाने सत्ये रतः सदा । व. महाप्रसादो धर्मज्ञः । २६ ग. घ. च. व. श्रीप्रतापेन । क. ज. श्रीमत्संपत्प्रभावेन तप्यते यस्य कौरवः । क. °न च वीर्यवान् । २७ ज. °मानृशंस्यपरस्तथा; °मनृशंसः सुशीलवान् । २८ ज. एष सर्वगुणोपेतः पार्थिवः । क. व. पृथिवीपतिः ॥ वि. प. सप्तति० ॥ ७० ॥

२ क. यदाह्यक्षैर्जिताह्येते नान्तरा श्रूयते कथा । ३ क. एष बल्लोऽभूत्ते सूपकारश्च ते नृप । व. °वो राजन्सू° क. महाभाग । च. °राज श्रीमान्भीमपरा° व. श्रीमान्सत्य° । ४ व. सयक्षान्राक्षसाञ्जित्वा । क. °कानि पुष्पाणि । ५ ज. व्याघ्रान्हत्वा वराहांश्च हतवाँस्त्री°; क. हतवांश्च पु° । ६ क. °त्रौ महाबलौ । ७ क. व. °न्तौ मनस्विनौ । क. ग. नानारथसहस्राणां । ज. °णां जेतारौ भ° । ९ व. अस्म्यर्जुनो महा° । व. क्लीबत्वमहमन्वगाम् । व °भ्यां चाभिपूजितः । १० व. अज्ञातवासं सुखिताः

**वैशम्पायन उवाच—**

यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
तदाऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ ११ ॥
महेन्द्रकल्पस्य तदा स प्रहृष्टतनूरुहः ।
पुनरेव च तान्पार्थान् दर्शयामास चोत्तरः ॥ १२ ॥

**उत्तर उवाच—**

य एष जाम्बूनदशुद्धगौर-
तनुर्महान् सिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घबाहु-
स्ताम्रायताक्षः कुरुराज एषः ॥ १३ ॥
अयं पुनर्मत्तगजेन्द्रगामी
प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसो गुरुदीर्घबाहु-
र्वृकोदरः पश्यत पश्यतैनम् ॥ १४ ॥
यस्त्वेव पार्श्वेऽस्य महाधनुष्मान्
श्यामो युवा वारणयूथपोपमः ।
सिंहोन्नतांसो गजराजगामी
पद्मायताक्षोऽर्जुन एष वीरः ॥ १५ ॥
राज्ञः समीपे पुरुषोत्तमौ तु
यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके सकले समोऽस्ति
ययोर्न रूपे न बले न शीले ॥ १६ ॥
आभ्यां तु पार्श्वे कनकोत्तमाङ्गी
यैषा प्रभा मूर्तिमतीव गौरी ।
नीलोत्पलाभा सुरदेवतेव
कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥ १७ ॥

**वैशम्पायन उवाच—**

एवं निवेद्य तान्पार्थान्पाण्डवान्पञ्च भूपतेः ॥
ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ १८ ॥

**उत्तर उवाच—**

अयं स द्विषतां हन्ता मृगाणामिव केसरी ।
अचरद्रथवृन्देषु निघ्नंस्तांस्तान्वरान्रथान् ॥ १९ ॥
अनेन विद्धो मातङ्गो महानेकेषुणा हतः ॥
सुवर्णकक्षः सङ्ग्रामे दन्ताभ्यामगमन्महीम् ॥ २० ॥
अनेन विजिता गावो जिताश्च कुरवो युधि ।
अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ॥ २१ ॥

**वैशम्पायन उवाच—**

तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।
उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ २२ ॥

---

[ नील० ] प्रचण्डघोणः पृथुनासिकः घोणा कन्धरेऽत्यपि ॥ १३ ॥ अभिपन्नोऽपराधं कृतवान् ॥ २२ ॥

[ अर्जु० ] तनुः 'षण्णवत्यङ्गुलोच्छ्रायस्तनुरित्यभिधीयते' चतुर्हस्त प्रमाण इत्यर्थः । प्रचण्डघोणः प्रचण्डा घोणा नासिका यस्येति विग्रहः ॥ १३ ॥ पृथुर्महानायतोंऽसो यस्य सः ॥ १४ ॥ हिरण्यकक्षः सुवर्णबद्धकक्षः ॥ २० ॥

[ चतु० ] प्रचण्डा बृहती घोणा नासिका यस्येति विग्रहः । पृथुनी स्थूले दीर्घे च नेत्रे यस्य सः । ताम्रे (ताम्रवल्लोहिते) आयते च अक्षिणी यस्य सः ॥ १३ ॥ आभ्यामनयोः । सौरी सूर्यसंबन्धिनी प्राप्तयौवना । गौरीति पाठे पार्वतीव सर्वेश्वरी । प्रकृष्टा भा दीप्तिर्यस्याः सा प्रभा सुरदेवता नगराधिष्ठात्री देवता ॥ १७ ॥ हिरण्यकक्षः सुवर्णशृङ्खलः ॥ २० ॥ प्रतिपन्नः प्रतिपत्तिर्मानः । अभिपन्न इति पाठः ॥ २२ ॥

[ सर्व० ] प्रचण्डघोणः पृथुनासिकः ॥ १३ ॥

[ विरो० ] तनुर्विस्तृतदेहः कृशो वा ॥ १३ ॥ कुले संताने उत्तमपुत्रवत्त्वात् । ज्ञाने वा ॥ १६ ॥ कनकं कृष्णधत्तूरः । यद्वा कनकमुत्तमं यस्मात्कनकोत्तमोऽग्निस्तस्मादङ्गं यस्याः । सौरी; चान्द्री; गौरी । अभिपन्नोऽपराद्धः ॥ २२ ॥

---

१३ व. सिंह इव प्रसिद्धः । १४ च. ङ. °बाहुस्ताम्रायताक्षः स वृकोदरोऽयम् । व. दे. पश्यति पश्य° । १५ व. गजखेलगामी । १६ व. न कुले । १७ ज. राज्ञस्तु पार्श्वे प्रमदोत्तमाग्र्या । ज. व. मूर्तिमयीव सौरी । श्लोकान्तेऽधिकं ग. भूतपूर्वं न कस्यापि हर्षेणोत्फुल्ललोचनः; घ. व. महेन्द्रकल्पस्य तदा संप्रहृष्टतनूरुहः । १९ ज. व. °पतां मध्ये । क. निघ्नंस्तेषा परावरान्; व. वरान्वरान् । २० क. विद्धा मातङ्गा महामेघोपमास्तदा । ज. व. हिरण्यकक्षः (क्ष्याः) । २२ क. उत्तरः प्र° ।

---

२१ श्लोकमध्येऽधिकं ग.

तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ।
एष भीतं द्रवन्तं मां देवपुत्रो न्यवारयत ॥
अस्य बाहुबलेनास्मि जीवन्नभ्यागतः पुरम् ॥

ज. व.

अनेन तात धीरेण भीष्मद्रोणमुखा रथाः ।
दुर्योधनेन सहिता निर्जिता भीमकर्मणा ॥
अयं द्रवन्तं भीतं मां देवपुत्रो न्यवारयत् ।
अस्य बाहुबलेनास्मि जीवन्नभ्यागतः पुनः ॥

प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये ।
उत्तरां च प्रयच्छामि पार्थाय यदि मन्यसे ॥ २३ ॥

उत्तर उवाच—

आर्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् ।
पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः ॥२४॥

विराट उवाच—

अहं खल्वपि संग्रामे शत्रूणां वशमागतः ।
मोक्षितो भीमसेनेन गावश्चापि जितास्तथा ॥ २५ ॥
एतेषां बाहुवीर्येण अस्माकं विजयो मृधे ।
एवं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् ॥
प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् ॥ २६ ॥
यदस्माभिरजानद्भिः किंचिदुक्तो नराधिपः ॥
क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ॥ २७ ॥

वैशम्पायन उवाच—

ततो विराटः परमाभितुष्टः
समेत्य राजा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै
सदण्डकोशं सपुरं महात्मा ॥ २८ ॥
पाण्डवांश्च ततः सर्वान्मत्स्यराजः प्रतापवान् ।
धनञ्जयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ॥२९॥
समुपाघ्राय मूर्धानं संश्लिष्य च पुनः पुनः ।
युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ ॥ ३० ॥
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ।
स प्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ॥ ३१ ॥
दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
दिष्ट्या संपालितं कृच्छ्रमज्ञातं वै दुरात्मभिः ॥३२॥
इदं च राज्यं पार्थाय यच्चान्यदपि किंचन ॥
प्रतिगृह्णन्तु तत्सर्वं पाण्डवा अविशङ्कया ॥ ३३ ॥
उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ३४ ॥
एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम्
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ॥ ३५ ॥
प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव ।
युक्तश्च नौ हि संबन्धो मत्स्यभारतयोरपि ॥ ३६ ॥

इति श्रीमहाभारते विराटपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

[ विष० ] प्रलम्बघोणः दीर्घनासिकः ॥ १३ ॥

[ नील० ] समेत्य पुत्रेण सह समयं निश्चयं चकार विससर्ज ददौ ॥ २८ ॥ औपयिकः उचितः ॥ ३४ ॥

इति श्रीनैल० भारतभावदीपे वि. प. एकसप्ततितमोऽध्यायः ॥७१॥

[अर्जु०] युक्तं चावां हिं संबन्धः हि यस्मात् मत्स्यभारतसत्तमौ अत आवयोः संबन्धः युक्तः उचित इति योज्यम् । अथवा षष्ठ्यर्थे प्रथमा ॥ ३६ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां विराटपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[चतु०] अर्च्याः पूजार्हाः । आर्या इति पाठः । मान्याः स्तव्याः ॥ २४ ॥ वाहिनीपतिरिव वाहिनीपतित्वेनाधिकृतत्वात् पित्रा, स्वाभाविकं तस्य तन्नामेति बहुशः प्रयोगाः ॥ ३१ ॥ पारितं समापितम् । संपालितमिति पाठः ॥ ३२ ॥ युक्तश्च संबन्धो हि यस्मादावां मत्स्यभारतसत्तमावित्यन्वयः ॥ ३६ ॥

इति श्रीचतु० महाभारत० वि. प. एकसप्ततितमोऽध्यायः ॥७१॥

[ सर्व० ] औपयिकः उचितः ॥ ३४ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ विरो० ] प्राप्तः कालो यस्य तत्प्रसादनम् ॥ २३ ॥ पूज्या वस्त्रादिना । मान्या वाचा । प्राप्तकालं प्रसादनम् । पूजनार्हाः सर्वत्र सर्वेषां । यतः पूजार्हाः ॥ २४ ॥ समयं यथोचिताचारम् ॥ २८ ॥ पाण्डवान्पुरस्कृत्य आदराधिक्यार्थं धनंजयमिति पृथक् धनंजयं च ॥ २९ ॥ स्नुषां स्नुषात्वेनेत्यर्थः । आवां मत्स्यभारतसत्तमौ अत एव संबन्धो युक्त इत्यर्थः ॥ ३६ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ विष० ] अर्चनं चन्दनवस्त्रादिना । पूजा यानासनादिना । मा(न)नं प्रशंसादि ॥ २४ ॥

इति श्रीमहाभारतविषमपदविवरणे विराटपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

२३ व. हि रोचते । २४ ज. व. अर्च्याः पूज्याः । क. °न्याश्च प्रत्युत्थेयाश्च पाण्डवाः । अर्घार्हाश्चाभिवाद्याश्चेत्यधिकम् । व. महाभाग्याश्च । २६ दे. व. बाहुवीर्ये तद्यदस्माकं जयो रणे । ग. घ. च. वयं सर्वे । व. पुरुषर्षभम् । २८ ज. व. °मेत्य राज्ञा । व. कोशं सबलं । ३० ज. व. °घ्राय मूर्ध्न्येतान्सं' ३२ ज. व. दिष्ट्या च पारितं । ३३ ज. व. °ज्यं वः पार्था ज. व. °वै कौन्तेया । ३४ व °ची परन्तपः । ३५ ज. एवमुक्तो धर्मराजं पार्थमैक्षद्धनंजयः । स ईक्षितस्तदा भ्रात्रा मत्स्यं वचनमब्रवीत् । प्रतिगृह्णाम्ययं राजन्स्नु । ३६ ज. व. अ. छ. युक्त आवां हि । ज. व. भारतसत्तमौ । एकसप्ततितमोऽध्यायः॥७१॥

## द्विसप्ततितमोऽध्यायः ७२

राज्ञा पृष्टेनार्जुनेनोत्तराया भार्यात्वेनापरिग्रहे लोकान्यथाशङ्कापाकरणरूपहेत्वभिधानम् ॥ १ ॥ विराटेनार्जुनप्रशंसनपूर्वकमभिमन्यवे कन्यादानाङ्गीकारः ॥ २ ॥ युधिष्ठिरेण तदनुज्ञानम् ॥ ३ ॥ विराटेन युधिष्ठिरेण च श्रीवासुदेवाय सुहृद्भ्यश्च दूतप्रेषणम् ॥ ४ ॥ पाण्डवानामुपप्लव्यगमनम् ॥ ५ ॥ तत्र सर्वेषां समागमनं विवाहो सवश्च ॥ ६ ॥

**विराट उवाच—**
किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ १ ॥

**अर्जुन उवाच—**
अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्तां पितृवन्मयि ॥ २ ॥
प्रियो बहुमतश्चासं नर्तको गीतकोविदः ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ३ ॥
वयस्थया तया राजन्सह संवत्सरोषितः ।
अतिशङ्का भवेत्स्थाने तव लोकस्य वा विभो ॥४॥
तस्मान्निमन्त्रयेऽयं ते दुहितां मनुजाधिप ।
शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ५॥
स्नुषायां दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ६ ॥
अभिशापादहं भीतो मिथ्यावादात्परन्तप ।
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ॥ ७ ॥

[ नील० ] किमर्थमिति ॥ १ ॥ या शङ्का भवेत् सा स्थाने उचिता ॥ ४ ॥ अयमहं ते तव दुहितां निमन्त्रये स्नुषात्वेन याचे । दुहिता दुर्हिता दूरे हितेति यास्केन निरुक्तत्वात् । वर्णविकारेण दुहिताशब्द आकारान्तोऽप्यस्ति एवं च स्नुषात्वेन एनां वरयतो मे ब्रह्मचर्यशुद्धिरपि भविष्यतीत्याह–शुद्ध इति ॥ ५ ॥ अभिशापात् भार्यार्थे प्रतिग्रहेऽनयोः प्रागेव संबन्ध आसीदिति कल्पयतो लोकस्य दुर्वाक्यभयात् ॥ ७ ॥

[ अर्जु० ] शुद्धं पितृतो मातृतः स्वतश्च दान्तं नियमितमानसं निमन्त्रये पुत्रमिति शेषः । तस्याः शुद्धिः तस्या वयस्थायाः उत्तरायाः सा हि आवयोः शुद्धिः परस्यावाच्ये ततोऽनेन प्रकारेण मया कृता ॥ ५ ॥ स्नुषायाः पुत्रे विषयभूते आत्मनि विषयभूते दुहितुरतिशङ्कां न पश्यामि इत्यन्वयः ॥ ६ ॥ अतिसंबन्धात् कामपूर्वकात् असत्यशङ्कात् मिथ्याचारात् अनृतेनाचारात् अनृतारोपितादित्यर्थः ॥ ७ ॥

[ चतु० ] आचार्यवच्च मन्यते इति न विवाहगमनेति दर्शितम् ॥ ३ ॥ जनस्याभिशङ्का जनस्य जनमात्रस्य स्थाने उचिता । तत्र हेतुः–वयःस्थेति ॥ ४ ॥ अहं त्वा निमन्त्रये । ते अभिशङ्का किमत आह–दुहिता तवेति शेषः शुद्धो दोषहीनः मातृतः पितृतश्च । जितेन्द्रियः स्वाधीनेन्द्रियः । शान्तः शुद्धबहिरिन्द्रियः । दान्त इति पाठः । ननु एवं कथं क्रियते मदुक्तमपहायेत्यत आह–तस्या इति । तस्यास्त्वत्पुत्रिकायाः सहवासस्य शुद्धिः परस्यावाच्यता मयैवं कृता ॥ ५ ॥ ननु कथं शङ्का निराकृतेत्यत आह–स्नुषायामिति । स्नुषायां पुत्रवध्वां सत्यां तव दुहितरि विषयभूतायां पुत्रे अभिमन्यौ विषयभूते तव दुहितुरतिशङ्कां न पश्यामि । तेन हेतुना शुद्धिः सर्वेषां भविष्यति ॥ ६ ॥ अतिवङ्गात्कामपूर्वात्संबन्धात् मिथ्याचारादारोपितात् । अतिशङ्कादिति पाठे त्रानिन (?) शङ्का यस्मात्तदतिशङ्कमुत्तराविवाहलक्षणं कर्म तस्मात् ॥ ७ ॥

[ सर्व० ] सा शङ्का भवेत्स्थाने उचिता ॥ ४ ॥ निमन्त्रये याचे एवं च स्नुषात्वेनैनां वरयतो मे ब्रह्मचर्यशुद्धिरपि भविष्यतीत्याह–शुद्ध इति ॥ ५ ॥ अभिशापात् भार्यार्थं प्रतिग्रहे अनयोः प्रागेव संबन्ध आसीदिति लोकस्य दुर्वाक्यभयात् ॥ ७ ॥

[ विरा० ] ततः स्थाने तया सह वासे अभिशङ्का भवेद्यतः ॥ ४ ॥ आमन्त्रये निमन्त्रये दुहितुः; दुहित्रा (दे) शान्तं दान्तम् अभिमन्युमामन्त्रये । तस्य तया सह वासस्य ॥ ५ ॥ तस्याः कथं शुद्धिरित्यत्राह–स्नुषाया इति । पुत्रे अभिमन्युविषये । दुहितुः तव दुहितुः । स्नुषाया आत्मनि मयि । पुनः पश्चात् । अभिशङ्कां लोकस्यान्यादृशसंभावनाम् । नहि भुक्ता स्त्री पुत्राय केनचिद्दीयत इति भावः । वाद्वयमेवार्थे । न पश्याम्येत्र तेनैव ॥ ६ ॥ अभिमुखी शङ्का यस्य तस्मादुर्जनात् । मिथ्याऽधर्महेतुराचारो यस्य । अभिषङ्गादिति पाठे अभिषङ्गः पराभवे ॥ ७ ॥

[ विष० ] 'यथाऽऽत्मदुहिताङ्कस्था नत्रा पुत्रवधूरथ । आह्लादयति मेऽङ्गानि तथेयं भूपतेः सुता ’ । दुहिता इव ।

२ ज. सदाऽपश्यत्सुता तव । ३ क. °श्चाहं नर्तने गीतवादिते । ज. °श्चायं; व. °श्चाहं । ४ व. स्वाधीनया तया । ज. अभिशङ्का न चेत्स्थाने तव लोकस्य चाभिभोः । ५ ज. तस्मादामन्त्रये नाहं दुहितां पृथिवीपते ॥ शुद्धां जितेन्द्रियां दान्तां । क. तस्मादामन्त्रये त्वाद्य पुत्रार्थे मे विशाम्पते । ६ व. ज. स्नुषाया दुहितु° । ज. अभिशङ्कां न; व. अतः शङ्कां न । ७ व. अभिषङ्गादहं; ज. अतिवादादहं । व. ज. ड. मिथ्याचारात्परन्तप ।

१ 'शुद्धं जितेन्द्रियं शान्तं तस्य शुद्धिः कृता मया ’ इति पाठोऽस्योपलब्ध इति भाति । २ अत्रास्य 'अभिशङ्कात् ’ इति पाठोऽभिमतः ।

स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ।
दयितश्चक्रहस्तस्य सर्वास्त्रेषु च कोविदः ॥ ८ ॥
अभिमन्युर्महाबाहुः पुत्रो मम विशाम्पते ।
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ ९ ॥

**विराट उवाच—**

उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये ।
य एवं धर्मनित्यश्च जातज्ञानश्च पाण्डवः ॥ १० ॥
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामाः समृद्धा मे संबन्धी यस्य मेऽर्जुनः ॥११॥

**वैशम्पायन उवाच—**

एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वशासत्स संयोगं समये मत्स्यपार्थयोः ॥ १२ ॥
ततो मित्रेषु सर्वेषु वासुदेवे च भारत ॥
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ १३ ॥
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लव्यं विराटस्य समपद्यन्त सर्वशः ॥ १४ ॥
अभिमन्युं च बीभत्सुरानिनाय जनार्दनम् ।
आनर्तेभ्योऽपि दाशार्हानानयामास पाण्डवः ॥१५॥
काशिराजश्च शैब्यश्च प्रीयमाणौ युधिष्ठिरे ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती ॥ १६ ॥
अक्षौहिण्या च सहितो यज्ञसेनो महाबलः ।
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः ॥१७॥
धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः ।
समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
वेदावभृथसंपन्नाः सर्वे शूरास्तनुत्यजः ॥ १८ ॥
तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ।
पूजयामास विधिवत्सभृत्यबलवाहनान् ॥ १९ ॥
प्रीतोऽभवद्दुहितरं दत्त्वा तामभिमन्यवे ।
ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः ॥ २० ॥
तत्रागमद्वासुदेवो वनमाली हलायुधः ।
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ॥२१॥
अनाधृष्टिस्तथाऽक्रूरः साम्बो निशठ एव च ।
अभिमन्युमुपादाय सहमात्रा परन्तपाः ॥ २२ ॥
इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।
आययुः सहिताः सर्वे परिसंवत्सरोषिताः ॥ २३ ॥

---

वा इवार्थे । आत्मा वै जायते पुत्र इत्यात्मरूपे अत्राऽपि वा इवाऽर्थे ॥ ६ ॥

इति श्रीमहा० विषमपदविवरणे वि.प. द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ लक्षा० ] शुद्धं जितेन्द्रियं मान्यमित्यत्र शुद्धं जितेन्द्रियं मान्यं त्वां मे पुत्रार्थमिमामामन्त्रये । तत्र एतादृशकार्ये कृते सति शुद्धिः ममापि शुद्धिः कृता । पुत्रे स्वसृमात्रादिविषये आत्मनि स्वस्मिन् स्नुषायाः दुहितुर्वा विषये अतिशङ्कां न पश्यामीति योजना ॥ ६ ॥

[ नील० ] अन्वशासत् आज्ञापितवान् संयोगं विवाहसंबन्धम् ॥ १२ ॥ प्रेषयामास आह्वानार्थं दूतानिति शेषः ॥१३॥ उपप्लव्यं विराटनगरसमीपस्थं नगरान्तरम् ॥१४॥ वेदाध्ययनसंपन्ना इत्यपि पाठः ॥ १८ ॥

[ अर्जु० ] सुकृतं कृत्सं स्वस्रीयो भागिनेयः ॥ ८ ॥ अनुनीत् अनुमतवान् ॥ १२ ॥ आनर्तेभ्यः द्वारकाया दाशार्हान् दशार्हैः कृष्णपूर्वपुरुषस्तस्य वंशजान् ॥ १५ ॥ यज्ञसेनो द्रुपदः ॥ १७ ॥

[ चतु० ] तत्प्रकरणार्थमुपसंहरति—स्वस्रीय इति ॥८॥ उपपन्नं युक्तमुचितमिति यावत् ॥ १० ॥ यत्कृत्यं तत्त्वदधीनं सुकृतं वा । अनन्तरमव्यवहितम् ॥ ११ ॥ अन्वजानात् अनुज्ञातवान् । अन्वशासदिति पाठः ॥१२॥ प्रेषयामास चारानिति शेषः ॥ १३ ॥ निवृत्ते समतीते । उपप्लव्यं नाम नगरम् ॥ १४ ॥ यज्ञसेनो द्रुपदः ॥ १७ ॥ निशठो बलदेवात्मजः ॥ २२ ॥ इन्द्रसेनो युधिष्ठिरस्य सारथिः ॥ २३ ॥

[ सर्व० ] अन्वशासत् आज्ञापितवान् ॥ १२ ॥ प्रेषयामास आह्वानार्थं दूतान् ॥ १३ ॥ उपप्लव्यं विराटनगरसमीपस्थं नगरान्तरम् ॥ १४ ॥ आनर्तो देशः । दाशार्हाः यादवाः ॥ १५ ॥ अक्षौहिणी······॥ १६ ॥ हृदिकपुत्रः कृतवर्मा । सत्यकपुत्रो युयुधानः ॥ २१ ॥

[ विरो० ] यत्कृत्यं; यत्कृतं पर्याप्तं च । अनन्तरं शीघ्रम् ॥११॥ दत्त्वा स्वीकृत्य ॥ २० ॥

---

८ व. ज. बाल एवास्त्रकोविदः; क. बलवानस्त्रकोविदः । १० ज. एवं धर्मपुत्रश्च । व. ज्ञातज्ञानश्च; ज. ज्ञातज्ञेयश्च । ११ ज. कामाः प्रवृद्धा मे । १२ क. अन्वजानत संबन्धं; ज. व. ण. अन्वजानात्समं योगं; ग. घ. ज. अनुजानीत संबन्धं । १३ क. दूतान्मित्रेषु । १४ क. द्वितीयार्धस्थाने-उपप्लाव्ये विराटस्य वासं चक्रुः पुरोत्तमे; व. उपप्लव्ये विराटस्य । १५ व. तस्मिन्वसंस्तु वी° । व. दाशार्हमभिमन्युं च पा° । १७ व. ज. तेजस्वी यज्ञसेनो । १८ व. तृतीयार्धस्थाने-सर्वे शस्त्रास्त्रसंपन्नाः सर्वे युद्धविशारदाः । २२ व. प्रथमार्धस्थाने-अनावृष्णिस्तथाऽक्रूरः साम्बो निषद एव च ।

दशनागसहस्राणि हयानां च दशायुतम् ।
रथानामर्बुदं पूर्णं निखर्वं च पदातिनाम् ॥ २४ ॥
वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः ।
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् ॥ २५ ॥
परिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः ।
ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः ॥ २६ ॥
ततः शङ्खाश्च भेर्यश्च गोमुखाडम्बरास्तथा ।
पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि ॥ २७ ॥
उच्चावचान्मृगान् जघ्नुर्मेध्यांश्च शतशः पशून् ।
सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् ॥ २८ ॥
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः ॥ २९ ॥
सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ।
आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः ॥३०॥
वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलंकृताः ।
सर्वाश्चाभ्यभवन्कृष्णारूपेण यशसा श्रिया ॥ ३१॥
परिवार्योत्तरां तास्तु राजपुत्रीमलंकृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ॥ ३२ ॥
तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे धनञ्जयः ।
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा ॥ ३३ ॥
तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ।
स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ३४ ॥
प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ३५ ॥
तस्मै सप्त सहस्राणि हयानां वातरंहसाम् ।
द्वे च नागशते मुख्ये प्रादाद्बहुधनं तदा ॥ ३६ ॥
हुत्वा सम्यक्समिद्धाग्निमर्चयित्वा द्विजन्मनः ।
राज्यं बलं च कोशं च सर्वमात्मानमेव च ॥ ३७॥

---

[ नील० ] सुरा नानाद्रव्यसाररूपं मद्यं मैरेयं वृक्षरसरूपं मद्यम् ॥ २८ ॥ अभ्यभवन् अभिभूताः ॥ ३१ ॥ आत्मानमेव च प्रादादिति पूर्वेणान्वयः ॥ ३७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे विराटपर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ अर्जु० ] परिबर्हं नृपार्थमर्थं परिच्छदं वा । कृष्णो भगवान् वासुदेवो ददौ 'परिच्छदे नृपार्हेऽर्थे परिबर्हः' इत्यमरः ॥ २६ ॥ उच्चावचान् नानाविधान् पशून्, मृगानिति विशेषतः, मेध्यान् पवित्रान् ॥ २८ ॥ अभ्यभवत् अभिभूय स्थिता । श्रिया शोभया ॥ ३१ ॥

हिताय मन्दबुद्धीनां प्रीतये कृतिनां कृता ।
व्याख्या मिश्रार्जुनेनेयं सुखं धीरैर्विलोक्यताम् ॥
अल्पधीमन्दधीध्वान्तशान्तये कृतिनां मुदे ।
विराटदीपिकैषास्तु चिरं सच्चित्तवेश्मनि ॥

इति श्रीभारताचार्यश्रीमदर्जुनमिश्रकृतौ महाभारतव्याख्यायां
विराटपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ चतु० ] परिबर्हं नृपार्हमर्थं परिच्छदं वा । कृष्णः सदानन्दस्वरूपः । 'परिच्छदे नृपार्हेऽर्थे परिबर्होऽव्ययाः परे' इत्यमरः ॥ २६ ॥ उच्चावचान् उच्चान्महतः खड्गिमहिष्यादीन् । अवचाञ्छशकादीन् । अभ्यहारयन्नत्तुमिति शेषः ॥ २८ ॥ वैतालिकाः प्राबोधकाः ॥ २९ ॥ वर्णोपपन्नाः शोभनवर्णाः कुलीना वा । अभ्यभवदभिभूतवती ॥ ३१ ॥

[सर्व०] अन्धको······देशः ॥ २५ ॥ सुरा नानाद्रव्यसाररूपं मद्यं, मैरेयं वृक्षरसरूपं मद्यम् ॥ २८ ॥ वैतालिकाः मङ्गलपाठकाः ॥ २९ ॥ अभ्यभवन् अभिभूताः ॥ ३१ ॥

इति श्रीसर्वज्ञनारायणकृतौ भारतार्थप्रकाशे विराटपर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ विरो० ] परिबर्हं नृपार्हद्रव्यम् ॥ २६ ॥ मैरेयं मधुजन्यम् ॥ २८ ॥ वैतालिकाः पाणिस्वनिकाः ॥ २९ ॥ सर्वं २ सत्त्वं च जीवितं च ॥ ३७ ॥

[ लक्षा० ] नटा वैतालिकास्तथेत्यत्र वैतालिका तालधारिणः ॥ २९ ॥

व्यासायाप्रतिमेतिहासचरनोल्लासाय दुर्वादिनां
त्रासायासकराय सत्सु कृतविश्वासाय दोषद्विषे ।
भासा यामुनरम्यतोयसदृशायासायमासेविने
दासायाभयदायिमध्वगुरुहृद्वासाय तुभ्यं नमः ॥

इति श्रीमहाभारतव्याख्याने वादिराजतीर्थपूज्यचरणविरचिते
लक्षालंकारे वि.प. द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

२४ ज. त्रिंशन्नागस° । २५ व. वासुदेवं महामतिम् । २६ व. ज. ततो विवाहे विधिवत्प्रवृत्ते । २७ ण. संयुज्यमानैश्च; व. ज. संपूज्यमानास्तु । २८ व. प्रभूतान्युपहारयन् । ३० वि. आजग्मुर्द्रौपदीं कृष्णामभिवादयितुं नृप । सर्वाश्च ता अभ्यवदत्कृष्णा रूपश्रिश्रयान्विता । ३१ व. स्वरोपपन्नास्ता । व. °भ्यभवन्कृष्णां । ३२ व. तस्थू राजपुत्रीम° । ३६ क. तस्मै शत । व. मत्स्यः प्रा° । ३७ ग. श्लोकादौ–प्रादान्मत्स्यपतिर्हृष्टः प्रीत्यर्थमभिमन्यवे । सप्तत्रिंशच्छ्लोकोत्तरम्–' न्यवेदयत्पाण्डवेभ्यो विराटः प्रीतिमांस्तदा ' इति ज. पुस्तकेऽधिकम् ॥ °इति द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ३८ ॥
गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ।
भूषणानि च मुख्यानि यानानि शयनानि च ॥ ३९ ॥
भोजनानि च हृद्यानि पानानि विविधानि च ।
तन्महोत्सवसंकाशं हृष्टपुष्टजनावृतम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ४० ॥

इति श्रीमहाभारते विराटपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

समाप्तं वैवाहिकपर्व । समाप्तं चेदं विराटपर्व ।

---

अतः परमुद्योगपर्व ॥ तस्यायमाद्यः श्लोकः—

वैशम्पायन उवाच—

कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाभिमन्योर्मुदिताः स्वपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥ १ ॥

---

[ श्रवणस्येतिकर्तव्यता ]

*श्रुत्वा वैराटकं पर्व वासांसि विविधानि च ।
हिरण्यं धान्यं गाश्चैव दद्याद्वित्तानुसारतः ॥ १ ॥
प्रीतये देवतानां वै दद्याद्वै द्विजमुख्यके ।
वाचके तु सुसंतुष्टे तुष्टाः स्युः सर्वदेवताः ॥ २ ॥
ब्राह्मणान्भोजयेच्छक्त्या पायसैः सर्पिषा सितैः ।
एवं श्रुते च वैराटे सम्यक् फलमवाप्नुयात् ॥ ३ ॥

---

[ चतु० ] उपाहरत् दत्तवान् । भगव(द्?)त्तस्या (वंद्या? क्षय्यत्वाद्) द्विजानामनन्ता तुष्टिर्भवित्री ममापि तेन वित्तेन अहीनता भाविनीत्यभिप्रायो वासुदेवदत्तवित्तदानस्य ॥ ३८ ॥ खेचरं देवपूर्वम् । खेचरं भरतर्षभेति वा पाठः ॥ ४० ॥

श्रीकृष्णसेवा कस्मै वा फलहेतुर्न जायते ।
काज्ञातवासः क जयः क वा श्रीकृष्णसङ्गतिः ॥
विराटपर्वव्याख्यानं यद्वर्णमिव(?) भूषणम् ।
सुचिरं शोभतां प्रीत्या श्रीरामचरणेऽर्पितम् ॥
स्वस्वान्तध्वान्तनाशाय ज्ञानार्थप्रतिपत्तये ।
विज्ञाने भरतोपायप्रकाशोऽयं मया कृतः ॥

इति श्रीचतुर्भुजमिश्रकृतायां महाभारतटीकायां विराटपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[विरो०] कृते कारिते ॥ ३८ ॥

इति श्रीमहाभारतटीकायां विरोधार्थभञ्जन्यां विराटपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

*ज. फलश्रुतिः—

श्रुत्वा तु चरितं पुण्यं पाण्डवानां महात्मनाम् ।
नाधिव्याधिभयं तेषां जायते पुण्यकर्मणाम् ॥
दुर्गतेस्तरणे तेषामायतं तरणं भवेत् ।
सुभिक्षं क्षेममारोग्यं पुण्यवृद्धिः प्रजायते ॥
सर्वपापानि नश्यन्ति जायन्ते सर्वसंपदः ।
एकाकी विजयेच्छत्रून्स्मृत्वा फाल्गुनकर्म च ॥
ईतयः संप्रणश्यति न वियोगः प्रिये जने ।

[ अनुक्रमणी ]

वैशम्पायन उवाच—

अत ऊर्ध्वं निबोधेदं वैराटं बहु विस्तरम् ॥
विराटनगरं गत्वा श्मशाने विपुलां शमीम् ॥
दृष्ट्वा संनिदधुस्तत्र पाण्डवा आयुधानि च ।
यत्र प्रविश्य नगरं छद्मनान्यवसंस्तु ते ॥
दुष्टात्मनां वधो यत्र कीचकानां वृकोदरात् ।
गोग्रहे यत्र पार्थेन निर्जिताः कुरवो युधि ॥
गोधनं च विराटस्य मोक्षितं यत्र पाण्डवैः ।
विराटेनोत्तरा दत्ता स्नुषार्थं च किरीटिनः ॥
अभिमन्युं समुद्दिश्य सौभद्रमपराजितम् ।
चतुर्थमेतद्विपुलं विराटपर्व चोत्तमम् ॥

ज. व.

विराटपर्वणि तथा व्यासेनोक्ता महात्मना ।
अध्यायाः सप्ततिर्ज्ञेया तथा द्वौ च प्रसंख्यया ॥
श्लोकानां च सहस्रे द्वे तथा पंच शतानि च ।
योऽधीते भारतं पुण्यं ब्राह्मणो नियतः शुचिः ॥
चतुरो वार्षिकान्मासान् सर्वपापैः प्रमुच्यते ॥

---

समाप्तमिदमुपलब्धयावट्टीकोपेतं विराटपर्व ।

शुभमस्तु

# 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

१ **श्रीमद्भगवद्गीता प्रथमो गुच्छः Bhagavat-Geeta with 7 commentaries–** आनन्दगिरिकृतटीकासंवलितशांकरभाष्य—जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय ( माध्व ) भाष्य–रामानुजभाष्य–पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी–नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... ... ... ... ... ... ६-०-० ० -७-० (मूल्यं मार्गव्ययः)

२ **श्रीमद्भगवद्गीता द्वितीयो गुच्छः Bhagavat-Geeta with 8 other commentaries–** निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता–'**तत्त्वप्रकाशिका**' श्रीमधुसूदनसरस्वतीकृता–'**गूढार्थदीपिका**' श्रीशङ्करानन्दप्रणीता–'**तात्पर्यबोधिनी**' श्रीधरस्वामिकृता—'**सुबोधिनी**' श्रीसदानन्दविरचितः—'**भावप्रकाशः**' श्रीधनपतिसूरिविरचिता–'**भाष्योत्कर्षदीपिका**' दैवज्ञपण्डितश्रीसूर्यविरचिता '**परमार्थप्रपा**' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–'**अर्थसंग्रहः**' इत्येताभिर्व्याख्याभिः सहिता । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति । मू. रू. १०-०-० ०-१५-०

३ **उत्तरगीता Uttara-Geeta with a commentary**—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ... ... ... ... ०-३-० ०-०-६

४ **श्रीमद्वाल्मीकिरामायणम् । बालकाण्डम् Valmiki Ramayana with 3 well-known commentaries, Bal Kanda** सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च सप्तभिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । मूल्यम् रू. ... ३-०-० ०-५-०

**अयोध्याकाण्डम् । द्वितीयखण्डम् Ayodhya Kanda,**—उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ५-०-० ०-७-०

**अरण्यकाण्डम् । तृतीयखण्डम् । Aranya Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. २-१२-० ०-६-०

५ **स्तोत्रमुक्ताहारः–Stotra-muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वमसुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकमसुमिति । मूल्यम् रू. ०-८-० ०-२-०

६ **संस्कारमयूखः—Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशं दुर्बोधो विपरीतबोधकरश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ... ... ... ... ... ... ... ... ०-१२-० ०-१-०

७ **आचारमयूखः—Achara Mayukha** नीलकंठभट्टकृतः । प्रातःस्मरणादिशयनान्तस्याह्निकक्रियाकलापस्य निरूपणपरो ग्रन्थः । मूल्यम् ... ... ... ... ... ... ०-८-० ०-१-०

८ **मनुस्मृतिः—Manu Smriti** कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... ... ... ... ... ... १-८-० ०-३-०

९ **विदुरनीतिः–Vidura-Niti with a commentary** संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ... ... ... ... ... ०-४-० ०-१-०

१० **वेदान्तरहस्यम्–Vedanta Rahasya** वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू. ... ... ... ०-१-० ०-०-६

| | मूल्यं | मार्गव्यय |
|---|---|---|
| ११ विशिष्टाद्वैतमतविजयवादः—Vishishtadvaita = Mata = Vijaya = Vada नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ... ... ... ... ... ... ... ... | ०-१-० | ०-०-६ |
| १२ रघुवंशमहाकाव्यम्—Raghuvamsha Mallinatha's commentary श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... ... | ०-१०-० | ०-३-० |
| १३ रघुवंशमहाकाव्यं—Only First Five Sargas मल्लिनाथकृतटीकोपेतम् । सर्गाः १-५ | ०-४-० | ०-१-० |
| १४ कुमारसंभवं महाकाव्यम्—KumarSambhav with 3 known commentaries कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... ... ... ... ... ... ... | १-४-० | ०-२-० |
| १५ कारिकावली सिद्धान्तमुक्तावलीसहिता—Karikavalee with Siddhanta-Muktavali and other notes न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूधाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू. ... ... ... ... ... | ०-७-० | ०-१-३ |
| १६ वैशेषिकदर्शनम्—Vaisheshika Darshana with several commentaries श्रीशंकरमिश्रकृत-वैशेषिकसूत्रोपस्कार-जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत-विवृति-चन्द्रकान्तभट्टाचार्यप्रणीत-भाष्यसहितम् । मू. रू. ... ... ... ... ... ... | २-०-० | ०-३-० |
| १७ वादार्थसंग्रहः (प्रथमो भागः)—Vadartha Samgraha First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरसुपकारकः । मू. रू. ... ... ... ... ... ... ... ... | ०-६-० | ०-०-६ |
| १८ वादार्थसंग्रहः (द्वितीयोभागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रू. | ०-६-० | ०-०-६ |
| १९ महाभागवतम्—Maha Bhagavata देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि । प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः । सार्धपञ्चसाहस्री संहितेयम् मू. रू. ... ... ... | २-०-० | ०-३-० |
| २० तैत्तिरीयोपनिषत्—Taittiriya = Upanishat श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मू. रू. ... ... ... ... ... | १-०-० | ०-२-० |
| २१ दशरूपकम्—Dasha Rupaka नाट्यशास्त्रं धनञ्जयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च । मू. रू. ... ... ... ... ... ... | १-०-० | ०-२-० |
| २२ ब्रह्मसूत्रवृत्तिः—Brahma Sutra Vritti अद्वैतमञ्जरी । भगवत्पाद(आद्यशंकराचार्य)शिष्यकृता । मू. रू. .. ... ... ... ... ... ... ... ... ... | ०-१२-० | ०-२-० |
| २३ चन्द्रालोकः—Chandraloka with a commentary श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्ववैद्यनाथ (बाळंभट्ट) विरचितरमाख्यव्याख्यासहितः मू. रू. ... ... | ०-८-० | ०-१-० |

'गुजराती' मुद्रणालयाधिपतिः ।

कोट, सर्कल, सासून बिल्डिंग—मुंबई.